# BRAHMASŪTRAVṚTTI MITĀKṢARĀ

OF

# ANNAMBHAṬṬA

CRITICALLY EDITED WITH INTRODUCTION

BY

**Sri. P. S. RAMA SASTRI,**

*Professor of Vedanta Madras Sanskrit College, Mylapore.*

---

GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS

**1950**

**Price Rs.**

# INTRODUCTION

The Government of Madras took up for consideration the question of publication of the various manuscripts in different languages on subjects like philosophy, Medicine, Science, etc., early in May 1948. Important Manuscript Libraries in the Madras presidency were requested to send a list of unpublished manuscripts with them for favour of being considered by the Government for publication. The Honorary Secretary of the Tanjore Maharaja Serfoji's Sarasvathi Mahal Library, Tanjore, alone complied with this request. This list as well as a similar list of unpublished manuscripts in the Government Oriental Manuscripts Library, were carefully examined and a tentative selection of manuscripts suitable for publication was made. The Government in their Memorandum No. 34913/48-10, Education, dated 4-4-1949, constituted an Expert Committee with the Curator of the Government Oriental Manuscripts Library, Madras, as the Secretary, for the final selection of manuscripts suitable for printing and for estimating the cost of publication.

The following are members of the Committee:—

1. Sri T. M. Narayanaswami, Pillai M.A., B.L.,
2. ,, R. P. Sethu Pillai, B.A., B.L.,
3. ,, C. M. Ramachandra Chettiar, B.A., B.L.,
4. ,, R. Krishnamoorthy, (Kalki)
5. Dr. N. Venkataramanayya, M.A., Ph.D.,
6. Sri M. Ramanuja Rao Naidu, M.A., L.T.,
7. ,, V. Prabhakara Sastri.
8. ,, N. Venkata Rao, M. A.,
9. ,, H. Sesha Ayyangar.
10. ,, Masthi Venkatesa Ayyangar, M.A.,

11. Sri M. Mariappa Bhat, M.A., L.T.,
12. Dr. C. Achyuta Menon, B.A., Ph.D.,
13. „ C. Kunhan Raja, M.A., D. Phil.,
14. „ A. Sankaran, M.A., Ph.D., L.T.,
15. Sri P. S. Rama Sastri.
16. „ S. K. Ramanatha Sastri.
17. Dr. M. Abdul Haq, M.A., D.Phil. (Oxon)
18. Afzul-ul-Ulama Hakim Khader.
19. Sri P. D. Joshi.
20. „ S. Gopalan, B.A., B.L.
21. „ T. Chandrasekharan, M.A., L.T.,

The members of the Committee formed into Sub-Committees for the various languages, Sanskrit, Tamil, Telugu, Kannada, Malayalam, Mahrathi and Islamic Languages. They met during the month of May, 1949, at Madras and Tanjore to examine the manuscripts and make a selection. The recommendations of the Committee were accepted by the Government in G. O. No. Mis. 2745 Education, dated 31-8-1949 and they decided to call these publications as the "MADRAS GOVERNMENT ORIENTAL SERIES," and appointed the Curator, Government Oriental Manuscripts Library, Madras, as the General Editor of the publications.

The following manuscripts have been taken up for publication during the current year:

"A" FROM THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS.

TAMIL

1. Kappal Śāttiram.
2. Anubhava Vaidya Murai
3. Āttānakōlāhalam
4. Upadēśa Kāṇḍam
5. Cōḻan Pūrva Paṭṭayam

6. Koṅga Dēśa Rājākkal
7. Sivajñāna Dīpam
8. Sadāśiva Rūpam, with commentary.

## TELUGU

1. Saṅgītaratnākaramu
2. Auṣadha Yōgamulu
3. Vaidya nighaṇṭuvu
4. Dhanurvidyā Vilāsamu
5 Yōga Darśana Viṣayamu
6. Khaḍga Lakṣaṇa Śirōmaṇi

## SANSKRIT

1. Viṣanārāyaṇīyam
2. Bhārgava Nāḍikā
3. Hariharacaturaṅgam
4. Brahmasūtravṛtti—Mitākṣarā
5. Nyāyasiddhānta Tattvāmṛtam

## MALAYALAM

1. Garbha Cikitsa
2. a. Vāstulakṣaṇam
   b. Śilpaśāstram
   c. Silpaviṣayam.
3. Mahāsāram
4. Kaṇakkusāram
5. Kriyākramam

## KANNADA

1. Lōkōpakāra
2. Raṭṭamata
3. Dīkṣābōdhe
4. Aśvaśāstram
5. a. Auṣadhagaḷu
   b. Vaidyaviṣaya
6. Saṅgītaratnākara
7. Sūpaśāstra.

## ISLAMIC LANGUAGES

1. Jamil-Al-Ashya
2. Tibb-E-Faridi
3. Tahqiq-Al-Buhran
4. Safinat-Al-Najat

---

## "B" FROM THE TANJORE MAHARAJA SERFOJI'S SARASVATHI MAHAL LIBRARY, TANJORE

### TAMIL

1. Śarabhēndravaidya Murai (Diabetes)
2. Do (Eyes)
3. Agastiyar 200
4. Koṅkaṇarśarakku Vaippu
5. Tiruccirrambalakkōvaiyār with Padavurai
6. Kālacakram
7. Tāḷasamudram
8. Bharatanāṭyam
9. a. Pāṇḍikēli Vilāsa Nāṭakam
   b. Purūrava Cakravarti Nāṭakam
   c. Madana Sundara Vilāsa Nāṭakam
   d. Percy Macqueen's Collection in the Madras University Library on Folklore.
10. Rāmaiyan Ammānai
11. Tamil Pāḍalkaḷ including paṭṭiṇattār Veṇbā and Vaṇṇaṇkal

### TELUGU

1. Kāmandakanītisāramu
2. Tāḷadaśāprāṇapradīpika
3. a. Raghunātha Nāyakābhyudayamu
   b. Rājagōpāla Vilāsamu
4. Rāmāyaṇamu by Kaṭṭa Varadarāju

## MAHRATHI

1. Nāṭyaśāstra Saṅgraha
2. a. Book of Knowledge
   b. Folk Songs.
   c. Dora Darun]Veṇi Paddhati
   d. Aśvasa Catula Dumani
3. a. Pratāpasimhendra Vijava Prabandha
   b. Śarabhēndra Thirthāvaḷi
   c. Lāvaṇi
4. Dēvēndra Kuravañji
5. Bhakta Vilāsa
6. Ślōka Baddha Rāmāyaṇa

## SANSKRIT

1. Aśvaśāstra with Tricolour Illustrations
2. Rājamṛgāṇka
3. Cikitsāmṛtasāgara
4. Āyurvēdamahōdadhi
5. Gīta Gōvinda Abhinaya
6. a. Cōḷacampū
   b. Sāhēndra Vilāsa
7. Dharmākūtam - Sundara Kāṇḍa
8. Jātakasāra
9. Viṣṇutattvanirṇaya Vyākhyā
10. Saṅgīta Darpaṇa
11. Bījapallava

It is hoped that the publication of most of the important manuscripts will be completed within the next four years.

Some of the manuscripts taken up for publication are represented by single copies in the Library and consequently the mistakes that are found in them could not be corrected by comparing them with other copies. The editors have, however, tried their best to suggest correct readings. The wrong readings are given in round brackets and correct readings have been sugges-

ted in square brackets. When different readings are found, they have been given in the foot-notes except in the case of a few books, in which the correct readings have been given in the foot-note or incorporated in the text itself.

The Government of Madras have to be thanked for financing the entire scheme of publication although there is a drive for economy in all the departments. My thanks are due to the members of the Expert Committee who spared no pains in selecting the manuscripts for publication. I have also to thank the various editors, who are experts in their own field, for readily consenting to edit the manuscripts and see them through the Press. The various Presses that co-operated in printing the manuscripts in the best manner possible also deserve my thanks for the patience exhibited by them in carrying out the corrections made in the proofs.

This edition of Brahamasūtravṛtti (Mitākṣarā) is based on the following manuscripts :—

1. A paper manuscript preserved in the Govt. Oriental Manuscripts Library, Madras, under R. No. 1675, 10¾ × 9½ inches in size and consisting of 154 folios having 20 lines on a page. It is in Devanāgari character and complete. This is a transcribed copy of a manuscript of Duvvuri Lakshminarayana Somayajulu of Mukkamala Amalapuram Taluk.

2. A palm-leaf manuscript of the Govt. Oriental Manuscripts Library Madras, 13¼ × 1⅜ inches in size containing 161 folios of 6 lines to a page. It is in good condition and written in Telugu script. It bears R. No. 3478. This was purchased from Ballamudi Daksinamurthi Sastri of Chicacole, Ganjam District, and is incomplete.

3. A paper manuscript from the Government Oriental Manuscripts Library. Madras, bearing R. No. 8777. It is written in Devanagari script and is in good condition. Incomplete. This was transcribed from a manuscript of Iruvinti Venkatasubbiah of Kurukonda, Atmakur Post, Kurnool District.

We express our thanks to them who were good enough to lend their manuscripts to take a transcript of the same for this library.

Reference is to be made to the good work done by Sri V. R. Kalyanasundaram, Siromani, M. S Vaidyanathan, Siromani and T. H. Viswanathan, Siromani, the pandits of this library in going through the proofs.

Govt. Oriental
Manuscripts Library,
Madras.

**T. Chandrasekharan,**
General Editor,
Madras Govt. Oriental Series.

॥ श्रीः ॥

# ॥ प्रास्ताविकम् ॥

---

ऋतबोधसत्यभाषणधर्माचरणैर्मनोवचःकायैः ।
जगदुपकर्त्रे जगतां गुरवे कलये नमस्त्रिभिः करणैः ॥

एकमेव वेदप्रतिपाद्यं वस्तु करणत्रयोपाधिनिबन्धनैः बुध्यमानत्वोच्यमानत्वानुष्ठीयमानत्वधर्मैः क्रमेण ऋतं, सत्यं, धर्मः, इति त्रिधा श्रुतिषु व्यपदिश्यते इत्यवधेयम् ।

सुविदितमेवेदमखिलेऽपि भारते वर्षे—यत् श्रीबादरायणापराभिधानवेदव्यासमहर्षिप्रवरप्रणीतं श्रीब्रह्मसूत्रं मुमुक्षुपुरुषसर्वस्वमिति ।

तदिदं वेदविभागकरणात् वेदव्यास इति, बदरिकाश्रमनाम्ना प्रथिते बदरवृक्षप्राचुर्यात् बादरसंज्ञिते तपोवने निवासात् बादरायण इति च, सुप्रसिद्धस्य श्रीमन्नारायणज्ञानशक्त्यवतारभूतस्य भगवतः श्रीकृष्णद्वैपायनमहर्षेः कर्तुः निरूपणपरेण नाम्ना व्याससूत्रमिति बादरायणसूत्रमिति च व्यपदिश्यते ।

ब्रह्मसूत्रं, ब्रह्ममीमांसा, शारीरकं, शारीरकमीमांसा, इति च प्रतिपाद्यनिरूपणपरैर्नामभिर्निर्दिश्यते भाष्यवृत्त्यादिषु प्राचीनेष्वर्वाचीनेषु च बहुषु ग्रन्थेषु ।

“शरीरमेव शरीरकं, शरीरके भवः शारीरको जीवः, तमधिकृत्य कृतो ग्रन्थः शारीरकः । तदिह वेदान्तानां जीवस्य तत्त्वमधिकृत्य प्रवृत्तानां ब्रह्मरूपतायां पर्यवसानमिति कथयितुं प्रणीतानां सूत्राणां शारीरकं जीवतत्त्वमधिकृत्य कृतत्वमस्तीति शारीरकाभिधानम्” इति श्रीपद्मपादाचार्यप्रणीतायां पञ्चपादिकायां, “शरीरमेव शरीरकं, तत्र निवासी शारीरको जीवात्मा, तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपता मीमांसा या सा तथोक्ता” “पूजितविचारवचनो मीमांसाशब्दः । परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलतया च विचारस्य पूजितता” इति श्रीवाचस्पतिमिश्रप्रणीतायां भामत्यां च शारीरकभाष्यटीकायां क्रमेण शारीरकं शारीरकमीमांसा इति नामद्वयं कृतनिर्वचनम् ।

पूजितविचारवाची मीमांसाशब्दः विचारोपयोगिन्यायग्रथनार्थसूत्रसन्दर्भरूपे शास्त्रे लाक्षणिकः ।

ब्रह्ममीमांसाया ब्रह्मविषयिण्या एव शारीरकं शारीरकमीमांसा इति प्राचीनार्वाचीनसर्वग्रन्थकारसंप्रतिपन्नं नामद्वयं शारीरकस्य जीवस्यैव शोधितं तत्वं ब्रह्मस्वरूपं इति जीवब्रह्मैक्यतात्पर्यकम् । अन्यथा जीवब्रह्मभेदे, ब्रह्ममीमांसायाः शारीरकाख्यजीवमधिकृत्य कृतत्वाभावात् तद्विषयत्वाभावाच्च तन्नामद्वयस्याननुगतार्थत्वापातात् ।

श्रीरामानुजभाष्यटीकायां श्रुतप्रकाशिकायां तु "शारीरकं ब्रह्ममीमांसा । जगच्छरीरकः परमात्मा शारीरः, 'तस्यैष एव शारीर आत्मा' इति श्रुतेः । तद्विषयं शास्त्रं शारीरकमित्युच्यते" इत्युक्तम् । तथा व्याख्यानं च तन्मते जीवब्रह्मभेदाभ्युपगमात् ।

परन्तु 'अनुपपत्तेस्तु न शारीरः' (१-२-३) 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (१-२-२०) इति सूत्रद्वये शारीरसंज्ञया जीवं व्यपदिशन् भगवान् बादरायणः स्वीयब्रह्मसूत्रनाम्नि शारीरकं शारीरकमीमांसा इति शब्दद्वये प्रतिपाद्यकोटौ जीवमेवाभिप्रैतीति ज्ञायते ।

तस्मिंश्च सूत्रे शारीरपदं भगवत्पादभाष्ये "शारीर इति शरीरे भव इत्यर्थः । नन्वीश्वरोऽपि शरीरे भवति । सत्यं शरीरे भवति । न तु शरीर एव भवति । 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' 'आकाशवत्सर्वगतश्च नित्यः' इति च व्यापित्वश्रवणात् । जीवस्तु शरीर एव भवति । तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्" इति व्याख्यातम् । जीवपरमेव च तत्पदं सर्वैरपि स्वस्वभाष्ये व्याख्यातम् ।

ब्रह्मणश्चान्तर्यामिरूपेण वा स्वरूपेण वा शरीर एव भवत्वाभावेन शारीरसंज्ञा न संगच्छते । सर्वत्र सतः शरीरेऽपि सत्त्वाभिप्रायेण तु शारीरत्वं ब्रह्मणो न व्यपदेष्टुमुचितं, 'असाधारण्येन हि व्यपदेशा भवन्ति' इति न्यायात् । जीवस्य तु औपाधिकरूपेण शरीर एव भवत्वात् उपपन्ना शारीरसंज्ञा ।

पारिभाषिकं, अन्तर्यामिब्राह्मणे व्यपदिश्यमानं गौणं वा, जगतो भगवच्छरीरत्वमंगीकृत्य परमात्मनश्शारीरत्वं तद्विषयकशास्त्रस्य च शारीरकसंज्ञकत्वं यद्वर्ण्यते, तन्मुख्यार्थे संभवति नोपादेयम् ।

तस्मात् शारीरसंज्ञायाः संज्ञित्वेन सूत्रकृदभिमतस्य तत्संज्ञया सर्वैरपि व्यवहृतस्य जीवस्यैव शारीरकादिनामप्रवृत्तिनिमित्तकोटावन्तर्भावौचित्यात् जीवब्रह्माभेदतात्पर्यकमेव तन्नाम ब्रह्ममीमांसाया इति सिद्धम् ।

वेदपूर्वोत्तरभागयोः उत्तरभागभूतस्य उपनिषत्संज्ञितस्य वेदान्तस्य विचाररूपत्वाच्च ब्रह्मसूत्रस्य उत्तरमीमांसा औपनिषदमीमांसा वेदान्तमीमांसा इति प्रमाणनिरूपणपरैर्नामभिः व्यवहारः ।

अध्यायसंख्यया च द्वादशलक्षणी, अष्टाध्यायी, इतिवत् चतुर्लक्षणी इत्यपि तस्य व्यवहारः ।

'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (पा-सू-४-३-१२०) इति भगवत्पाणिनिसूत्रे च 'णिनिस्स्यात्, पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणः भिक्षवः, शैलालिनो नटाः' इति सिद्धान्तकौमुद्यां व्याख्याते पराशरसूनुव्यासमुनिकृतमिदं ब्रह्मसूत्रं भिक्षुसूत्रमित्यपि कथ्यते ।

'भिक्षवः संन्यासिनः, तदधिकारिकं सूत्रं भिक्षुसूत्रं व्यासप्रणीतं प्रसिद्धम्' इति बालमनोरमाकृतविवरणानुसारेण भिक्षुरूपाधिकारिनिरूपणपरं तन्नाम ।

यत्तु शब्देन्दुशेखरे---"भिक्षुसूत्रं भिक्षुत्वसंपादकं सूत्रं, यथा नटसूत्रं, नटसूत्रज्ञाने हि नटत्वसंपत्तिः, एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात् कर्मसु अनादरेण भिक्षुत्वसंपत्तेः । 'वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः' इति मनूक्तेः । संन्यस्य श्रवणं कुर्यात्' इत्यस्य संन्यस्य श्रवणमेव कुर्यादित्यर्थः । एतेन भिक्षुमात्राध्येयत्वेन भिक्षुसूत्रत्वमस्येत्यपास्तम् । भिक्षव इति भिक्षुत्वयोग्या इत्यर्थः" इति कौमुदीव्याख्यानेन भिक्षुसूत्रनाम्नः अधिकारिनिरूपकत्वखण्डनं कृतं, तच्चिन्त्यम् । भिक्षुसूत्रपदेन स्वरसतो जायमानां सूत्रस्य भिक्ष्वधिकारिकत्वप्रतीतिं व्युदस्य भिक्षुत्वप्रापकत्वरूपक्लिष्टार्थवर्णनायोगात् ।

'सहकार्यन्तरविधिः' (३-४-४७) इति ब्रह्मसूत्रभाष्ये "तद्वतः विद्यावतः संन्यासिनः बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते । कथं च विद्यावतः संन्यासिन इत्यवगम्यते ? तदधिकारात् । आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति इति" इति संन्यासिन एव पाण्डित्यशब्दितवेदान्तविचाराधिकारित्वप्रतिपादनात् ।

तत्र भामत्यामपि 'संन्यासिनः भिक्षोः । तदधिकारात्, भिक्षोस्तदधिकारात्' इति भिक्षुसूत्रनामव्युत्पादनायेव विशिष्य भिक्षुपदमुपादाय भिक्ष्वधिकारिकत्वस्फुटीकरणाच्च । 'श्रवणादीनाञ्च संन्यासाश्रमधर्मत्वात्.' इति तत्र प्रकटार्थविवरणेऽपि तथैवोक्तत्वाच्च ।

'त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥'

इति वार्तिकेऽपि वेदान्तानां भिक्ष्वधिकारप्रदर्शनाच्च ।

'दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु' इति 'अन्तरा चापि तु तद्दृष्टेः' (३-४-९) इत्यधिकरणभाष्योक्तन्यायेन संन्यासरहितानामपि प्रतिषेधाभावमात्रेण वेदान्तेष्वमुख्याधिकारसद्भावेऽपि मुख्याधिकारः भिक्षोरेवेति भाष्य-वार्तिकादिषु कृतपरिचयानां न तिरोहितम् । तस्मात् भिक्ष्वधिकारिकं सूत्रं भिक्षु-सूत्रमित्येव व्याख्यानं युक्तं प्रतिभाति ।

किञ्च—ब्रह्मसूत्रं भिक्षुव्यतिरिक्तैरपि अध्येयमिति समर्थयितुं भिक्षुत्वप्रापकं सूत्र-मिति नामार्थनिरूपणक्लेशोऽनावश्यकः । यतः विद्यारण्यश्रीचरणैः जीवन्मुक्तिविवेकप्रकरणे 'अयञ्च वेदनहेतुः विविदिषासंन्यासः जन्मापादककाम्यकर्मादित्यागमात्रात्मकः प्रैषोच्चा-रणपूर्वकं दण्डधारणाद्याश्रमरूपश्चेति' इति, 'ब्रह्मचारिगृहस्थवानप्रस्थानां केनचिन्नि-मित्तेन संन्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसः कर्मादित्यागो न विरुद्ध्यते' इति च निर्णीतत्वात् जिज्ञासासूत्रगताथशब्दार्थसाधन-चतुष्टयसंपन्नस्य ब्रह्मसूत्राधिकारिसामान्यस्यान्ततः काम्यकर्मादित्यागमात्रात्मकविविदिषा-संन्यासस्य मानससर्वकर्मत्यागस्य वावश्यंभावात् भिक्षुत्वमवर्जनीयमापतति । तस्मात् अधिकारिनिरूपकं भिक्षुसूत्रमिति नाम इत्यत्र न कोऽपि दोष इत्यलम् ।

'सेयं ब्रह्ममीमांसा 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' इत्याद्युक्तबह्वर्थसूचकत्वरूपविश्वतोमुखत्वादिसूत्रलक्षणलक्षिता ब्रह्मसूत्रमिति जोघुष्यते ।

कर्मयोगप्रतिपादकः कर्मकाण्डरूपः वेदपूर्वभागः पूर्वमीमांसायां धर्मसूत्रे व्यास-शिष्येण भगवता जैमिनिना विचारितः । उपासनापरनामधेयस्नेहपूर्वानुध्यानरूपभक्तियोग-ज्ञानयोगप्रतिपादकः सगुणनिर्गुणब्रह्मप्रतिपादकोपासनाज्ञानकाण्डद्वयात्मकः वेदान्ता-परनामा वेदोत्तरभागः भगवता व्यासेनास्मिन् ब्रह्मसूत्रे उत्तरमीमांसायां विचारितः ।

मन्दमध्यमोत्तमाधिकारिणामनुग्रहार्थप्रवृत्तकर्मभक्तिज्ञानयोगेषु निरूपणीयांशाना-मधिकारिवत् क्रमेण न्यूनत्वादेव पूर्वमीमांसातः उत्तरमीमांसायाः तत्रापि सगुणविचार-भागात् निर्गुणविचारभागस्य, व्याख्येयवेदभागवदेव न्यूनत्वमित्यवगन्तव्यम् ।

वेदान्तानां हि द्विधा प्रवृत्तिः निर्गुणब्रह्मरूपवस्तुप्रकाशनेन सगुणब्रह्मोपासनाविधानेन च ।

भगवत्पादैरपि 'द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम्' 'सहस्रशो विद्याऽविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि' 'एकमपि ब्रह्मापेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषु उपदिश्यते' इत्यानन्दमयाधिकरणे (१-१-६)

परमार्थावस्थायां (ईशित्रीशितव्यादि) सर्वव्यवहाराभावं वदन्ति वेदान्तास्सर्वे व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एषसेतुर्विधरण एषां लोकानामसंभेदाय' इति' इति आरंभणाधिकरणे। (२-१-६)।

'किं द्वे ब्रह्मणी परमपरञ्चेति ? बाढं द्वे, 'एत द्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्यादिदर्शनात् । किं पुनः परं ब्रह्म किमपरमिति ? उच्यते। यत्र विद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैः ब्रह्मोपदिश्यते तत्परम्। तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' इत्यादिशब्दैस्तदपरम्।' इति कार्याधिकरणे च (४-३-५) द्विविधं ब्रह्म वेदान्तेषूपदिश्यते इति निर्धारितम्।

परं तु 'स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति अन्तस्तद्धर्माधिकरणे (१-१-७) 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति' इति व्यतिहाराधिकरणे च (३-३-२३) सविशेषब्रह्मस्वरूपस्यापारमार्थिकत्वेऽपि नासत्त्वं प्रतिभासिकत्वं वा, किन्तु व्यावहारिकत्वमिति निर्धारितम्।

यद्यपि तत्वतो निरस्तसमस्तोपाधिरूपं ब्रह्म, तथापि न तेन रूपेण शक्यमुपदेष्टुमित्युपहितेन रूपेणोपदेष्टव्यम्। तत्र च क्वचिदुपाधिविवक्षया उपहितगोचराणि उपासनानि विधीयन्ते। उपासनानां चित्तशुद्धिचित्तैकाग्रताद्वारेण सगुणपरमेश्वरप्रसादद्वारेण च निर्विशेषज्ञानोपकारकत्वात् । तच्चोपासनाप्रकरणमित्युच्यते। तस्यापि प्रकरणस्य निर्गुणे ब्रह्मणि परमतात्पर्यम्। सगुणे अवान्तरतात्पर्यम् । तदुक्तं संक्षेपशारीरके—

सगुणवाक्यमपीह समन्वितं भवति निर्गुणवस्तुनि सर्वशः ।
न खलु निर्गुणवस्तुसमन्वयं न सहते सगुणस्य समन्वयः ॥

सत्यासत्यवपुस्तथा हि सगुणं ब्रह्मास्य विद्या तथा
तद्वत्तद्विषयस्य वेदवचसस्तात्पर्यमेवंविधम् ।
तेनावान्तरमस्य वेदवचसस्तात्पर्यमन्यादृशं
चान्यन्निर्गुणवस्तुतत्वविषयं संकीर्त्यते भागशः ॥ इति ॥

यत्र पुनरुक्तोऽप्युपाधिरविवक्षितः, तन्निर्विशेषप्रकरणमित्युच्यते । तत्रापि निर्विशेषवस्तुज्ञापनं द्विधा भवति परप्रतिषेधेन विधिमुखेन च । यथा 'नेति नेति' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ऐतदात्म्यमिदं सर्वम्' इति ।

तत्र ये निषेधाधिकारपठिताः प्रपञ्चरूपोपाधयः 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च' इत्यादयः ते सृष्टिवाक्यैः ब्रह्मसंबन्धित्वेनारोपिताः प्रतिषेधायानूद्यन्ते ।

ये तु विधिमुखप्रतिपादनप्रकरणपठिताः ते 'सत्यं ज्ञानमनन्तम्' 'ऐतदात्म्यमिदं सर्वम्' इत्यादिशब्दैः प्रतिपिपादयिषिताद्वैतप्रतिपत्त्यर्थं कार्यकारणानन्यत्वन्यायेन ब्रह्मव्यतिरेकेणाभावाय ब्रह्मकार्यत्वेन निर्दिश्यन्ते 'आत्मन आकाशस्संभूतः' 'तत्तेजोऽसृजत' इत्यादिभिः ।

निर्विशेषप्रकरणे च तत्तद्वाक्यान्तर्गतैः तत्तत्पदैः तत्तत्प्रवृत्तिनिमित्तभूतान् ताटस्थ्येन निर्विशेषप्रतिपत्तावुपायभूतान् धर्मान् पुरस्कृत्य ब्रह्मावबोधनेऽपि तेषां पदानां भागत्यागलक्षणया तत्तद्धर्मोपलक्षिते अखण्डे ब्रह्मणि पर्यवसानाश्रयणान्न विरोधः ।

निर्विशेषप्रतिपत्तौ उपलक्षणविधया उपयुज्यमाना निर्विशेषप्रकरणान्तर्गतवाक्यघटकपदेभ्यः प्रतीयमाना ये तत्तत्पदप्रवृत्तिनिमित्तभूता धर्माः तेषां पर्यवसन्नबोधविषयं परमतात्पर्यगोचरं निर्विशेषं ब्रह्म प्रति उपलक्षणत्वेऽपि सविशेषं ब्रह्म प्रति विशेषणत्वसंभवात्, तस्य च सविशेषब्रह्मणः अवान्तरतात्पर्यविषयस्य द्वारीभूतबोधे भासमानत्वांगीकारात् निर्गुणप्रकरणेऽपि सगुणब्रह्मणो न त्यागः ।

एवं सगुणात्यन्तभिन्ननिर्गुणानंगीकारात्, वस्तुतो निर्गुणब्रह्मण एव मायया सगुणत्वेन प्रतीतेः, सगुणस्यैव गुणवैशिष्ट्यांशत्यागेन निर्गुणत्वाभ्युपगमात्, पूर्वोक्तसंक्षेपशारीरकश्लोकानुरोधेन सगुणवाक्यानामपि निर्गुणे परमतात्पर्याभ्युपगमात्, सगुणप्रकरणेऽपि निर्गुणब्रह्मणो न त्यागः ।

एवं सगुणनिर्गुणप्रकरणद्वयेऽपि मिश्रीभावेन परमावान्तरतात्पर्यगोचरस्य उपास्यज्ञेयरूपतया द्विरूपस्य ब्रह्मणः विचारायैव ब्रह्मसूत्राणि भगवता बादरायणेन प्रणीतानि ।

निखिलवेदविभागकर्तुः श्रुतिहृदयविदः उभयविधब्रह्मप्रतिपादकैः नानाविधैः पुराणैः इतिहासैश्च प्रमाणभूतैरप्रामाण्यगन्धविधुरैः श्रुत्यर्थोपबृंहणं कुर्वतः श्रुतितात्पर्यनिर्णायक-ब्रह्मसूत्राणि रचितवतश्च बादरायणाचार्यस्य तात्पर्यविषये द्विरूपे ब्रह्मणि एकमपि ब्रह्मापल-पितुमनिच्छद्भिः शुचिहृदयैः भगवत्पादैरपि उभयविधब्रह्मपरतयैव विश्वतोमुखानि ब्रह्मसूत्राणि भाष्ये व्याख्यातानि ।

पुराणेषु च प्रमाणाप्रमाणविभागं कैश्चिदारोपितं प्रामाणिका न श्रद्दधते । तदुक्तं—'भ्रान्त्यादिदोषरहिताप्ततमप्रणीते वैयासिकेऽप्यहह हन्त पुराणवर्गे ।
स्वानिष्टदैवतपरे तु परेऽतिधीरा आरोपयन्ति निजबुद्धिगतामसत्वम् ॥' इति ।

तस्मिंश्च ब्रह्मसूत्रे अध्यायाश्चत्वारः । तेषु च क्रमेणोभयविधे ब्रह्मणि वेदान्तानां समन्वयः, उभयस्मिन् प्रमाणान्तराविरोधः, उभयविधब्रह्मप्राप्तिसाधनानि उपासनज्ञाना-दीनि, उभयविधब्रह्मप्राप्ती क्रममुक्तिः सद्योमुक्तिरिति च कीर्तिते विचार्यन्ते ।

आद्याध्यायाभ्यां सर्वप्रमाणाविरुद्धं तत्वं, तृतीयेन हितं, तुरीयेण पुरुषार्थश्चे-त्येवं तत्त्वहितपुरुषार्थत्रयानुशासकं ब्रह्मसूत्रमित्यभियुक्ता वदन्ति । प्रथमाध्याये क्रियमाण-विचारस्य श्रवणमिति, द्वितीयाध्याये क्रियमाणस्य तस्य मननमिति च, संज्ञा । अतोऽध्यायद्वयं श्रवणाध्यायः मननाध्याय इति चोच्यते इत्यपि प्रामाणिकाः कथयन्ति ।

प्रत्यध्यायं पादाश्चत्वारः, मिलित्वा षोडश पादाः । तेषु च पञ्चपञ्चाशदधिक-पञ्चशतसंख्याकैः (५५५) सूत्रैः एकनवत्युत्तरशतसंख्याकानि (१९१) अधिकरणानि रचितानि ।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः ॥

इत्युक्तलक्षणमधिकरणम् । अधिकरणं विचार इति च पर्यायः । एकोनचत्वा-रिंशत् (३९) सप्तचत्वारिंशत् (४७) सप्तषष्टिः (६७) अष्टत्रिंशत् (३८) विचाराः क्रमेणाध्यायचतुष्टयेऽपि कृताः ।

तत्र प्रथमेऽध्याये प्रथमं जिज्ञासाधिकरणे (१-१-१) सगुणनिर्गुणब्रह्मसाधा-रण्येन जिज्ञास्यत्वोपक्रमः । अत एव भाष्ये 'अस्ति तावत् ब्रह्म नित्यशुद्धबुद्धमुक्त-स्वभावं सर्वज्ञं सर्वशक्तिसमन्वितञ्च' इति उभयविधब्रह्मसाधारण्येन ब्रह्मशब्दार्थो दर्शितः ।

जन्माद्यधिकरणे (१-१-२) प्रकृत्यधिकरणे च (१-४-७) अभिन्ननिमित्तोपादानत्वरूपं जगत्कारणत्वं सगुणस्य विशेषणं निर्गुणस्य उपलक्षणञ्च लक्षणमुक्तम्। सत्यज्ञानादिरूपं निर्गुणस्य स्वरूपलक्षणञ्च जन्माद्यधिकरण एव उक्तम्।

शास्त्रयोनित्वाधिकरणे (१-१-३) जगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं सगुणस्य दृढीकृतम्। द्विरूपस्यापि ब्रह्मणः शास्त्रैकवेद्यत्वञ्च कथितम्।

समन्वयाधिकरणे च (१-१-४) उभयस्मिन् ब्रह्मणि पूर्वोक्तशास्त्रप्रामाण्योपपादनाय वेदान्तरूपशास्त्रस्य तत्रैव तात्पर्येणान्वयः कथितः। इत्थं चतुस्सूत्र्या प्रकृत्यधिकरणसहितया लक्षणप्रमाणाभ्यां ब्रह्मात्मवस्तु साधितम्।

ईक्षत्यधिकरणेन (१-१-५) आनुमानिक (१-४-१) चमस (१-४-२) न संख्योपसंग्रहाधिकरणैश्च (१-४-३) चतुर्भिरधिकरणैः प्रधानकारणवादे वेदान्तसमन्वयो निराकृतः।

आनन्दमय (१-१-६) प्रतर्दन (१-१-११) अत्तृ (१-२-२) गुहा (१-२-३) अन्तर्यामि (१-२-५) अदृश्यत्व (१-२-६) द्युभ्वादि (१-३-१) भूमा (१-३-२) अक्षर (१-३-३) ईक्षतिकर्म (१-३-४) अनुकृति (१-३-६) प्रमित (१-३-७) कंपन (१-३-१०) ज्योतिर्दर्शन (१-३-११) अर्थान्तरत्वव्यपदेश (१-३-१२) सुषुप्त्युत्क्रान्ति (१-३-१३) जगद्वाचित्व (१-४-५) वाक्यान्वय (१-४-६) अधिकरणैः अष्टादशभिः तत्तद्वेदान्तेषु निर्गुणप्रकरणगतानां वाक्यानां तत्तद्वाक्यान्तर्गतपदप्रवृत्तिनिमित्तधर्मोपलक्षिते प्रत्यगभिन्ने अद्वितीये निर्गुणे ज्ञेये ब्रह्मणि समन्वयः प्रतिपादितः। ज्ञेयस्यापि निर्गुणब्रह्मणः उपास्यत्वमपि संभवतीति ईक्षितिकर्माधिकरणे उक्तमिति विशेषः।

अन्तस्तद्धर्म (१-१-७) आकाश (१-१-८) प्राण (१-१-९) ज्योतिश्चरण (१-१-१०) (सर्वत्रप्रसिद्ध) (१-२-१) अन्तर )१-२-४( वैश्वानर (१-२-७) दहर (१-३-५) अधिकरणैरष्टभिः सगुणप्रकरणगतानां वाक्यानां उपास्ये तत्तत्पुराणादिषु हरिहरशक्तिगुहगजाननादिनानाविधमूर्तिभेदात्मना भजनीयतया प्रतिपादिते सगुणे ब्रह्मणि समन्वयः प्रतिपादितः। तत्रापि अन्तस्तद्धर्माकाशप्राणाधिकरणेषु त्रिषु उद्गीथप्रस्तावरूपकर्माङ्गावबद्धं, ज्योतिश्चरणाधिकरणे जाठराग्निप्रतीककं, अन्यत्र स्वतन्त्रं च सगुणब्रह्मोपासनं चिन्तितम्।

सर्वव्याख्यानाधिकरणे (१-४-८) अण्वादिकारणवादे वेदान्तसमन्वयो निरस्तः। कारणत्वाधिकरणे (१-४-४) जगत्कारणविषयवेदान्तवाक्यानां नानाशाखागतानां

मिथोविरोधपरिहारेण ब्रह्मणि समन्वयो दृढीकृतः । देवताधिकरणे (१-३-८) अपशूद्राधिकरणे च (१-३-९) ब्रह्मविद्याधिकारिनिर्णयः कृतः । एवमेकोनचत्वारिंशद्विचाराः प्रथमाध्याये कृताः ।

दहराधिकरणान्तरागर्भितं प्राजापत्यविद्यात्मकनिर्गुणविद्याविचारं 'उत्तराच्चेत्' इति सूत्रकृतं गणयित्वा चत्वारिंशदधिकरणानि इति शास्त्रदर्पणे न्यायमालायाञ्चोक्तम् । तथा सति ज्योतिश्चरणाधिकरणान्तरागर्भितः 'छन्दोऽभिधानात्' इत्यादिसूत्रकृतः गायत्रीविद्यारूपसगुणविद्याविचारोऽपि गणनीयः ।

अथ द्वितीयाध्याये स्मृतियोगप्रत्युक्त्यधिकरणाभ्यां (२-१-१-२) सांख्ययोगादिस्मृत्यविरोधः ब्रह्मणि वेदान्तसमन्वयस्य दर्शितः ।

प्रथमपादे अवशिष्टैरेकादशाधिकरणैः (२-१-३-×१३) द्वितीयपादे महद्दीर्घाधिकरणेन च (२-२-२) जगद्विलक्षणे, अनवच्छिन्ने, अद्वितीये, जीवाभिन्ने, असहाये, निरवयवे, अशरीरे, आप्तकामे, निर्दोषे, निर्गुणे, चेतने च, ब्रह्मणि जगत्कारणे वेदान्तसमन्वयस्य वाद्युत्थापिताभिः तत्तद्युक्तिभिः अविरोधः प्रदर्शितः ।

द्वितीयपादे महद्दीर्घाधिकरणवर्जं सप्तभिरधिकरणैः (२-२-१-३×८) सांख्यवैशेषिकसौगतार्हतपाशुपतपाञ्चरात्रमतानां वेदनिरपेक्षस्वतन्त्रयुक्तीः प्रत्यगभिन्नब्रह्मसमन्वयविरोधिनीर्निरस्य तदविरोधः दर्शितः ।

तृतीयपादे आदितो नवभिरधिकरणैः (२-३-१×९) वियदादिपञ्चमहाभूतानां ब्रह्मजन्यत्वं, वियदाद्यात्मना ब्रह्मणो वाय्वाद्युपादानत्वं, वियदाद्यधिष्ठातुर्ब्रह्मण एव स्वतो वाय्वादिसर्वप्रपञ्चस्रष्टृत्वं, सृष्टिक्रमविपरीतक्रमं, प्राणेन्द्रियमनसां भौतिकत्वेन भूतोत्पत्त्यनन्तरमुत्पत्तिं, प्रसङ्गात् ब्रह्मणोऽजन्यत्वञ्च, व्यवस्थापयद्भिः तद्विषयकश्रुतीनां मिथो विरोधपरिहारः कृतः ।

दशममारभ्य सप्तदशान्तैरष्टभिः (२-३-१०×१७) चतुर्थपादान्तिमेन च (२-४-९) नवभिरधिकरणैर्जीवविचाररूपैः जीवस्य प्रतिशरीरोत्पत्तिनाशं सर्गप्रलययोश्च उत्पत्तिविनाशाभावं, चिद्रूपत्वं, स्वभावतो विभुत्वेऽपि बुद्ध्याद्युपाधिकोत्क्रान्त्यादिभाक्त्वं, परमार्थतोऽकर्तृत्वेऽपि व्यावहारिकमीश्वराधीनं कर्तृत्वं, ब्रह्माभिन्नत्वेऽपि उपाधिभेदेन ब्रह्मणः सकाशाज्जीवान्तराच्च व्यावृत्तसुखादिभाक्त्वेन मिथो धर्मासांकर्यं, जैवरूपेण भौतिकनामरूपस्रष्टृत्वाभावञ्च, व्यवस्थापयद्भिः तद्विषयकश्रुतीनां मिथो विरोधपरिहारः कृतः ।

चतुर्थपादे अन्तिमवर्जमष्टभिरधिकरणैः(२-४-१×८)प्राणविचाररूपैः इन्द्रियाणां जन्यत्वं, एकादशसंख्यत्वं, सौक्ष्म्यपरिच्छेदौ, देवताधिष्ठितत्वं, मुख्यप्राणात्तत्त्वान्तरत्वं, मुख्यप्राणस्यापि जन्यत्वं, वायोरिन्द्रियक्रियायाश्च सकाशाद्भिन्नत्वं, आध्यात्मिकरूपेण सौक्ष्म्यपरिच्छेदौ च, व्यवस्थापयद्भिः तद्विषयकश्रुतीनां मिथो विरोधपरिहारः कृतः। एवं सप्तचत्वारिंशद्विचाराः द्वितीयाध्याये कृताः।

अथ तृतीयतुरीयाध्याययोः पुरुषार्थाधिकरणे (३-४-१) कर्मानङ्गतया स्वतन्त्रं कर्मनिरपेक्षं वेदान्तान्तर्गतमहावाक्यमूलं ब्रह्मज्ञानं ब्रह्मप्राप्तिरूपमुक्तिसाधनमिति दर्शितम्।

ब्रह्मज्ञानस्य च कर्मनिरपेक्षत्वं परामर्शाधिकरणे (३-४-२) कर्मरहितज्ञानाश्रय-संन्यासाश्रमस्थापनेन, तस्यैव ब्रह्मसंस्थतानिर्णयेन च समर्थितम्। तच्च ब्रह्मज्ञानं जीवाभिन्न-ब्रह्मगोचरमिति 'आत्मेति तूपगच्छन्ति' (४-१-२) इत्यधिकरणेन निर्धारितम्।

तृतीयद्वितीये आद्यैश्चतुर्भिरधिकरणैः (३-२-१×४) मुक्तिहेतुमहावाक्यार्थज्ञान-साधनीभूतं यत् ब्रह्माभेदान्वययोग्यत्वं पदलक्ष्यार्थज्ञानं तदर्थं त्वंपदार्थशोधनं स्वप्नाद्यव-स्थाविचारेण कृतम्।

तत्र च स्वप्नसृष्टेर्मिथ्यात्वनिर्णयेन सुखदुःखकर्तृत्वाद्यवभासेऽपि जीवोऽसङ्गः स्वयं ज्योतिस्स्वरूपश्चेति प्रदर्शितम्। सुप्तौ ब्रह्मैक्यनिरूपणेन तदेवासङ्गत्वमनुभावित-म्। तस्यैव पुनः प्रतिबोधकथनेनानित्यत्वशङ्का निराकृता। मूर्छाविचारेण श्वासादिसर्व-व्यवहारलोपेऽपि मरणे जीवविनाशो न शङ्कनीयः इति दर्शितम्।

पञ्चमषष्ठसप्तमैः (३-२-५-६-७) अधिकरणैः वाक्यार्थज्ञानहेतुभूतं यत् जीवाभेदान्वययोग्यतत्पदलक्ष्यार्थज्ञानं तदर्थं तत्पदार्थशोधनं कृतम्। तत्र च ब्रह्मणो निर्विशेषसविशेषरूपयोस्तात्विकातात्विकत्वे कथिते। ब्रह्मव्यतिरिक्तसर्वप्रपञ्चप्रतिषेधेन ब्रह्ममात्रपरिशेषश्च प्रदर्शितः।

शोधितस्य तत्पदार्थस्य तथात्वेन वेदान्तैः सिद्ध्यर्थं तस्मिन्नुपसंहरणीयाः विधि-निषेधरूपा धर्माः आनन्दाद्यधिकरणे (३-३-६) अक्षरध्यधिकरणे च (३-३-२०) दर्शिताः।

आत्मगृहीत्यधिकरणे (३-३-८) इयदधिकरणे (३-३-२१) अन्तरत्वाधिकरणे च (३-३-२२) केषुचिद्वेदान्तवाक्येषु निर्गुणविद्यापरत्वं विद्यैक्यं च प्रसाध्य, तत्र सर्वत्र आनन्दादिगुणोपसंहारः प्रदर्शितः।

आध्यानाधिकरणे (३-३-७) वाक्यभेदबलात् अर्थादीनां प्रत्येकमिन्द्रिया-दिभ्यः परत्वानुसन्धानं निरस्य, एकवाक्यतया ब्रह्मणः इन्द्रियार्थादिसर्वपरत्वस्य ब्रह्मस्व-रूपत्वाभावेन सर्वत्रानुपसंहार्यस्य निर्गुणब्रह्मप्रतिपत्त्युपायभूतस्यानुसन्धानमुक्तम् ।

कामाद्यधिकरणे (३-३-२५) हान्यधिकरणे च (३-३-१५) क्वचित्सगुणनिर्गुण-विद्ययोर्भिन्नयोरपि स्तुत्यर्थत्वेन मिथो गुणोपसंहारः प्रदर्शितः । मोक्षसधनीभूतस्य सम्यग्ज्ञानस्य उत्पत्तिकालः ऐहिकाधिकरणे (३-४-१६) चिन्तितः ।

फलाधिकरणे (३-२-८) तत्पदवाच्यसगुणब्रह्मणः सर्वकर्मफलप्रदस्य निरूपणेन तत्प्रसादरूपं सम्यग्ज्ञानसाधनं दर्शितम् ।

तृतीयप्रथमे षड्भिरधिकरणैः (३-१-१-×६) स्थूलदेहबीजभूतपञ्चीकृतपञ्चभूत-सूक्ष्मांशपरिवेष्टितस्य जीवस्य परलोकेहलोकयातायातरूपकर्मफलसंसारप्रकारनिरूपणेन ब्रह्मज्ञानसाधनं वैराग्यं दर्शितम् ।

सम्यग्ज्ञानस्य च मोक्षफले संपादनीये कर्मानपेक्षा अग्नीन्धनाद्यधिकरणे (३-४-५), स्वोत्पत्तौ बहिरङ्गसाधनकर्मापेक्षा अन्तरङ्गसाधनशमदमसंन्यासाद्यपेक्षा च सर्वापेक्षाधिकरणे (३-४-६) दर्शिता ।

आश्रमकर्मणां विधुराद्यनाश्रमिकर्मणां च विद्योत्पत्तावुपकारकत्वं आश्रमकर्माधि-करणे (३-४-८) विधुराधिकरणे च (३-४-९) क्रमेण दर्शितम् ।

आरूढपतितानां विद्यार्थकर्मस्वनधिकारः, ऊर्ध्वरेतसां ब्रह्मचर्यभङ्गे सति कृतप्रायश्चि-त्तानां विद्यार्थकर्मस्वधिकारः, परन्तु इतरेषां तैस्संव्यवहारो नोचितः । संव्यवहरतां न विद्यार्थकर्मस्वधिकारः इति तद्भूत (३-४-१०) आधिकारिक (३-४-११) बहि-(३-४-१२) रधिकरणेषु दर्शितम् ।

श्रवणादीनां दम्भदर्पादिराहित्यरूपभावशुद्धेश्च विद्यासाधनत्वं सहकार्यन्तरविध्यना-विष्काराधिकरणयोः (३-४-१४-१५) दर्शितम् ।

निर्विशेषब्रह्मसाक्षात्कारफलानां श्रवणादीनां सविशेषब्रह्मसाक्षात्कारफलानां अहं-ग्रहोपासनानां च यावत्साक्षात्कारोदयं आवृत्तिः आवृत्त्यधिकरणे (४-१-१) निर्णीता ।

निर्विशेषसविशेषविदां ब्रह्मसाक्षात्कारे सति सञ्चितागामिपापपुण्ययोः विनाशाश्लेषौ तदधिगमाधिकरणे (४-२-९) इतरासंश्लेषाधिकरणे च (४-१-१०) दर्शितौ ।

निर्विशेषसविशेषविदां प्रारब्धस्यावश्यमनुभाव्यत्वं, अनुभवेन तन्नाशे ब्रह्मसंपत्तिश्च अनारब्धकार्याधिकरणे (४-१-११) इतरक्षपणाधिकरणे च (४-१-१४) दर्शिता। आधिकारिकपुरुषाणां साक्षात्कारवतामपि तत्तदधिकारप्रापकप्रारब्धकर्मबलात् नानादेहप्राप्तावपि प्रारब्धावसाने मुक्तिर्यावदधिकाराधिकरणे (३-३-१९) वर्णिता।

निर्विशेषविदां विद्योत्पत्त्यर्थनित्यकर्मणां विद्यारूपफलजनकत्वसंभवात् फलमजनयित्वा इतरकर्मवन्नाशाभावः, सविशेषविदां नित्यकर्मणां कर्मसाध्यत्वयोग्यब्रह्मलोकप्राप्तिरूपफलजननाय सगुणविद्यया सह समुच्चयश्च अग्निहोत्राद्यधिकरणे (४-१-१२) दर्शितः।

निर्गुणविदां देहादुत्क्रान्तिः नास्तीति प्रतिषेधाधिकरणे (४-२-६) मुक्त्यर्थमर्चिरादिगतिर्नापेक्ष्यते इति गतेरर्थवत्त्वाधिकरणे च (३-३-१७) दर्शितम्।

निर्गुणसाक्षात्कारवतां जीवत्वोपाधिभूतप्राणादिकलानां परमात्मनि लयः इतरेषामिव न भूतेषु लय इति कलाप्रलयाधिकरणे (४-२-७) स च लयः निरवशेष एव न सावशेष इतरेषामिव इति कलाऽविभागधिकरणे च (४-२-८) दर्शितम्।

निर्विशेषविद्भिः मुक्तौ प्राप्यरूपविषये चत्वारो विचाराः। अविद्यानिवृत्तौ सत्यामभिव्यङ्ग्यं पूर्वसिद्धमेव रूपं नागन्तुकरूपप्राप्तिरिति प्रथमो विचारः संपद्याविर्भावाधिकरणे (४-४-१) कृतः। तच्च रूपं परमात्माभिन्नमेव न तु भिन्नमिति द्वितीयः अविभागेन दृष्टत्वाधिकरणे (४-४-२) कृतः। तच्च मुक्तप्राप्यं प्रत्यगभिन्नं ब्रह्मस्वरूपं यावत्सर्वमुक्ति बद्धपुरुषदृष्ट्या सगुणपरमेश्वरस्वरूपं स्वदृष्ट्या निर्गुणब्रह्मस्वरूपमिति तृतीयः ब्राह्माधिकरणे (४-४-३) कृतः। परममुक्तौ अन्यत्रेव सातिशयत्वाभावः इति चतुर्थः मुक्तिफलानियमाधिकरणे (३-४-१७) कृतः।

द्विविधमुपासनं ब्रह्मोपासनं प्रतीकोपासनञ्चेति। ब्रह्मण एव तत्तद्गुणविशिष्टत्वेन चिन्तनमाद्यम्। लौकिकवस्तूनां देवतादृष्ट्या ब्रह्मदृष्ट्या वा चिन्तनं द्वितीयम्। प्रतीकोपासनमपि प्रतीकस्य कर्माङ्गत्वेन स्वतन्त्रत्वेन च द्विविधम्। त्रिविधानामप्येषामुपासनानां चित्तशुद्धिचित्तैकाग्रतादिद्वारा निर्विशेषज्ञानोपकारकाणां गुणोपसंहारानुपसंहारतदुपयोगिविद्याभेदाभेदादिनिर्धारणेनानुष्ठानप्रकारः तृतीयाध्यायतृतीयपादादौ विचारितः।

तत्र अङ्गानाश्रितोपासनेषु आसननियमः दिगादिनियमाभावश्च आसीनाधिकरणे (४-१-६) एकाग्रताधिकरणे च (४-१-७) दर्शितः।

अङ्गावबद्धेषु प्रतीकोपासनेषु अष्टौ विचाराः । तत्र, ऋत्विज एव तेष्वधिकारः न यजमानस्येत्येकः स्वाम्यधिकरणे (३-४-१०) कृतः । कर्माङ्गेषु प्रतीकेष्वेव पृथिव्यादिदेवतादृष्टिः, न तु देवतायामङ्गदृष्टिरिति द्वितीयः आदित्यादिमत्यधिकरणे (४- ·५) कृतः । यस्यां शाखायां यत् ध्यानं विहितं, तत्तच्छाखागत एवाङ्गे इति नास्ति नियमः, किन्तु शाखान्तरगतेऽप्यङ्गे इति तृतीयः अङ्गावबद्धाधिकरणे (३-३-३१) कृतः । यावन्त्यङ्गावबद्धान्युपासनानि सन्ति, तावन्ति तानि अनुष्ठेयानीति नास्ति नियमः, किन्तु एकं द्वे बहूनि वा स्वेच्छया इति चतुर्थः यथाश्रयभावाधिकरणे (३-३-३६) कृतः । कर्मानुष्ठानकाले अङ्गावबद्धोपासनानि अवश्यमनुष्ठेयानीति नास्ति नियमः, कर्मानङ्गत्वात्तेषां, किन्तु कर्मफलसिद्ध्यप्रतिबन्धकर्मसमृद्ध्यादिफलकामनायां सत्यामेव तदनुष्ठानमिति पञ्चमः तन्निर्धारणानियमाधिकरणे (३-३-२७) कृतः । विद्यार्थकर्मस्वग्नि-होत्रादिषु अङ्गावबद्धोपासनसाहित्यनियमो नास्ति, परन्तु तत्साहित्ये कर्मणां वीर्यवत्त्वातिशयः, असाहित्येऽपि कर्मणां वीर्यवत्त्वाद्विद्यासाधनत्वं इति षष्ठः विद्यासंयुक्तकर्मवीर्यवत्त्वाधिकरणे (४-४-१३) कृतः । छान्दोग्यप्रथमाध्याये कर्माङ्गभूतोद्गीथे रसतमत्वादिगुणकीर्तन-मुपास्त्यर्थमेव न स्तुतिमात्रमिति सप्तमः स्तुतिमात्राधिकरणे (३-४-३) कृतः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्याद्यङ्गावबद्धोपासनेषु अक्षरोद्गीथशब्दयोः सामानाधि-करण्यं अध्यासापवादैकत्वविशेषणपक्षेषु अन्तिमावलम्बनमिति अष्टमः व्याप्त्यधिकरणे (३-३-४) कृतः ।

सामान्यतः प्रतीकोपासनेषु चत्वारः विचाराः कृताः । तत्र प्रतीकेषु अहंग्रहो न कर्तव्यः इत्येकः प्रतीकाधिकरणे (४-१-३) कृतः । प्रतीकोपासनेष्वेकमनेकं वा स्वेच्छया अनुष्ठेयं न नियमः इति द्वितीयः काम्याधिकरणे (३-३-३५) कृतः । प्रतीक एव ब्रह्मदृष्टिः न तु ब्रह्मणि प्रतीकदृष्टिरिति तृतीयः ब्रह्मदृष्ट्यधिकरणे(४-१-४) कृतः । पञ्चाग्निविद्यात्रिमात्रोङ्कारप्रतीककपरब्रह्मोपासनव्यतिरिक्तप्रतीकोपासनकर्तॄणां विद्युल्लोकपर्य-न्तमेव तत्तल्लोकभोगार्थं अर्चिरादिमार्गेण गमनं, न ब्रह्मलोकगमनमिति चतुर्थः अप्रतीकालंबनाधिकरणे (४-३-६) कृतः ।

सगुणब्रह्मोपासनेषु अष्टौ विचाराः । तत्र सगुणब्रह्मोपासनं निर्गुणब्रह्मज्ञानमिव अहंग्रहेण कर्तव्यमित्येकः आत्मत्वोपासनाधिकरणे (४-१-२) कृतः । तच्चाधिकरणं निर्गुणविद्यासाधारणं पूर्वमेवोक्तम् । अहंग्रहश्च व्यतिहारेण कर्तव्य इति द्वितीयः व्यतिहाराधिकरणे (३-३-२३) कृतः । व्यतिहारश्च 'सोऽहमहं सः' इति जीवेशयोः

विशेषणविशेष्यभावव्यत्यासेन द्विरूपमतिकरणम् । अहंग्रहोपासनेषु दहरशाण्डिल्यादिषु एकमेवानुष्ठेयमिति तृतीयः विकल्पाधिकरणे (३-३-३४) कृतः । कर्मसमृद्ध्यादि-फलकव्यतिरिक्तेषु ब्रह्मोपासनेषु सर्वत्र अर्चिरादिमार्गः इति चतुर्थः अनियमाधिकरणे (३-३-१८) कृतः । आप्रायणमहंग्रहोपासनं कर्तव्यमिति पञ्चमः आप्रायणाधिकरणे (४-१-८) कृतः । सगुणोपासकानां अर्चिरादिमार्गे गमनात्प्रागेव सुकृतदुष्कृतक्षयः न तु मार्गमध्ये इति षष्ठः सांपरायाधिकरणे (३-३-२६) कृतः । अहंग्रहोपासनविशेषात्मके वैश्वानरोपासने समस्तवैश्वानरोपासनस्यैव प्रामाणिकत्वं न तु व्यस्तोपासनानां इति सप्तमः भूमज्यायस्त्वाधिकरणे (३-३-३२) कृतः । वैश्वानरविद्यात्मकाहंग्रहोपासने अङ्गभूतप्राणाग्निहोत्रस्य भोजनलोपे लोप इति अष्टमः आदराधिकरणे (३-३-२६) कृतः ।

सर्ववेदान्तप्रत्यय (३-३-१) उपसंहार (३-३-२) सर्वाभेद (३-४-५) समान (३-३-१०) सत्याद्य (३-३-२४) धिकरणेषु पञ्चसु शाखाभेदेन विहितसगुणविद्याना-मैक्यं गुणोपसंहारश्च चिन्तितः ।

अन्यथात्व (३-३-३) संभृति (३-३-१२) पुरुषविद्या (३-३-१३) शब्दादि-भेदा (३-३-२३) धिकरणेषु चतुर्षु विद्याभेदगुणानुपसंहारौ चिन्तितौ । संबन्धाधिकरणे (३-३-११) एकस्मिन्नप्युपासने अध्यात्ममधिदैवतञ्च उपासनीयधर्मव्यवस्था दर्शिता । प्रदानाधिकरणे (३-३-२८) एकस्मिन्नप्युपासने अध्यात्ममधिदैवतञ्च उपासनाप्रयोगभेदः दर्शितः । वेधाद्यधिकरणे (३-३-१४) विद्यासन्निधिपठितानामपि मन्त्रकर्मणां केषाञ्चित् विद्यास्वनुपसंहारो दर्शितः ।

पारिप्लवाधिकरणे ०-४-४ विद्यासन्निधिपठितानां आख्यायिकानां विद्योपयोगित्वं व्यवस्थापितम् । कार्याख्यानाधिकरणे (३-३-९) प्राणविद्यांगतया अपूर्वाचामनस्याविधे-यत्वं उक्तम् । सर्वान्नानुमत्यधिकरणे (३-४-७) सर्वान्नानुज्ञानं स्तुत्यर्थं न प्राणविद्याङ्गं, अतः प्राणोपासकस्यापि अनापदि भक्ष्याभक्ष्यशास्त्रपरिपालनं कर्तव्यमित्युक्तम् । लिङ्गभूय-स्त्वाधिकरणे (३-३-२९) भावनामयाग्नीनां स्वतन्त्रविद्यामयत्वं न चयनकर्माङ्गत्वमित्युक्तम् । 'एक आत्मनश्शरीरेऽभावात्' इत्यधिकरणे (३-३-३०) बन्धमोक्षाधिकारसिद्ध्ये देहव्यतिरिक्तात्मसद्भावः कृत्स्नशास्त्रशेषः समर्थितः ।

उपासकस्य ब्रह्मलोकप्राप्त्यर्थं मूर्धन्यनाडीनिष्क्रमणात् प्राचीने उत्क्रान्तिप्रकारे सर्वसाधारणे पञ्च विचाराः । तत्र म्रियमाणस्य पुरुषस्य वागुपलक्षितानां दशेन्द्रियाणां मनसि स्वरूपविलयो न भवति, किन्तु वृत्तिमात्रविलयः इत्येको विचारः (४-२-१), तस्य

च मनसः प्राणे वृत्तिलयः इति द्वितीयः (४-२-२), तस्य च प्राणस्य स्वात्मनि जीवे वृत्तिलय इति तृतीयः (४-२-३), सेयं वृत्तिप्रविलयरूपा देहान्तरुत्क्रान्तिः नाडीनिष्क्रमण-रूपमार्गोपक्रमपर्यन्ता धर्माधर्मप्रवृत्तस्य, उपासकस्य, तत्वज्ञानिनश्च, त्रयाणां कर्मभक्ति-ज्ञानरूपयोगत्रयानुष्ठातॄणां समानैव, न तु विषमेति चतुर्थः (४-२-४), बाह्येन्द्रियमनः-प्राणाः यस्मिन् जीवात्मनि वृत्त्या प्रविलीयन्ते स जीवात्मा, यस्मिन् तेजःप्रधाने भूतपञ्चके वृत्त्या प्रविलीयन्ते, तत् भूतपञ्चकं ब्रह्मतत्वानभिज्ञस्य पुरुषस्य परमात्मनि वृत्त्यैव प्रविलीयते, न तु स्वरूपेणेति पञ्चमः ४-२-५। इमे पञ्चापि विचाराः क्रमेण वागाद्यधिकरणेषु कृताः।

उपासकस्य ब्रह्मलोकप्राप्तये मूर्धन्यनाडीनिष्क्रमणरूपः उत्क्रान्तौ विशेषः तदोकोऽधिकरणे (४-२-९) चिन्तितः।

उपासकस्य ब्रह्मलोकप्राप्तिमार्गे षड्विचाराः। मूर्धन्यनाड्या निष्क्रान्तस्य उपासकस्य रात्र्यहनि वा मरणेऽपि आदित्यरश्मिनाडीसंबन्धस्य यावद्देहभावित्वेन रश्मिप्राप्तिरिति प्रथमो विचारः। (४-२-१०)। आदित्यरश्म्यादिके उत्तरमार्गे श्रुतस्य उत्तरायणशब्दस्य तदभिमानिदेवतापरत्वात् उपासकस्य दक्षिणायनमरणेऽपि क्रियाफलमस्तीति द्वितीयः। (४-२-११)। उत्तरमार्गः तत्तच्छ्रुत्युक्तनानापर्वविशेषयुक्तः एक एवेति तृतीयः (४-३-१) उत्तरमार्गे आदित्यादर्वाक् वायोः सन्निवेश इति चतुर्थः (४-३-२) उत्तरमार्गे विद्युल्लोकादूर्ध्वं वरुणेन्द्रप्रजापतिलोकानां सन्निवेश इति पञ्चमः (४-३-३) उत्तरमार्गे श्रुतानां अर्चिरादिशब्दानां आतिवाहिकदेवतापरत्वं इति षष्ठः (४-३-४)। इमे षडपि विचाराः रश्म्याद्यधिकरणेषु क्रमेण कृताः।

उपासकैर्गन्तव्यं सगुणमपरं लोकविशेषोपाधिकतया कार्यं ब्रह्म। तच्च ब्रह्मलोका-वान्तरभेदरूपेषु वैकुण्ठकैलासश्रीपुरस्कन्दलोकगजाननलोकादिरूपेण तत्तत्पुराणागमादिषु वर्णितेषु मायाकार्यलोकभेदेषु यथारुचि समनुष्ठितोपासनानुगुणं तत्क्रतुन्यायेन तत्तद्भक्तप्राप्यमेकमेव हरिहरशक्तिगुहगजाननादिनानाविधभक्तप्रियमूर्तिविशेषविशिष्टं तत्त-त्पुराणागमाद्युद्घुष्टवैभवं, तत्तल्लोकप्रलये च तत्तन्मूर्त्युपाधिकसगुणब्रह्मानुग्रहलब्धतत्वज्ञानेन उपासकानां कैवल्यमिति कार्याधिकरणे (४-३-५) निर्णीतम्।

सगुणब्रह्मविदां प्राप्यफलविषयाश्चत्वारो विचाराः। ब्रह्मलोकवासिनः उपासकस्य भोग्यवस्तुसंपादनं मनुष्यलोकवासिवत् बाह्यसाधनानपेक्षया संकल्पमात्रेण भवति इति प्रथमो विचारः (४-४-४)। संकल्पमात्रेण भोग्यजातं सृष्टवत उपासकस्य भोगाधिष्ठान-

देहभावाभावौ ऐच्छिकौ इति द्वितीयः (४-४-५)। यदाऽयमुपासकः स्वेच्छया युगपदेव बहून् देहान् सृजति तदानीं सहजान्तःकरणानुवर्तीन्यपराण्यतःकरणानि सेन्द्रियाणि सृष्ट्वा तदुपेतेषु तेषु भोगान् भुङ्क्ते इति तृतीयः (४ ४-६)। उपासकस्य स्वभोग्यभोगाधिष्ठान-भोगकरणसृष्टिव्यतिरेकेण भूतभौतिकजगत्सृष्टिः नास्ति, सा नित्यसिद्धपरमेश्वरस्यैव, भोगमात्रेण च उपासकस्य परमेश्वरसाम्यं, भोगान्ते परमेश्वरानुगृहीतसम्यग्ज्ञानेन विदेह-कैवल्यं इति चतुर्थः (४-४-७)।

इमे विचाराः क्रमेण संकल्पाद्यधिकरणेषु कृताः। एवं तृतीयतुरीयाध्याययोः क्रमेण सप्तषष्टिः अष्टत्रिंशच्च (६७) विचाराः सगुणनिर्गुणसंबन्धिनः कृताः।

एवं ब्रह्मसूत्रे अध्यायचतुष्टये षोडशसु पादेष्वपि कृतैः मिलित्वा एकनवत्युत्तरशत-संख्याकैः १९१ विचारैर्निष्पन्नोऽयमर्थः—यत् अधिकारी पुरुषः साधनाध्यायोदितानि सम्यग्ज्ञानबहिरङ्गान्तरङ्गसाधनान्यनुष्ठाय सर्वप्रमाणाविरुद्धं परमप्रमाणवेदान्तपरमतात्पर्यगोचरं अद्वितीयं निर्विशेषं निर्गुणं प्रत्यगभिन्नं पारमार्थिकं परं ब्रह्म साक्षात्कृत्य इहैव सच्चिदानन्द-ब्रह्मात्मनावस्थितिरूपां सद्योमुक्तिशब्दितां परमुक्तिं, यद्वा प्रमाणान्तराविरुद्धं वेदान्तावान्त-रतात्पर्यगोचरं सविशेषं सगुणं व्यावहारिकमपरं ब्रह्म अहंग्रहेण आप्रायणमुपास्य साक्षात्कृत्य अर्चिरादिमार्गेण ब्रह्मलोकं गत्वा तत्र दिव्यं भोगमनुभूय भगवदनुग्रहासादितसम्यग्ज्ञानक्रमेण मुक्तिप्राप्तिरूपामपरमुक्तिं वा प्राप्य कृतकृत्यः प्राप्तप्राप्यश्च भूयादिति।

तदयं सङ्ग्रहः —

परहंसाः परमुक्तिं गताः परब्रह्मविषयपरविद्याम्। (जातां परतात्पर्यात् परप्रमाणाद-वाप्य परभाग्यात्॥ (अपरे हंसा अपरब्रह्मापरविद्ययाऽपरां मुक्तिम्। (श्रुतिरधिगतयाऽवान्तर-तात्पर्ययुजाऽपरप्रमाणेन॥ इति(परापरप्रमाणे च ज्ञानकाण्डोपासनाकाण्डरूपे।

ब्रह्मसूत्रे चास्मिन् भगवता बादरायणेन ब्रह्मसत्यत्वं जगन्मिथ्यात्वं जीवब्रह्मैक्यं च ब्रह्मजगज्जीवतत्वं 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' इति वेदान्ततात्पर्यगोचरत्वेन पूर्वाचार्यैः परिगणितं त्रयमप्याविष्कृतम्।

तथाहि—'असंभवस्तु सतोऽनुपपत्तेः' (२-३-९) इति सूत्रे ब्रह्मणो जन्यत्वाभाव-प्रतिपादके सत्यत्वबोधकेन सच्छब्देन ब्रह्मणो विशेष्यनिर्देशेन, प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः (३-२-२२) इति सूत्रे ब्रह्मण्यारोपितसर्वप्रपञ्चनिषेधावधित्वेन ब्रह्मपरिशेषणेन च ब्रह्मैव सत्यमिति प्रदर्शितम्।

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (२-१-१४) 'आत्मनि चैवं विचित्राश्च हि' (२-१-२८) इति सूत्राभ्यां ब्रह्मव्यतिरेकेण प्रपञ्चाभावस्य, स्वप्नदृशि स्वाप्नसृष्टिवत् ब्रह्मणि स्वरूपानुपमर्देनैव प्रपञ्चसृष्टेश्च प्रतिपादकाभ्यां विवर्तवादस्फुटीकरणेन, प्रकृतैतावत्त्वाधिकरणे (३-२-६) पराधिकरणे च (३-२-७) ब्रह्मव्यतिरिक्तकृत्स्नप्रपञ्चप्रतिषेधेन, 'उपमर्दश्च' (३-४-१६) इति सूत्रे, कलाप्रलयाधिकरणे (४-२-७) कलाऽविभागाधिकरणे(४-२-८) च कृत्स्नप्रपञ्चस्य निर्विशेषविदुषो ज्ञाननिवर्त्यत्वप्रतिपादनेन च प्रपञ्चो मिथ्येति प्रदर्शितम् ।

संध्याधिकरणे (३-२-१) स्वाप्नप्रपञ्चस्य मायामात्रत्वं प्रसाध्य 'वैधर्म्याच्च न स्वप्नादिवत्' (२-२-२९) इति बौद्धमतनिरासकसूत्रे जागरिकप्रपञ्चस्य तद्वैधर्म्य-प्रतिपादनात् सूत्रकृतः प्रपञ्चमिथ्यात्वं नाभिमतमिति तु न शङ्कनीयम् ।

जगरिकस्वाप्नप्रपञ्चद्वयस्य मिथ्यात्वाविशेषेऽपि, स्वाप्नस्य प्रातिभासिकत्वं, जागरिकस्य व्यावहारिकत्वं, इति वैधर्म्यसत्वात् । एतादृशवैधर्म्यस्फुटीकरणायैव प्रपञ्चसामा-न्यस्य तदनन्यत्वाधिकरणे मिथ्यात्वसाधनेऽपि, पुनः विशिष्य स्वाप्नप्रपञ्चस्य सन्ध्याधिकरण मिथ्यात्वसाधनम् । एवमेव च कल्पतर्वादौ विवृतम् । अन्यथा सन्ध्याधिकरणे-वैयर्थ्यापातात् । स्वाप्नस्यापि जागरिकप्रपञ्चतौल्येन सत्यत्वाभ्युपगन्तॄणां मतेऽपि सूत्रोक्तवै-धर्म्यस्य कथञ्चिदुपपादनीयत्वाच्च ।

सूत्रकृतः प्रपञ्चस्य यावद्ब्रह्मसाक्षात्कारमबाध्यत्वरूपव्यावहारिकसत्वाभिप्रायेणैव परिणामवादमवलम्ब्य भोक्त्रापत्त्यधिकरणं (२-१-५) सगुणोपासनप्रपञ्चश्च । तथा चोक्तं तदनन्यत्वाधिकरणे (२-१-६) भगवत्पादैः 'सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्व-मित्याह । व्यवहाराभिप्रायेण तु 'स्याल्लोकव'दिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति सगुणेषूपासनेषूपयोक्ष्यते इति' इति ।

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (१-१-३०) 'अवस्थितेरिति काशकृत्स्नः' (१-४-२२) 'अतोऽनन्तेन तथाहि लिङ्गम्' (३-२-२६) इति सूत्रेषु 'आत्मेति तूप-गच्छन्ति' (४-१-३) 'अविभागेन दृष्टत्वात्' (४-४-२) इत्यधिकरणयोश्च जीवब्रह्मैक्यं प्रदर्शितम् । 'आभास एव च' (२-३-५०) इति सूत्रे प्रतिबिम्बवादमभिप्रेत्य, 'प्रकाशादि-वच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्, (३-२-२५) इति सूत्रे च अवच्छेदवादमभिप्रेत्य, औपाधिको जीवब्रह्मभेद इत्युक्तम् । 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (१-३-१९) 'पराभि-ध्यानात्त तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (३-२-५) 'एवमप्युपन्यासात्पूर्वभावादविरोधं

बादरायणः' (४-४-७) इति सूत्रैः मुक्तौ जीवस्य अपहतपाप्मत्वादिब्राह्मगुणाष्टकाविर्भाव-प्रदर्शनेन तद्गुणकपरमेश्वरभावः स्फुटीकृतः ।

चराचरव्यपाश्रयाधिकरणे (२-३-१०) आत्माधिकरणे (२-३-११) कर्मानुस्मृतिशब्दविध्यधिकरणे (३-२-३) 'उत्पत्त्यसंभवात्' (२-२-४२) इति पाञ्चरात्राधिकरणसूत्रे च जीवस्य, असंभवाधिकरणे (२-३-३) ब्रह्मणश्च, द्वयोरेव नित्यत्वमुक्तं ब्रह्मसूत्रे, न कस्यचिदन्यस्य नित्यत्वमुक्तं कुत्रचित् । प्रत्युत 'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' (२-२-१५) 'प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः' (२-३-६) 'यावद्विकारन्तु विभागो लोकवत्' (२-३-७) इति सूत्रैः प्रत्यगभिन्नब्रह्मव्यतिरिक्तस्य कृत्स्नस्य आविद्यकप्रपञ्चस्य ब्रह्मकार्यत्वेन अनित्यत्वमुक्तम् । अतो वैकुण्ठकैलासादिलोकविशेषाणामपि सगुणोपासकप्राप्यानां ब्रह्मलोकावान्तरभूमिरूपाणां ब्रह्मकार्यत्वेनानित्यत्वमेव सूत्रकृदभिमतं प्रतीयते । वैकुण्ठादिलोकानां सत्यलोकाख्यब्रह्मलोकावान्तरभूमिरूपत्वञ्च "सत्यलोक एव कक्ष्यादिभेदेन ब्रह्मधिष्ण्यात् परं वैकुण्ठलोकादि ज्ञेयम्" इति विष्णुपुराणव्याख्याने श्रीधरीये, भागवतव्याख्याने च तदीये, बहुश उक्तमिति ज्ञेयम् ।

परिमळेऽपि ज्योतिश्चरणाधिकरणे ('त्रिपादस्यामृतं दिवि' इति मन्त्रे) "दिवीत्यस्य सत्यलोकान्तर्गतब्रह्मविष्णुशिवभोगभूमिपरत्वं त्रिपादित्यस्य ब्रह्मादिमूर्तित्रयाभिव्यक्तिपरत्वञ्चार्थः" इति ग्रन्थेन स्फुटीकृतमिदम् ।

तादृशलोकविशेषाणां कार्यत्वादनित्यत्वाच्चैव तदुपाधिकब्रह्मणोऽपि कार्याधिकरणे ४-३-५ 'कार्यं बादरिः' 'कार्यात्यये' इत्युभयत्र कार्यत्वात्यययोः निर्देशः इत्यवगन्तव्यम् । 'कार्यं बादरि'रित्यत्र कार्यशब्देन हि सगुणं मायाशबलं अपरं ब्रह्मैवोच्यते । न तु हिरण्यगर्भरूपजीवाख्यमिति भगवत्पादभाष्यटीकादिषु परिचयवतां स्फुटम् । सगुणब्रह्मध्यायिनां तत्क्रतुन्यायेन सगुणब्रह्मप्राप्तेरेव सिद्धान्तयितुमुचितत्वात् । सगुणब्रह्मध्यायिनां हिरण्यगर्भप्राप्तिवर्णनस्य तत्क्रतुन्यायविरोधात् ।

भगवत्पादैः परापरत्वेनाभिमतनिर्गुणसगुणब्रह्मणोर्मध्ये निर्गुणं परं ब्रह्मापलप्य सगुणमेव लोकविशेषावस्थितं परब्रह्मत्वेन येऽध्यवस्यन्ति तेषामेव मते 'कार्यं बादरि' रित्यत्रत्यकार्यपदस्य हिरण्यगर्भपरतया व्याख्यानम् । तेषां सगुणवाचकत्वेनाभिमतपरशब्दप्रतिद्वन्द्विकार्यशब्देन सगुणब्रह्मग्रहणायोगात् । भगवत्पादमते तु निर्गुणपरब्रह्मबोधकत्वेनाभिमतपरशब्दप्रतिद्वन्द्विकार्यशब्देन सगुणापरब्रह्मग्रहणे बाधकाभावात् । तत्र साधकस्योक्तत्वाच्च ।

अयमभिप्रायः गणेशगीताव्याख्यायां भारतव्याख्यातृश्रीनीलकण्ठप्रणीतायां "देहान्ते च अर्चिरादिमार्गेण मूर्धन्यनाड्या कार्यब्रह्मलोकप्राप्तिः । तदेव नित्यं परं ब्रह्मेति मोहात् केचिन्मन्यन्ते । तत्सूत्रितं 'परं जैमिनिर्मुख्यत्वात्' इति" इति दर्शनात् स्फुटीभवति ।

ब्रह्मविद्याभरणे च भाष्यटीकायां "यद्यप्यस्यां ('एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः' इति) श्रुतौ हिरण्यगर्भोऽपरं ब्रह्म, बिम्बरूपं परं ब्रह्मेति विवक्षितं, प्रकृते तु सोपाधिकं बिम्बरूपं अपरं, निरुपाधिकमेव परमिति विभागो विवक्षितः" इत्यादिग्रन्थेन कार्याधिकरणे विवक्षितं कार्यं ब्रह्म सगुणं, न हिरण्यगर्भरूपमिति स्फुटीकृतमिति संशयलेशस्याप्यनवकाशः ।

सगुणब्रह्मणश्च जगत्कारणस्य कार्यत्वं लोकाद्युपाधिककार्यत्वेनैवोपपादनीयम् । अत एव 'ब्रह्म गमयति' इति छान्दोग्यपाटस्थाने 'ब्रह्मलोकान् गमयति' इति बृहदारण्यके भोगभूमिवाचकबहुवचनान्तलोकशब्दात् 'ब्रह्म गमयती'त्यत्रत्यं गन्तव्यबोधकं ब्रह्मपदं कार्यब्रह्मपरमित्यर्थके 'विशेषितत्वाच्च' ४-३-८ इति सूत्रे लोकोपाधिकतयैव कार्यत्वं निर्णीतम् ।

अत्र 'कार्ये त्ववस्थाभेदोपपत्तेः संभवति बहुवचनं, लोकश्रुतिरपि विकारगोचरायामेव सन्निवेशविशिष्टायां भोगभूमावाञ्जसी' इति भगवत्पादभाष्यम् । तत्र च कार्ये उपपद्यमानत्वेन बहुत्वोपपादकत्वेन च प्रोक्तः सन्निवेशविशिष्टभोगभूमिसबन्धी अवस्थाभेदः वैकुण्ठकैलासादिलोकभेदरूप एवेति सूक्ष्मेक्षिकया अवगन्तव्यम् । भाष्यस्य प्रसन्नगम्भीरत्वात् ।

अयमभिप्रायः 'ब्रह्मलोकान् गमयतीत्यादिना ब्रह्मलोकस्य बहुत्वेन विशेषितत्वादपि कार्यं ब्रह्मैव गन्तव्यम् । ब्रह्मविष्णुरुद्रीयादिरूपेण सत्यलोकस्यावान्तरतो नानात्वात्' इति विज्ञानभिक्षुप्रणीतविज्ञानामृताख्यब्रह्मसूत्रभाष्यदर्शने स्फुटीभविष्यति, यद्यपि स मतान्तरावलंबी ।

'स्वाप्ययसंपत्त्योः' ४-४-१६ इत्यादिसूत्रभाष्येऽपि भगवत्पादैः 'सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरं, यत्रैतदैश्वर्यमुपवर्ण्यते' इत्यादिना इदमेवोक्तम् । 'कार्यं बादरि'रिति सूत्रस्थकार्यपदसमानार्थकस्य 'कार्यात्यये' इति सूत्रस्थकार्यपदस्य विवरणावसरे 'कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति' इति व्याख्यानादपि कार्यपदं लोकोपाधिकसगुणब्रह्मपरमिति भगवत्पादैर्विवृतम् ।

परन्तु 'कार्यात्यये' इति सूत्रे 'कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनास्सन्तः तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते' इति भाष्ये व्याख्यातम्। तत् कथं सङ्गच्छते कार्यब्रह्मलोकपदेन वैकुण्ठकैलासादीनां ग्रहणे हिरण्यगर्भस्य जीवस्य तदध्यक्षत्वाभावात् इति शंका स्यात्।

तस्या इत्थं समाधानं भाति—भगवत्पादसिद्धान्तावलम्बेन सगुणब्रह्मोपासकानां तत्क्रतुन्यायेन सगुणब्रह्मण एव लोकविशेषोपाधिकस्य प्राप्यत्वस्यावश्याभ्युपेयत्वे सति, हिरण्यगर्भलोक एव सत्यलोकाख्यः सगुणब्रह्माभिव्यक्तिविशेषविशिष्टवैकुण्ठकैलासादिबहुविधप्रदेशविशेषभागी, तस्य च लोकस्य हिरण्यगर्भ एवाध्यक्षः, तस्य च जीवन्मुक्तस्य आधिकारिकपुरुषस्य महाप्रलये सत्यलोकविनाशे विदेहमुक्तिः, उपासकानामपि तेन सह विदेहमुक्तिरिति। अथवा, भाष्ये 'तदध्यक्षेण हिरण्यगर्भेण सह' इत्येतत् वैकुण्ठकैलासाद्यध्यक्षविष्णुशिवादितत्तत्सगुणब्रह्ममूर्तिभेदोपलक्षणम्। तेषामपि हि मूर्तिभेदोपाधिकसगुणब्रह्मणां महाप्रलये लोकसन्निवेशविशेषमूर्तिविशेषाद्युपसंहारपूर्वकं अव्याकृतमायाशबलरूपेण पारमार्थिकनिर्विशेषपरिशुद्धचिद्रूपेण चावस्थानं सिद्धान्ते अभ्युपगम्यत एव। वस्तुतस्तु "हिरण्यगर्भस्तु उपाधिशुद्ध्यतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृतिवादाः प्रवृत्ताः। संसारित्वन्तु क्वचिदेव दर्शयन्ति" इति बृहदारण्यकभाष्ये उक्तत्वात्, 'आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः। भूप मूर्तममूर्तञ्च परञ्चापरमेव च॥' इति विष्णुपुराणे 'मूर्तममूर्तञ्च पुनः प्रत्येकं परञ्चापरञ्चेति द्विधा, तत्र परममूर्तं निर्गुणं ब्रह्म, अपरममूर्तं षड्गुणैश्वर्यरूपं, परं मूर्तं पद्मनाभादिलीलाविग्रहरूपं, अपरं मूर्तं हिरण्यगर्भादिविश्वरूपम्' इति श्रीधरस्वामिव्याख्याने उक्तत्वाच्च, हिरण्यगर्भस्य उपाधिशुद्ध्यतिशयादीश्वरस्वरूपत्वेन तस्य सर्वलोकाध्यक्षत्वे न किञ्चिदनुपपन्नम्।

पराशरमाधवीये 'कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः। श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदा॥' इति मूलश्लोकविवरणावसरे 'ब्रह्मणोऽन्ते मुनिश्रेष्ठाः मायायां लीयते जगत्। तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ॥' इति, 'संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु' इति च, सूतसंहिताकूर्मपुराणादिप्रमाणवचनोपन्यासपूर्वकं 'तदेवं ब्रह्मविष्णुमहेश्वराः तस्मिन् महाकल्पावसाने क्षीयन्ते, पुनस्तत्कल्पादावुत्पद्यन्ते, इति सिद्धम्' इति ग्रन्थेन महाप्रलये शिवविष्ण्वादिमूर्तीनामुपसंहारः स्फुटीकृत इति नात्रापसिद्धान्तशङ्काकलङ्कावकाश इति कृतमधिकेन।

अस्य च ब्रह्मसूत्रस्य विवरणरूपाः भाष्यपञ्चपादिकाविवरणतत्त्वदीपनभामती-कल्पतरुपरिमलादयोऽसंख्येयाः पूर्वाचार्यप्रणीता ग्रन्थास्सन्ति । तथापि दुरधिगममपि तदर्थमक्लेशेन संक्षिप्य जिज्ञासमानानामनुग्रहाय अक्षरसंक्षेपवतीमर्थबहुलामन्वर्थां मिताक्षरानाम्नीमिमां ब्रह्मसूत्रवृत्तिं सर्वतन्त्रस्वतन्त्रः श्रीमानन्नंभट्टः प्रणिनाय । अत्र च भामतीकल्पतरुवैयासिकन्यायमालादिप्रदर्शितवर्त्मना ब्रह्मसूत्रार्थस्स्फुटीकृतः । क्वचित् कल्पतरुन्यायमालाग्रन्थसमानानुपूर्व्यपि दृश्यते । आरम्भ एव च ग्रन्थकृता 'वृत्तिं मिताक्षरां कुर्वे भामत्यादिमतानुगाम्' इति प्रतिज्ञातम् ।

विवरणभामतीमतद्वयानुरोधेन जिज्ञासासूत्रं व्याख्यातम् । तत्र श्रवणविधिविचारः जिज्ञासापदलक्षणाविचारश्च सविशेषं कृतः ।

जन्माद्यधिकरणे च 'आद्यस्य ब्रह्मणः चतुर्मुखस्य यतो जन्म तत् ब्रह्म' इति केषांचित् सूत्रार्थवर्णनं निरस्य, 'तस्मादाचार्यभगवत्पादीयमेव व्याख्यानं रमणीयमिति । एवमन्यत्र द्रष्टव्यम्' इत्युक्तम् । शिवार्कमणिदीपिकायां च श्रीकण्ठभाष्यव्याख्यायां इदं निरस्तं श्रीमदप्पय्यदीक्षितैः । न्यायरक्षामणौ तु तैः 'केचिदाद्यस्य हिरण्यगर्भस्य जन्म यत इति सूत्रं योजयन्ति । सोप्यर्थः सूत्रमूलभूतं लक्षणवाक्यं हिरण्यगर्भपरमिति शंकानिरासार्थत्वेन सूत्रावृत्त्या विवक्षितुं शक्यते इति नोपेक्षणीयः' इत्युक्तम् । अयं सूत्रार्थवर्णनप्रकारः कस्येति न ज्ञायते । वल्लभाचार्यभाष्ये तु 'आद्यस्य आकाशस्य यतो जन्म' इति अर्थान्तरं सूत्रस्य प्रकृष्टत्वेन निरूपितम् ।

समन्वयसूत्रे च अविद्यानिवृत्तेः सत्त्वानिर्वचनीयत्वपञ्चमप्रकारत्वपक्षाः वेदान्तानां ज्ञानविधिपरत्वाभावश्च विशदीकृताः ।

दहराधिकरणे 'उत्तराच्चेदित्यादिसूत्रत्रयमधिकरणान्तरत्वेन अधिकरणमालायां व्याख्यातम्' इत्यनेन श्रीविद्यारण्यश्रीचरणकृता वैयासिकन्यायमाला नाम्ना निर्दिष्टा ।

'ललितैः पदविन्यासैः या नृत्यति विबुधवदनरङ्गेषु । सच्छास्त्रवेदवाक्यैः सरस्वतीं तां नमस्यामः ॥' इति प्रथमाध्यायतृतीयपादोपक्रमे स्वकृतपद्यान्वर्थताप्रकटनायेव सच्छास्त्रवेदवाक्यार्थनिरूपकैः प्रत्यधिकरणं विषयसंशयपूर्वोत्तरपक्षयुक्तिप्रकाशकैः मधुरललितपदविन्यासैः आन्तं ब्रह्मसूत्राणि सुबोधया हृदयङ्गमया शैल्या ग्रन्थकर्त्रा व्याख्यातानीत्येतत् एतद्ग्रन्थपरामर्शकानां हृदयसाक्षिकम् । नात्र मात्रयाप्यत्युक्तिः ।

अयञ्च ग्रन्थकारः सर्वतन्त्रस्वतन्त्रः चतुर्ष्वपि तन्त्रेषु उपादेयतमान् बहून् ग्रन्थान् व्यरचयत् । तर्कशास्त्रे काणादन्यायमतयोर्बालव्युत्पादकः तर्कसंग्रहः, शिशुहिता तर्कसंग्रहदीपिकानाम्नी तस्य टीका, इति लघुग्रन्थद्वयं विरचितम् । आसेतुहिमाचलं तमेव ग्रन्थं तर्कशास्त्रे प्रविविक्षवस्सर्वेऽपि छात्राः अधीयते इति सर्वानुभवसिद्धमिदम् । तयोश्च मूलटीकाग्रन्थयोः असंख्या व्याख्या विलसन्ति ।

अपरमपि तत्वचिन्तामणिदीधितिव्याख्या सुबुद्धिमनोहरा, तत्वचिन्तामण्यालोकव्याख्या सिद्धाञ्जनाभिधा, इति प्रौढं ग्रन्थद्वयं तर्कशास्त्रे प्रणीतम् ।

व्याकरणशास्त्रे महाभाष्यप्रदीपोद्योतनं कैयटग्रन्थव्याख्यारूपं, मिताक्षरानाम्नी पाणिनीयसूत्रवृत्तिः, इति ग्रन्थद्वयं प्रणीतम् ।

पूर्वमीमांसायां न्यायसुधाव्याख्या राणकोज्जीविनी, तन्त्रवार्तिकटीका सुबोधिनी, इति ग्रन्थद्वयं व्यरचि । स्वरविवेकोपि कश्चित् ग्रन्थः कृतः ।

उत्तरमीमांसाशास्त्रे इयं ब्रह्मसूत्रवृत्तिः मिताक्षरा, तत्वविवेकदीपनं, इति ग्रन्थद्वयं कृतम् । आहत्य एकादशग्रन्थाः नामतो ज्ञायन्ते ।

अस्य च जन्मभूमिः आन्ध्रदेशे कृष्णानदीवातपूतः ग्रामविशेषः । अयं च कौशिकगोत्रे सम्भूतः महामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यसूनुरन्नंभट्टनामा इति एतद्ग्रन्थसमाप्तिवाक्यादवगम्यते ।

अयं च काश्यां न्यायशास्त्रादिकमधीत्य तत्रैव ग्रन्थान् चकार इति ज्ञायते । अत एव "निधाय हृदि विश्वेशम्" इति तर्कसंग्रहे "विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य' इति तर्कसंग्रहदीपिकायां "विश्वेश्वरं नमस्कृत्य" इति प्रकृतब्रह्मसूत्रवृत्त्युपक्रमे च विश्वेश्वरं काशीक्षेत्रकृतसन्निधानं भगवन्तं परमेश्वरं स्मरति । अत एव च 'काशीगमनमात्रेण नान्नंभट्टायते द्विजः' इति अन्नंभट्टप्रशंसारूपा किंवदन्ती ।

अयं च शिवभक्तः भगवत्पादीयाद्वैतमते दृढानुरागवांश्च इति ज्ञायते । अतएव श्रीमहाभाष्यप्रदीपोद्योतनारम्भे "शिवयोरशाश्वतैकत्वं तनोतु शुभसन्ततिम् । निदर्शयितुमद्वैतं भजतामिव संगतम् ॥' इति मङ्गलश्लोकं लिलेख । कैयटप्रणीतप्रदीपमङ्गलश्लोकविवरणावसरेऽपि अद्वैतसिद्धान्ताभिमतान् बहूनर्थान् न्यरूपयत् ।

अस्य च महाभाष्यगुरुः श्रीशेषवीरेश्वर इति, प्रदीपोद्योतने विद्यमानात् 'श्रीशेषवीरेश्वरपण्डितेन्द्रं शेषायितं शेषवचोविशेषे । सर्वेषु तन्त्रेषु च कर्तृतुल्यं वन्दे

महाभाष्यगुरुं ममाग्रयम् ॥ " इति पद्यादवगम्यते । पण्डितराजजगन्नाथस्य पिता पेरुभट्टोऽपि तस्मादेव महाभाष्यमधीतवानिति 'शेषाङ्कप्राप्तशेषामलफणिति'रिति रसगङ्गाधरपद्यात् 'शेष इत्यङ्कः उपनाम यस्य तस्मात् वीरेश्वरपण्डितात्' इति श्रीनागेशकृतविवरणात् ज्ञायते ।

प्रक्रियाकौमुदीटीकायाः प्रक्रियाप्रकाशस्य कर्तुः शेषवीरेश्वरपण्डितपितुः शेषश्रीकृष्णपण्डितस्य शिष्यः शेषवीरेश्वरपण्डितसब्रह्मचारी भट्टोजिदीक्षित इति च चरित्रविमर्शकानां प्रसिद्धम् । तथा च भट्टोजिदीक्षितसब्रह्मचारिशेषवीरेश्वरपण्डितात् अन्नंभट्टः जगन्नाथपण्डितराजपिता पेरुभट्टश्च महाभाष्यमधीतवन्तौ इत्यवगमात् अन्नंभट्टः भट्टोजिदीक्षितात् न्यूनवयाः जगन्नाथपण्डितराजादधिकवयाः तयोस्समकालिक इति, तदीयसमयतया चरित्रविमर्शकनिर्णीतक्रैस्तवाब्दीयसप्तदशशतकपूर्वभाग एवान्नंभट्टसमय इति निश्चीयते ।

इदंप्रथमतया कृतमुद्रणे चास्मिन् श्रीमदन्नंभट्टप्रणीतमिताक्षराख्यब्रह्मसूत्रवृत्तिग्रन्थे मानुष्यकसुलभेन प्रमादादिना संशोधनादिषु संजातान् अपभ्रंशान् संशील्य संशोध्य समनुगृह्णीयुस्सहृदया इति संप्रार्थ्योपसंह्रियते ।

प्रास्ताविकावलोकनेनैव अस्मिन् ग्रन्थे प्रतिपादिता विषया ज्ञायेरन्निति विषयानुक्रमणिका पृथक् न योजिता । इति शम् ॥

यस्स्फोरयन् स्वपरसाधकबाधकानि तत्तन्मतेष्वभिरुचिं जनयन्निवेश्य ।
नानाविधानधिकृतान् क्रमशो महेशो मुक्तिं निनीषति स पात्वखिलान्तरात्मा ॥

इत्थं श्रीरामाख्यश्शास्त्री श्रीपोलकाग्रहारजनुः ।
मद्रपुरसंस्कृतकलाशालीवेदान्तबोधको ऽलिखत् ॥

---

॥ श्रीः ॥

# ॥ अधिकरणानुक्रमणिका ॥



पृष्ठम्

पृष्ठम्

॥ अधिकरणानुक्रमणिका समाप्ता ॥

# ॥ श्री ब्रह्मसूत्रवृत्तिः ॥

## ॥ मिताक्षरा ॥

॥ अन्नम्भट्टकृता ॥

विश्वेश्वरं नमस्कृत्य ब्रह्मसूत्रार्थबोधिकाम् ।
वृत्तिं मिताक्षरां कुर्वे भामत्यादिमतानुगाम् ॥

(१) ॥ जिज्ञासाधिकरणम् ॥

### ॥ अथातो ब्रह्मजिज्ञासा ॥ ॥-१-॥

तत्रतावत् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' (बृह०. ४-५-६) इति फलमनूद्य तत्साधनत्वेन श्रवणं विधीयते । श्रवणं नाम वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलो न्यायविचारः । तादृशन्यायविचारात्मकं वेदान्तशास्त्रमारम्भणीयमनारम्भणीयं वेति सन्देहः । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं सन्देहबीजं द्रष्टव्यम् ।

तत्र वेदान्तशास्त्रमनारम्भणीयं विषयप्रयोजनाभावात् । तथाहि । सन्दिग्धं हि न्यायविचारविषयः, सन्दिग्धे न्यायः प्रवर्तत इति न्यायात् । ब्रह्म त्वसन्दिग्धं, तत्किं ब्रह्मात्मना सन्देहविषयः जीवात्मना वा ? नाद्यः, 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०. २-१) इत्यादिभिः ब्रह्मस्वरूपस्य निश्चितत्वात् । न द्वितीयः, अहंप्रत्ययेन जीवस्वरूपस्यापि निश्चितत्वात् ।

नच 'तत्त्वमसि' (छा०. ६-८-७) 'अयमात्मा ब्रह्म' (माण्डू०. २) इत्यादिभिः ऐक्यप्रतिभासनादहंप्रत्ययेन च भेदप्रतिभासनात्सन्देहः, अबाधिताहंप्रत्ययविरोधेन श्रुतेरुपचरितार्थत्वात् । न चाध्यस्ताहंकारविषयत्वेन अहंप्रत्ययस्य दुर्बलत्वं, स्वयंप्रकाशे ब्रह्मणि कर्तृत्वाध्यासासम्भवात् । तस्मान्न विषयः सम्भवति ।

नापि प्रयोजनम् । उक्तरूपब्रह्मज्ञानेऽपि मुक्तेरदर्शनात् । तस्माद्ब्रह्मविचारात्मकं शास्त्रमनारम्भणीयमिति पूर्वःपक्षः । राद्धान्तस्तु वेदान्तशास्त्रमारम्भणीयं, विषयप्रयोजनसद्भावात्, श्रुत्यहंप्रत्ययविरोधेन सन्देहात् ।

नच श्रुतेरुपचरितार्थत्वं; उपक्रमादितात्पर्यलिङ्गसहकृतानेकवाक्यानामुपचरितार्थत्वस्य वक्तुमशक्यत्वात् । अहंप्रत्ययस्य 'मनुष्योऽहं' इत्यादौ परैरपि भ्रमत्वाङ्गीकारात् कर्तृत्वाद्यंशोऽपि श्रुतिबलाद्भ्रमत्वमास्थेयमिति नाध्यासानुपपत्तिः ।

न च स्वयंप्रकाशेऽध्यासासम्भवः, अनाद्यविद्यावशात्स्वयंप्रकाशेऽपि अध्यासस्यानुभवसिद्धतया स्वरूपज्ञानस्य तदविरोधकल्पनात् । दृष्टानुसारित्वात्कल्पनायाः ।

तदुक्तं टीकायां 'नैव दृष्टेऽनुपपन्नं नामे' ति । नचैवमविद्यानिवृत्त्यनुपपत्तावनिर्मोक्षप्रसङ्गः, श्रवणमनननिदिध्यासनक्रमेण ब्रह्मात्मसाक्षात्कारे सत्यविद्यानिवृत्तिसम्भवात् ।

तथा च श्रुतिः 'तरति शोकमात्मवित्' (छा०-७-१-३)

'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य' (मुण्ड-२-१-१०) इति । तस्माद्विषयप्रयोजनसद्भावाच्छास्त्रमारम्भणीयमिति ।

ननु श्रवणं विधीयत इत्यनुपपन्नम् 'श्रु श्रवणे' इति धातोः शब्दकर्मतया श्रावणज्ञानार्थत्वात्, तस्य चाविधेयत्वात्, अध्ययनविधिप्रयुक्तवेदाध्ययनादेव श्रावणज्ञानस्य वृत्तत्वात् ।

नच 'वेदार्थं शृणोति' इत्यादिप्रयोगदर्शनादर्थज्ञानेऽपि धातोः शक्तिरिति वाच्यम् । तत्र लक्षणयैव प्रयोगोपपत्तौ शक्तिद्वयाकल्पनात् । 'वीणानादं शृणोति' इत्यादावर्थज्ञानाभावेन वैपरीत्यशङ्कानवकाशात् । अस्तु वाऽर्थज्ञानेऽपि शक्तिः, तथापि तदपि न विधेयं, अधीतसाङ्गस्वाध्यायस्य विदितपदपदार्थसङ्गतेः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०-२-१) इत्यादिवाक्यैः विधिं विनैव जातत्वात् ।

ननु आपातप्रतिपत्तिस्सा, अवधारणात्मकं तु ज्ञानमध्ययनमात्रान्न प्राप्यत इति चेत्, न, तस्याप्यध्ययनविधिप्राप्तत्वेन विध्यनर्हत्वात् । न चात एव विचारः श्रवणशब्देन विवक्षित इति वाच्यम्, विधौ लक्षणापत्तेरिति चेत्----

अत्राहुः—'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादि 'आत्मानस्तु कामाय सर्वं प्रियं भवति' (बृह०. ४-५-६) इत्यन्तेन आत्मन एव निरतिशयसुखरूपत्वेन परमपुरुषार्थत्वमुक्त्वा, "आत्मनि विज्ञात इदं सर्वं विदितम्" (बृ०-४-५-६) 'एतावदरे खल्वमृतत्वम्' (बृ०-४-५-१५) इत्युपसंहारादात्मज्ञानमेव तत्प्राप्त्युपाय इति निश्चीयते । तथाच तादृशात्मज्ञानं 'द्रष्टव्य' इत्यनूद्यते । दर्शनसाधनापेक्षायां वेदान्तवाक्यमेव तत्साधनं, तच्चाविचारितं न निश्चयाय अलमिति मनननिदिध्यासनसहकृतं विचारितवेदान्तवाक्यं आत्मसाक्षात्कारहेतुरित्ययमर्थः संपद्यते ।

न च विधौ लक्षणा काप्यदृष्टचरी ; 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्यत्र देशविशेषलक्षणायाः, 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्र वयोविशेषलक्षणायाः,

" उच्चैर्ऋचा क्रियते " इत्यादौ ऋगादिपदे वेदलक्षणायाः, ' यावतोऽश्वान्प्रतिगृह्णीयात् ' इत्यत्र णिजर्थलक्षणायाः, ' नेक्षेतोद्यन्तमादित्यम् ' ' नार्षेयं वृणीते ' इत्यादौ पर्युदासलक्षणायाः, ' न कलञ्जं भक्षयेत् ' इत्यादौ पुरुषार्थनिषेधे यत् सर्वं बलवदनिष्टसाधनं तल्लक्षणायाश्च बहुलमुपलब्धेः । तस्माल्लक्षणया विचारविधिःयुक्तः ।

ननु विचारोऽपि विचार्यविनिर्णयहेतुत्वेन लोकसिद्धः इति कथं विधीयत इति चेन्न । अपूर्वविध्यसम्भवेऽपि नियमविधेरवकाशात् । तथाहि - त्रयः खलु विधिप्रकाराः, अपूर्वविधिः नियमविधिः परिसङ्ख्याविधिश्चेति । तत्र कालत्रयेऽपि मानान्तराप्राप्तस्य प्राप्तिफलो विधिराद्यः, यथा 'व्रीहीन्प्रोक्षति ' इति । अत्र विधिव्यतिरेकेण प्रोक्षणं केनापि न प्राप्तम् । पक्षप्राप्ते अप्राप्तांशपरिपूरणफलो द्वितीयः, यथा ' व्रीहीनवहन्ति ' इति । अत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेव अवहननं प्राप्यत इति नापूर्वविधिः । किन्त्वाक्षेपान्नखविदलनमपि प्राप्नुयादिति तदानीमप्यवहननप्राप्त्यर्थः । द्वयोरेकत्र नित्यप्राप्तावितरनिवृत्तिफलको विधिस्तृतीयः, यथा ' इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इति । अत्र लिङ्गादेव मन्त्रो रशनाग्रहणे नित्यं प्राप्नोतीति नापूर्वनियमविधी । किन्तु लिङ्गाविशेषादश्वाभिधान्यामिव गर्दभाभिधान्यामपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः । एवञ्च ' अवहन्ति ' इतिवत् ' श्रोतव्य ' इति नियमविधिः ।

न च व्यावर्त्याभावः, भिन्नात्मविचारस्य व्यावर्त्यत्वात् । नच तस्य मोक्षसाधनविज्ञाने प्राप्त्यभावः, ' द्वा सुपर्णा ' ( मुण्ड०. ३-१-१) इत्यादिवाक्यादापातप्रतिपत्तिदशायां तस्यापि प्राप्तिसम्भवात् ।

न च वस्तुतस्साधनान्तरप्राप्तावेव नियमविधिः । तदा अपूर्वीयव्रीहिषु नखविदलनस्याप्यप्राप्तेः नियमो न स्यात् । कथञ्चित् व्रीहिमात्रे तत्प्राप्त्या नियमे, अत्राप्यात्मज्ञानत्वेन भिन्नात्मविचारप्राप्त्या अद्वितीयात्मविचारनियमविधिरस्तु । इहात्मशब्दस्य ' इदं सर्वं यदयमात्मा ' ' आत्मनि विज्ञाते इदं सर्वं विदितम् ' (बृ०. ४-५-७-६) इति प्रकरणपर्यालोचनया अद्वितीयात्मपरत्वात् ।

समन्वयसूत्रे ( ब्र० सू०-१-१-४ ) भगवत्पादैः ' श्रोतव्य ' इत्यत्र आत्मज्ञानविधिर्निराकृतो, न तु ज्ञानोद्देशेन विचारविधिरिति न तद्विरोधोऽपीति । तस्माद्विचारविधौ न किञ्चिद्बाधकम् । एवं स्थिते श्रवणविधेरपेक्षिताधिकारिविषयफलत्रयमागमिकमपि न्यायेन निर्णेतुमिदं सूत्रं ' अथातो ब्रह्मजिज्ञासा ' इति । अत्र सूत्रे अनुवादत्वपरिहाराय

शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येति पदमध्याहर्तव्यम् । जिज्ञासापदेन विचारो लक्षणीयः । अथशब्देन च साधनचतुष्टयानन्तर्याभिधानात् साधनचतुष्टयसंपन्नेन ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतोऽर्थः । अर्थान्मोक्षसाधनं ब्रह्मज्ञानं, विचार्यश्च वेदान्तवाक्यमिति सिध्यति, औपनिषदत्वात् ब्रह्मणः, इति श्रुत्यर्थाभ्यां साधनचतुष्टयसंपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रार्थः संपद्यते ॥

ननु जिज्ञासापदेन विचारलक्षणा न युक्ता प्रकृतिप्रत्ययसमुदायस्य अशक्ततया समुदाये लक्षणानुपपत्तिरिति चेत्—

अत्राहुः—सन्प्रत्ययेन जहल्लक्षणया विचारो लक्ष्यते । प्रकृत्या च साध्यावस्थं ज्ञानमजहल्लक्षणयोच्यते । सिद्धतया उपस्थितौ साधनान्वयायोगेन साध्यतयोपस्थितेरावश्यकत्वात् प्रकृतिलक्षणाप्यावश्यिकेति लक्षणाद्वयमेव विवरणाभिप्रेतमिति ।

अत्र केचित्—प्रकृतिप्रत्ययसमुदाये एकैव लक्षणा । नच वाक्यलक्षणा अदृष्टचरी । अर्थवादे ‘ अर्धमन्तर्वेदि ’ इत्यत्र, ‘ विषं भुङ्क्ष्व ’ इत्यादौ च, दृष्टत्वात् । न च शक्यसंबन्धाभावः । समुदायशक्याभावेऽपि समुदायिशक्यसम्बन्धादेव तदर्थोपपत्तेः । सा चाजहती । न च एकरूपेण एकत्रान्वयाभावान्न सेति वाच्यम् । तस्याप्रामाणिकत्वात् । ‘ छत्रिणो गच्छन्ति ’ इत्यत्रापि छत्रित्वेन अच्छत्रित्वेन च एकान्वयित्वं, न गमनकर्तृत्वेन, गन्तारो गच्छन्तीति प्रसङ्गात् । शाब्दधियः पदार्थतावच्छेदकप्रकारतानियमात् । गन्तृत्वस्यावच्छेदकत्वे मुख्यार्थस्यापि लक्ष्यत्वप्रसङ्गाच्च ।

न चेष्टापत्तिः, मुख्यार्थसंबन्धाभावात् । एतदतिरेकेण मुख्यार्थकल्पनाप्रसङ्गाच्च । जहल्लक्षणातो भेदाभावप्रसङ्गाच्च । ततो नैकरूपेणैकत्रान्वयित्वम् । किन्तु - छत्रित्वेन अच्छत्रित्वेन च नानारूपेणैव ।

अत एव ‘ काकेभ्यो दधि रक्ष्यताम् ’ इत्यत्रापि काकत्वाकारेणैव क्रियान्वयो, न दध्युपघातकत्वाद्याकारेण । न चैकवृत्त्युपस्थापितानां परस्परमनन्वयान्न विचारज्ञानयोः अन्वयः स्यादिति वाच्यम् । तयोर्भिन्नवृत्त्युपस्थापितत्वात् । मुख्यार्थस्य लक्ष्यत्वासम्भवेन अजहल्लक्षणास्थले सर्वत्र वृत्तिद्वयाङ्गीकारात् । नच सकृदुच्चरितस्य वृत्तिद्वयमव्युत्पन्नम्, ‘ गङ्गायां घोषमत्स्यौ ’ इत्यत्र दृष्टत्वात् ।

न च विरम्यव्यापारः, तात्पर्यपर्यवसानस्यैव भेदकत्वात् । तस्मात्समुदाये अजहल्लक्षणायां न किञ्चिद्बाधकम् ।

वस्तुतस्तु—जिज्ञासापदं तन्त्रेणोपात्तं, तत्रैकेन जहल्लक्षणया विचारो बोध्यते, इतरेण इष्यमाणज्ञानमभिधया बोध्यते, इति न किञ्चिदनुपपन्नम्। एवमेकलक्षणयैवोपपत्तौ न लक्षणाद्वयं, गौरवात्। प्रत्ययलक्षणायाः क्वाप्यदृष्टत्वाच्च। किञ्च - इष्यमाणज्ञानत्यागेन तस्यैव पुनः स्वीकाराद्वान्तभोजनन्यायप्रसङ्गः। अपि च - ज्ञानस्य फलत्वान्वयानुपपत्त्या हि साध्यत्वं लक्ष्यम्। तत्र मोक्षसाधनस्यैव फलत्वमिति तदन्तोऽपि लक्ष्येत?।

न चेष्टापत्तिः—तस्यार्थिकत्वकथनविरोधात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनियमाच्च। जिज्ञासापदेनेति ग्रन्थविरोधाच्चेति।

अत्राहुः— वाक्ये तावन्नैका लक्षणा सम्भवति। शक्यसंबन्धस्य लक्षणात्वात्। शब्दादन्वयबोधकादर्थादुपस्थितस्यैव विषयत्वव्युत्पत्त्या सर्वत्र शक्तिकल्पने गौरवादनन्यलभ्यस्य शब्दार्थत्वात्। शक्यसम्बन्धेनोपक्षिप्तस्यापि तात्पर्यवशात्तद्विषयत्वमङ्गीक्रियत इति शक्यभेदे तत्सम्बन्धानामपि भेदात्कथमेकत्वम्?। एवञ्च अर्थवादादिस्थलेऽपि पदानामेव वाक्यार्थद्वारा प्राशस्त्यादिलक्षकत्वं प्रत्येकमेव। न तु वाक्ये काचित् व्यासज्यवृत्तिलक्षणा। पदानां तदर्थानां तत्तत्संम्बन्धानाञ्च नानात्वेन लक्षणाया एकत्वासम्भवः। एवञ्च वाक्यार्थसम्बन्धेन यत्र वस्त्वन्तरं पदैर्लक्ष्यते तत्र वाक्यलक्षणा। यथा 'अधमन्तर्वेदि' इत्यादौ। तद्भिन्ना पदलक्षणेति शास्त्रे व्यवहारः। एवं स्थिते प्रकृतेऽपि समुदाये एका लक्षणा समुदायिशक्यसम्बन्धादेव तदुपपत्तेरिति वदतां कथमेकत्वम्?। समुदायिनां भेदेन तच्छक्यसम्बन्धस्यापि भेदात्। न वा एकप्रतीतिजनकत्वेन लक्षणानामेकत्वम्। इष्टापत्तेः। तथा सत्यन्यतरलक्षणयैव विचारोपस्थितौ लक्षणाद्वयेनापि तदुपस्थित्यङ्गीकारवैयर्थ्यात्।

यत्तु—'छत्रिणो गच्छन्ती' त्यत्र छत्रित्वादिनैवान्वयबोध इति, तच्चिन्त्यम्, 'प्राणभृत उपदधाति' 'सृष्टीरुपदधाति' इत्यत्रेव समुदायस्य लक्ष्यत्वात्। छत्रिणो गच्छन्तीति छत्र्यच्छत्रिसमुदायो गच्छतीत्यर्थः।

न च बहुवचनानुपपत्तिः, 'गङ्गायां घोषमत्स्यौ' इत्यत्र वृत्तिद्वयेनार्थद्वयवाचिना मेकवचनस्येव तत्सार्थत्वोपपत्तेः। 'अदितिः पाशान्' इत्यत्रेव अवयवबहुत्वेन वा सार्थत्वात्। न च शक्यसम्बन्धाभावः। समुदायसमुदायिनोरभेदसम्बन्धात्। समुदायसमुदायिनोरभेदसम्बन्धेऽपि प्रयोगप्रत्यययोर्वैचित्र्यस्य सर्वसंप्रतिपत्तेः। शक्यतावच्छेदकभिन्नधर्मेणोपस्थितेरेव लक्ष्यत्वप्रयोजकत्वात्। न च जहल्लक्षणातो भेदाभावप्रसङ्गः। रूपान्तरेणोपस्थितस्यापि स्वार्थस्य क्रियान्वयात्, 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातकत्वप्रकारबोधस्यानुभविकस्य अन्यथोपपादयितुमशक्यत्वाच्च।

वस्तुतस्तु यत्र छत्र्यच्छत्रिसमुदायस्य समुदायत्वेन रूपेण गमनान्वयप्रतिपत्त्यर्थं 'छत्रिणो गच्छन्ति' इति वाक्यप्रयोगः, तत्राजहल्लक्षणया शक्याशक्योपस्थितिर्दुर्वारा।

अत एव गुहाधिकरणे (ब्र० सू०-१-२-३) कल्पतरौ 'ऋतं पिबन्तौ' (काठ०. १-३-१) इत्यत्र पिबदपिबत्समुदायलक्षणा अजहल्लक्षणोपपादिता। अत एव च लिङ्गसमवायाधिकरणे (जै. सू. १-४-१८) उपधानयोगितया स्वार्थस्य लक्ष्यत्वे स्वार्थोऽप्यन्तर्भूत इति न वृत्तिद्वयविरोध' इत्युक्तं नयविवेके। 'व्याख्यातं च वरदराजेन- 'उपधानयोगितया गणस्य लक्ष्यत्वे' इति। यदि च वृत्तिद्वयमपि तात्पर्यवशात्सकृदुच्चरितस्याप्यङ्गीकृत्य 'गङ्गायां घोषमत्स्यौ' इत्यत्रैव वृत्तिद्वयव्यापारोऽप्यङ्गीक्रियेत, अङ्गीक्रियताम्। न चैतावता उक्तस्थले लक्षणया शक्याशक्यसमुदायोपस्थितिर्वारयितुं शक्येत्यवश्याभ्युपेयत्वादजहल्लक्षणानिरासायासवैफल्यमिति दिक्।

एवं स्थिते प्रकृतेऽप्यजहल्लक्षणास्वीकारे एकवृत्त्युपस्थापितयोर्विचारज्ञानयोः 'वषट् कर्तुः प्रथमभक्षः' इत्यत्रेव उद्देश्यविधेयभावेनान्वयो न स्यात्। दर्शितश्च तादृशान्वयो 'ज्ञानाय विचारः कर्तव्य' इति विवरणेन।

न च प्रकृते वृत्तिद्वयमेवाङ्गीक्रियते नाजहल्लक्षणेति वाच्यम्। तथा सति अजहल्लक्षणोक्तिविरोधात्। 'गङ्गायां घोषमत्स्यौ' इत्यादौ वृत्तिद्वयस्थले अजहल्लक्षणाव्यवहाराभावात्। आस्तां तावज्जहत्त्वाजहत्त्वविचारः। प्रकृते नैकलक्षणया निर्वाहः।

तथाहि—ज्ञानस्य साध्यत्वोपस्थितिव्यतिरेके न तावत् साध्यतयान्वयः। न चेच्छाविषयत्वमात्रं साध्यत्वम्। अनिच्छाविषयस्य दुःखस्यापि साध्यत्वात्। असाध्यस्यापि इच्छाविषयत्वात्। विधुरस्यातीतभार्यायामिच्छावत्त्वदर्शनात्, इष्टसाध्ययोरपर्यायत्वाच्च। अत एव इष्टत्वेन साध्यत्वानुमानं निरस्तम्। व्यभिचारस्य उक्तत्वात्। अस्तु वा साध्यत्वानुमानं, तथापि प्रकृते नानुमित्युपयोगः। वृत्त्युपस्थापितस्यैव साध्यत्वस्यान्वयबोधविषयत्वनियमात्। अन्यथा विचारेऽपि लक्षणा न स्यात् इष्यमाणज्ञानसाधनत्वेनानुमानादिना उपस्थितस्य तस्य अन्वयधीविषयत्वसम्भवात्।

किञ्च—प्रत्ययार्थविशेषणत्वेनोपस्थितस्य ज्ञानस्य स्वातन्त्र्येणैव तावदुपस्थितिर्नास्ति ; दूरे साध्यतया, 'गौर्नित्या' इत्यादौ गोत्वस्य स्वतन्त्रोपस्थितये लक्षणाया अङ्गीकारात्। तस्मात्प्रकृत्या साध्यावस्थं ज्ञानं लक्षणीयमेवेति लक्षणाद्वयस्यावश्यकत्वाद्युक्ता प्रत्ययेनैव विचारलक्षणा ; न तु समुदाये। एतेन तन्त्रकल्पनापि निरस्ता, एकेन विचार-

लक्षणायामितरेणापि साध्यावस्थज्ञानलक्षणाया उक्तक्रमेणावश्यकत्वेन पदद्वयं कल्पयित्वा पदद्वयेऽपि लक्षणाङ्गीकारापेक्षया एकस्मिन् श्रुतपदे प्रकृतिप्रत्ययलक्षणाद्वयकल्पनाया एव लघुतरत्वात् । विचारलक्षणापि न समुदाये युक्ता , उक्तयुक्तेः ।

यत्तु प्रत्ययस्य लक्षकत्वं न दृष्टमिति, तन्न । ' सक्तून् जुहोति ' इत्यत्र द्वितीयायाः करणत्वलक्षकत्वस्य, ' प्रयाजशेषेण हवींष्यभिघारयति ' इत्यत्र तृतीयाद्वितीययोः कर्मत्वाधारत्वलक्षकत्वस्य, आख्यातस्य कृत्यर्थत्ववादिनां ' रथो गच्छति' इत्यादौ व्यापारलक्षकत्वस्य, फलानुकूलव्यापारार्थत्ववादिनामपि ' जानाति, इच्छति, द्वेष्टि, यतते ' इत्यादौ क्रियानुकूलकृतिव्यापारयोरप्रतीतेः, ज्ञानाद्याश्रयत्वप्रतीतेः, नश्यतीत्यादौ च नाशप्रतियोगित्वप्रतीतेः, आश्रयत्वप्रतियोगित्वलक्षकत्वस्य च, बहुलमुपलब्धेः । गुहाधिकरण (ब्र० सू० १-२-३) पूर्वपक्षे ' ऋतं पिबन्तौ ' (काठ०. १-३-१ ) इत्यत्र बुद्धिक्षेत्रज्ञसाधारण्यार्थं शतृप्रत्ययस्य कर्तृशक्तस्य कारकत्वमात्रलक्षणायाः कल्पतरौ प्रतिपादनाच्च ।

न च प्रत्ययान्तरस्य लक्षकत्वेऽपि सन्प्रत्यये लक्षणा क्वापि न दृष्टेति वाच्यम् , ' अश्मा लुलुठिषते ' ' कूलं पिपतिषति ' इत्यादौ व्यापारमात्रे लक्षणाया दृष्टत्वात् ।

अत एव ' धातोः कर्मणः समानकर्तृकादिच्छायां वा ' (पा०. सू०-३-१-७) इति सूत्रे ' आशङ्कायामचेतनेषूपसंख्यानम् ' इति चोदयित्वा, ' न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः' इति वार्तिकेन इच्छाकार्ये व्यापारे लक्षणया प्रयोग इत्युक्ते, अचेतने इच्छावदिच्छाकार्यस्याप्यभावात् तत्रारुच्या ' उपमानाद्वा सिद्धम् ' इति वार्तिकेन इच्छासदृशे व्यापारे गौणः प्रयोग इति भाष्ये प्रपञ्चितम् । कैयटोऽपि—तथा सति ' गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय ' इति न्यायेन इच्छासदृशे व्यापारे सन्प्रत्ययो न स्यादित्याशङ्क्य, ' गौणमुख्यन्यायश्च क्वचिल्लक्ष्यापेक्षया नाङ्गीक्रियते ' इति समाधत्ते । ईक्षत्यधिकरणे (ब्र० सू०. १-१-५ ) ' कूलं पिपतिषति ' इत्यत्र भगवत्पादैर्लक्षणाया अप्यङ्गीकाराच्च । तस्मात्प्रत्ययलक्षणा नास्तीति, रिक्तं वचः ।

यदपि—वान्तभोजनन्यायप्रसंङ्ग इति; तन्न, प्रत्ययस्य विचारलक्षकत्वात्तेन न बोध्यते साध्यता । किन्तु लक्षणया प्रकृत्यैवेति बोधकभेदस्वीकारेण वान्तभोजनन्यायाभावात् ; साध्यत्वस्यात्यागेन त्यक्तपुनस्स्वीकाराभावात् ।

यदपि—आर्थिकत्वकथनविरोध इति, तदपि न । ज्ञानाय विचारः कर्तव्य इति, ज्ञानं साध्यत्वेनोद्दिश्य, साधनं विचारो विधीयते । तत्र साध्यत्वेनानुपस्थितौ साधनाकाङ्क्षा नेति

साध्यतामात्रं लक्ष्यते, यावता विना शब्दानामन्वयापर्यवसानं, तावन्मात्रं हि लक्षणीयम् । तस्मिन्पर्यवसिते विधेः पुरुषप्रवृत्तिपर्यन्तत्वात्तस्याश्च निष्फले असम्भवात्फलत्वसिद्धये मोक्षसाधनत्वं ज्ञानस्य कल्पितं इत्यार्थिकत्वं तस्य । भवतामेव तु तद्दूषणं दुरुद्धरम् । ज्ञानस्य प्रत्ययार्थेन इच्छया विषयत्वेनान्वये ज्ञानमात्रास्यानिष्यमाणत्वेन मोक्षसाधनब्रह्मज्ञानस्यैव इष्यमाणत्वेन तत्त्वप्रसङ्गात् । एवं च इदमप्यपरं प्रत्यये विचारलक्षणायां बीजम्, यदाचार्याणां मोक्षसाधनत्वस्यार्थिकत्वकथनम् । अन्यथा उक्तरीत्या श्रौतत्वप्रसङ्गात् ।

यदपि—प्रत्ययानामित्यादि, तदपि न - लक्षितविचारस्य प्रकृत्यर्थज्ञानं प्रति साधनत्वेनान्वयात् इच्छाया विषयविषयिभावेनान्वयः, विचारस्य तु साध्यसाधनभावेनेति प्रकृत्यर्थान्वितस्वार्थाभिधाने न कश्चिद्विशेषः ।

यदपि—जिज्ञासापदेनेति विरोध इति, तन्न । प्रकृतिप्रत्यययोर्द्वयोरलक्षकत्वेऽपि पदस्य सकलस्य लक्षकत्वात्तदभिधानोपपत्तेः । ज्ञानस्य प्रकृत्यर्थस्य साध्यत्वलक्षणाया विचारलक्षणाभिधानेनैव कथितप्रायत्वात् तामनभिधाय विचारमुपलक्ष्येति विचारलक्षणामात्राभिधानोपपत्तेश्च । तस्माल्लक्षणाद्वयमेव विवरणाभिप्रेतमिति सर्वमवदातम् ।

ननु मङ्गलाद्यनेकार्थसम्भवादथशब्दस्यानन्तर्यार्थकत्वं कथमिति चेन्न, श्रुतिमात्रेण मङ्गलप्रयोजनत्वेऽपि तस्य वाक्यार्थानन्वयात् अपदार्थत्वात् । पक्षान्तरपरिग्रहार्थत्वं च नसम्भवति, पूर्वमेकस्य पक्षस्याप्रकृतत्वात् ।

ननु ‘ अथ शब्दानुशासनम् ’ ‘ अथ योगानुशासनम् ’ इत्यत्रेव अथशब्दस्याधिकारार्थत्वमस्तु । न च ब्रह्मजिज्ञासाया अनधिकार्थत्वं, जिज्ञासाशब्देन विचारस्य लक्षितत्वाद्विचारस्य प्रत्यधिकरणं वर्तिष्यमाणत्वेन अधिकृतत्वसम्भवात्, इति चेन्न । आनन्तर्याभिधानमुखेन विध्यपेक्षिताधिकारिविशेषसमर्पकत्वेन सार्थकत्वे सम्भवति तदनपेक्षिताधिकारार्थत्वस्यायोगात् । ‘अथ शब्दानुशासनम् ’ इत्यादौ च अविधिमूलतया न विध्यपेक्षिताधिकार्यपेक्षेति नानन्तर्यपरत्वमिति । साधनचतुष्टयं च—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगः, विरागः, शमदमादिसंपत्तिः, मुमुक्षुत्वं च ।

यद्यपि कामाधिकारे कामनैव पुष्कलाधिकारनिमित्तं, तथापि ‘ शान्तो दान्तः ’- ( बृ०. ४-४-२३ ) इत्यादिषु शान्त्यादेरपि संकीर्तनादधिकारिविशेषणत्वम् । यद्यपि मुमुक्षायां सत्यां विचारप्रवृत्तौ न विलम्बः, तथापि विवेकादीनां मुमुक्षासाधनत्वेनोपयोगः ।

तथा हि—अधीतसाङ्गस्वाध्यायस्य 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा०-८-१-६) इत्यादिश्रवणादनित्यफले वैराग्यं, तत इन्द्रियनिग्रहरूपः शान्त्यादिः, ततो मुमुक्षेति ।

यद्यपि नित्यफलेच्छाव्यतिरेकेण नानित्यफले वैराग्यमिति, विवेकानन्तरमेव मुमुक्षा युक्ता, तथापि वैराग्यादेरधिकारनिमित्तत्वमक्षतमेव। अविरक्तस्य तत्तद्भोगव्यग्रचित्तस्य विचारासम्भवात् । तस्मात्साधनचतुष्टयसम्पत्त्यानन्तर्यार्थत्वमथशब्दस्य सिद्धम् ।

नन्वथशब्देनैव विवेकादीनामानन्तर्याभिधानमुखेन हेतुत्वस्यापि प्रापितत्वात् अतश्शब्दो व्यर्थ इति चेन्न 'अपाम सोममसृता अभूम' इत्यादिश्रुत्या कर्मफलस्यापि नित्यत्वश्रवणान्न वैराग्यं सम्भवतीति शङ्कानिरासेन हेतुत्वदृढीकरणार्थत्वात् । तथाहि - यज्जन्यं तदनित्यमिति व्याप्त्यनुगृहीतायाः 'तद्यथेहे'ति श्रुतेः प्रबलत्वात् अद्वैतश्रुतिबलाच्च ब्रह्मभिन्नस्य सर्वस्यानित्यत्वावधारणात् 'अपाम' इत्यादिश्रुतेः 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति पुराणदर्शनादापेक्षिकामृतत्वप्रतिपादनतात्पर्यावधारणात् वैराग्यं संभवति इति । पूर्वमीमांसया अगतार्थत्वमपि अतश्शब्दार्थः, कार्यरूपधर्मप्रतिपादकपूर्वतन्त्रस्य सिद्धब्रह्मप्रतिपादकत्वाभावात् अगतार्थत्वम् । एवं कर्तृत्वभोक्तृत्वादेरध्यस्तत्वमप्यतश्शब्देनोच्यते । तेन, ज्ञानेन बन्धनिवृत्तिलक्षणो मोक्षः सिद्ध्यतीति । तस्मात्साधनचतुष्टयसंपन्नस्य यतस्साधनचतुष्टयं संभवति, पूर्वमीमांसया अगतार्थत्वं, कर्तृत्वभोक्तृत्वादेः अध्यस्तत्वं, अतो मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रार्थः, इति विवरणानुसारिणः ।

वाचस्पतिमिश्रानुसारिणस्तु—अत्र सूत्रे कर्तव्येति पदं नाध्याहर्तव्यम् , न वानुवादत्वदोषः । सप्रयोजनानुवादे दोषाभावात् । कर्तव्यपदाध्याहारमात्रेण च कथमनुवादत्वपरिहारः? 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यादौ तव्यप्रत्यये सत्यप्यनुवादत्वदर्शनात् , अप्राप्तत्वेनाननुवादत्वे, कर्तव्यपदाध्याहारं विनापि 'तत्त्वमसि' (छा०-६-८-७) 'अयमात्मा ब्रह्म' (माण्डू०-२) (बृ०-२-५-१९) (बृ०-४-४-५) इत्यादिवदननुवादत्वसंभवान्नानुवादत्वपरिहारायाध्याहारः ।

नापि प्रवृत्तिसिद्धये । विषयप्रयोजनज्ञानादेव प्रवृत्तिसिद्धेः, सिद्धान्ते कार्यान्विते पदशक्त्यनङ्गीकारात् ।

न च श्रवणविध्यपेक्षितन्यायविचारार्थत्वादस्य सूत्रस्य श्रुतिसूत्रयोरैकरूप्यार्थमध्याहारः, श्रवणविधेरनङ्गीकारात् । न तावदपूर्वविधिः । विचारस्य विचार्यनिर्णयहेतुत्वस्य तात्पर्यग्राहकत्वस्य च लोकसिद्धत्वात् ।

न च ब्रह्मसाक्षात्कारहेतुत्वं न प्राप्तमिति वाच्यम्। विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य, ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तज्ञानरूपश्रवणस्य तद्धेतुत्वप्राप्तेः। नापि नियमविधिः। व्यावर्त्याभावात्। नच गुरुरहितविचारो व्यावर्त्यः। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' (मुण्ड०-१-२-१२) इति विज्ञानार्थं विधीयमानं गुरूपसदनं दृष्टद्वारसंभवे अदृष्टकल्पनायोगाद्वेदान्तवाक्यविचारद्वारैव विज्ञानार्थं पर्यवस्यतीति स्वतन्त्रविचारव्यावृत्तेरुपगमनविधिनैव सिद्धत्वात्। अत एव भिन्नात्मविचारो व्यावर्त्य इति निरस्तम्। नहि ब्रह्मनिष्ठः परमाप्ततमः परमकारुणिको गुरुरुपसन्नाय शिष्याय भिन्नात्मविचारमद्वितीयात्मज्ञानाय बोधयेदिति स्वप्नेऽपि शङ्कास्पदम्।

किञ्च यत्र प्रकृतविध्यनङ्गीकारे मानान्तरेण साधनान्तरं प्राप्यते, तत्र नियमः। यथा अवहननविधौ। तत्र विध्यनङ्गीकारे पुरोडाशस्य पिष्टद्वारा तण्डुलसाध्यत्वात्तण्डुलीभावे अवहननवन्नखविदलनस्यापि लोकसिद्धकारणत्वादवहननान्वयिष्वपि व्रीहिषु पाक्षिकी अप्राप्तिरस्तीति नियमः।

न ह्यत्र श्रवणविध्यनङ्गीकारे भिन्नात्मविचारस्य कथंचिदपि ब्रह्मसाक्षात्कारे प्राप्तिर्मानान्तरात्संभावयितुं शक्यते।

न च भ्रान्त्या मोक्षसाधनज्ञाने भिन्नात्मविचारप्राप्तिमात्रेण विध्यवकाशः, ईश्वरानुग्रहरहितस्य पुरुषाधमस्य श्रोतव्यवाक्येऽपि पराभिमतयोजनया भिन्नात्मविचारविधिपरत्वभ्रमसंभवेन भ्रमप्रयुक्तान्यप्रवृत्तेः विधिसहस्रेणाप्यपरिहार्यत्वात्। नहि "इदं सर्वं यदयमात्मा" (बृ०-४-५-७) इत्यादिवाक्यानां भिन्नात्मवादिनः स्वमतानुसारेण नार्थं वर्णयन्ति। एतेनकर्मविधिविचारो व्यावर्त्यः। न चाप्रसक्तिः। कालान्तरभाग्यात्मव्यतिरेकेण स्वर्गभोगासंभवात् [तस्याप्यात्मविचारत्वात्]। न च भिन्नात्मनः विचारविषयत्वासंभव इति वाच्यम्। आत्मत्वसामान्येन विचारविषयत्वोपपत्तेः— -इति निरस्तम्। कर्मविचारस्य सर्वथा अप्रसक्तेः। आत्मविचारत्वेन प्रसक्तौ बाह्यानां वैदिकानां च सर्वे (षां) भिन्नात्मविचारा आत्मविचारत्वेन प्रसक्ता इति कर्मग्रहणानर्थक्यात्।

न च भिन्नात्मविचारस्य व्यावर्त्यत्वं सम्भवतीत्युक्तमेवेति। न च परिसंख्याविधिः। साधनान्तरस्य समुच्चित्य प्राप्त्यभावात्। न च व्यापारान्तरस्यासाधनस्यापि निवृत्त्यर्थं परिसंख्याविधिः, यावज्जीवं वेदान्तवाक्यविचार एव कर्तव्यो न तु व्यापारान्तरमितीति वाच्यम्। त्रैदोष्यापातात्।

किञ्च-संन्यासिनोऽसंन्यासिनो वा व्यापारान्तरनिवृत्तिः? । नान्त्यः, अशक्यत्वात् । नाद्यः, संन्यासविधायकेनैव सिद्धत्वात् । 'ब्रह्मसंस्थोऽमृतत्वमेति' (छा०.२-२३-१) इति छान्दोग्यवाक्ये अनन्यव्यापारत्वस्य मुक्तिसाधनत्वश्रवणात् । संपूर्वस्य तिष्ठतेः समाप्तिवचनत्वस्य अग्निष्टोमसंस्थेत्यादौ दर्शनात् । ब्रह्मसंस्थाशब्दितायाः ब्रह्मणि समाप्तेरनन्यव्यापारतारूपत्वात् । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' (मुण्ड०-२-२-५) इत्याथर्वणिके कण्ठत एव व्यापारान्तरप्रतिषेधाच्च ।

'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया' इत्यादिस्मृतेश्च । तस्माद्विध्यन्तरसिद्धस्य व्यापारान्तरनिषेधस्य नात्र त्रैदोष्यमङ्गीकृत्यापि विधानमङ्गीकर्तव्यम् ।

अत एव 'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्' (ब्र०-सू०.३-४-१४) इत्यधिकरणे कल्पतरुकाराः । "नात्रापूर्वविधिः प्राप्तेरनन्योपायतो न च । नियमः परिसंख्या वा श्रवणादिषु संभवेत् ॥" इति । तस्माच्छ्रवणविध्यभावान्न तदैकरूप्याय लक्षणाध्याहारौ । अस्तु वा श्रवणविधिः, तथापि न लक्षणाध्याहारौ । सर्वत्र श्रुतिसूत्रयोरैकरूप्यस्यामानकत्वात् । तस्माद्विषयप्रयोजनप्रतिपादनार्थमिदं सूत्रम् : तत्र अथातश्शब्दौ उक्तार्थौ । साधनचतुष्टयसंपन्नस्य ब्रह्मजिज्ञासा भवतीत्युक्ते, ब्रह्मज्ञानस्येष्यमाणतया प्रयोजनत्वं, ब्रह्मणश्च विषयत्वं, श्रौतम् । इष्यमाणं च ज्ञानं न विचारमन्तरेणेति विचारकर्तव्यता आर्थिकीति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां जिज्ञासाधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ जन्माद्यधिकरणम् ॥

## ॥ जन्माद्यस्य यतः ॥ ॥२॥

प्रथमसूत्रे ब्रह्ममीमांसायाः प्रतिज्ञातत्वात्, तस्याश्च लक्षणप्रमाणसमन्वयाविरोधसाधनफलविषयतया अनेकविधत्वेऽपि, प्रथमं ब्रह्मणः प्राधान्यात्तल्लक्षणार्थं सूत्रं "जन्माद्यस्य यतः" इति । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ।' (तै०. ३-१-) इत्येतद्वाक्यनिर्दिष्टानां जन्मस्थितिविलयानां जन्मादीति बहुव्रीहिणा निर्देशः । तत्र अतद्गुणसंविज्ञानबहु-

व्रीहौ, जन्मादी अस्येति निर्देशः। तद्गुणसंविज्ञानेऽपि उद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वे, जन्मादयोऽस्येति निर्देशः। अनुद्भूतावयवभेदसमुदायस्य अन्यपदार्थत्वे, स्त्रीलिङ्गपुलिङ्गयोः जन्मादिरस्येति निर्देशस्स्यात्। सर्वत्र वर्णान्तराधिक्ये गौरवं स्यादिति सूत्रकारेण नपुंसकलिङ्गनिर्देशः कृतः। जन्मस्थितिभङ्गं समासार्थः। तद्गुणसंविज्ञानश्च बहुव्रीहिः। पूर्वसूत्राद्ब्रह्मपदमनुवर्तते। तच्छब्दश्चाध्याहार्यः। तेन अस्य प्रपञ्चस्य यतस्सकाशाज्जन्मादि भवति, तद्ब्रह्मेति सूत्रार्थः।

यद्यपि जन्मादिकं प्रपञ्चनिष्ठं व्यधिकरणत्वान्न ब्रह्मलक्षणं, तथापि तत्कारणत्वं ब्रह्मणि कल्पितं तटस्थलक्षणं, कल्पितप्रपञ्चप्रतियोगिककारणत्वस्यापि ब्रह्मणि कल्पितत्वेन तत्स्वरूपत्वाभावात्। स्वरूपभिन्नत्वे सति व्यावर्तकत्वं तटस्थत्वम्। यद्यप्यव्यभिचाराज्जन्मादिकारणत्वं प्रत्येकमपि लक्षणं संभवति, तथापि उत्पादकत्वमात्रं निमित्तसाधारणमित्युपादानत्वप्राप्त्यै लयग्रहणम्। न हि निमित्तकारणे कार्यस्य लयः संभवति। न च तावतैव उपादानत्वलाभादुत्पत्तिस्थितिग्रहणवैयर्थ्यमिति वाच्यम्। न ह्युपादानत्वं कुलधर्मतयोच्यते। किन्तुप्रकृतिविकाराव्यतिरेकन्यायेनाभेदप्रतिपत्त्यै। एवं च भवतु ब्रह्म जगत उपादानं, उत्पत्तिस्थित्योरन्य एवाधिष्ठाता स्यात्, कुम्भकार इव कुम्भोत्पत्तौ, राजवच्च राज्यस्थेम्नीति माशङ्कीत्युत्पत्तिस्थितिग्रहणमिति। स्वरूपलक्षणं तु 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०.२-१) इत्यादिवाक्यप्रतिपादितं सत्यादिस्वरूपत्वम्।

ननु सत्यत्वादेः ब्रह्मणः सकाशाद्भेदे, न ब्रह्मस्वरूपलक्षणत्वं, अभेदे, न वाक्यार्थसिद्धिः, गुणप्रधानभावापन्नपदार्थसंसर्गो हि सर्वत्र वाक्यार्थः। न चाभेदे तत्सम्भव इति चेन्न। यत्र पदार्थः प्रमितः, तत्र संसर्गो वाक्यार्थः। यत्र पदार्थप्रमितिपरः पदसंदर्भः, तत्राखण्डपदार्थ एव वाक्यप्रतिपाद्यः। यथा 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्र' इति प्रश्ने 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्यमखण्डचन्द्रस्वरूपप्रतिपत्तिपरम्।

न च प्रकृष्टप्रकाशवैशिष्ट्यं वाक्यप्रमेयं, मानान्तरसिद्धत्वात्। नापि चन्द्रत्व-[जाति] वैशिष्ट्यं, एकव्यक्तितया धर्मतया चन्द्रत्वजातेरभावात्। न च चन्द्रशब्दवाच्यत्ववैशिष्ट्यं, तस्यापृष्टत्वात्। स्वरूपमात्रप्रश्ने, तस्यैवेहाभिधानौचित्यात्।

वस्तुतस्तु वाक्यानां सर्वत्र अन्वीयमानपदार्थसंसर्गपरत्वनियमं व्युदस्य, पदार्थमात्रनिष्ठत्वमपि क्वचिदस्तीति व्युत्पाद्यम्। तच्च लक्षणवाक्यम्। तत्र लोके पदानां विशिष्टशक्तत्वेन पदार्थः सर्वोऽपि सखण्ड एव, तथापि न दृष्टान्तासिद्धिः। पदार्थमात्रनिष्ठत्वे

अर्थवादवाक्यस्य दृष्टान्तत्वसंभवात् । एवमत्रापि सत्यादिपदानि एकब्रह्मपदार्थनिष्ठानि । ब्रह्मपदार्थश्च न विशिष्टः, अभेदश्रुतिसहस्रात् ।

ननु विशिष्टवाचकैः सत्यादिपदैः कथमखण्डबोध इति चेत् । लक्षणयेति गृहाण, उक्तं च कल्पतरौ 'उपायस्तु वैशिष्ट्यं अखण्ड(चन्द्र)प्रतिपत्तौ । तच्चाविरोधाच्चन्द्रेऽनुज्ञायते, सत्यादिवाक्ये त्वनन्तादिपदैः वैशिष्ट्यं बाध्यते' इति । एतेन सेनावनादिलक्षणवाक्यस्य नाखण्डार्थत्वं, सेनावनादेस्समुदायरूपत्वेन अखण्डत्वाभावादिति, न लक्षणमात्रस्य अखण्डार्थत्वमिति निरस्तम् । तत्रापि पदार्थमात्रनिष्ठत्वस्याविवादात् ।

ननु लक्षणया एकब्रह्मपरत्वे सत्यादिपदानां एकेनैव तादृगर्थलाभात् पदान्तरवैयर्थ्यं, पर्यायत्वप्रसङ्गश्चेति चेन्न । विशिष्टशक्तानां शक्यार्थे अपर्यायाणामेव लक्षणया एकार्थपरत्वस्य अर्थवादानां प्राशस्त्यपरत्वस्येवाविरोधात् । न च वैयर्थ्यं, व्यावर्त्यभेदात् । सत्यपदेनासत्यव्यावृत्तिः, ज्ञानपदेन जडव्यावृत्तिः, अनन्तपदेन परिच्छिन्नव्यावृत्तिरिति सर्वत्र व्यावर्त्यभेदादपौनरुक्त्यम् ।

ननु किं व्यावृत्तयोऽपि ब्रह्मभिन्ना अभिन्ना वा ? । आद्ये, अद्वैतहानिः । द्वितीये, तदेव पदान्तरवैयर्थ्यमिति चेन्न । एकस्मिन्प्रतियोग्यनुयोगिकारणव्यापकादिशब्दवदवैयर्थ्योपपत्तेः । न हि कारणत्वादिकं धर्मान्तरम् । एवं व्यावृत्तीनां ब्रह्माभेदेऽपि प्रतियोगिभेदादवैयर्थ्यम् । एतदभिप्रायेणैव कल्पतरौ संग्रहः—

'अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥ इति ॥

तस्मात्सत्यत्वादिकं स्वरूपलक्षणं इति सिद्धम् ॥

केचित्तु—आद्यस्य ब्रह्मणः चतुर्मुखस्य यतो जन्म तद्ब्रह्मेति सूत्रार्थमाहुः । तन्न । चतुर्मुखस्याद्यत्वानिरूपणात् । किं तस्य आद्यत्वं सर्वकार्यापेक्षया चेतनापेक्षया वा? । नाद्यः, 'आत्मन आकाशस्संभूतः' (तै०-२-१) इति भूतसृष्टेरेव प्रथममभिधानात् । न च हिरण्यगर्भजननानन्तरमेव भूतसृष्टिरिति वाच्यम् । समष्टिलिङ्गशरीराभिमानिनो हिरण्यगर्भस्य भूतसृष्ट्यनन्तरं जननावश्यकत्वेन ततः पूर्वमुत्पत्तौ मानाभावात् । तथापि तज्जनकत्वस्य ज्ञेयब्रह्मलक्षणत्वासिद्धेः । कृष्णाद्यवतारजनकस्य वसुदेवादेरिव तज्जनकस्य सर्वज्ञत्वासिद्धेः । कृष्णादेरिव चतुर्मुखस्यैव जनकापेक्षया उत्कर्षापत्तेश्च । श्रुत्यन्तरालोचनया जनकस्य

चतुर्मुखापेक्षया उत्कर्षज्ञाने, तदेव उपन्यसनीयं, न तु तज्जनकत्वं, अप्रयोजकत्वात् । ब्रह्मणस्संहाररुद्रादप्युत्पत्तिश्रवणेन ज्ञेयब्रह्मलक्षणत्वासिद्धेश्च ।

अत एव न द्वितीयः । तस्मादाचार्यभगवत्पादीयमेव व्याख्यानं रमणीयमिति । एवमन्यत्र द्रष्टव्यम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां जन्माद्यधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

## ॥ शास्त्रयोनित्वात् ॥ ॥३॥

पूर्वं जगत्कारणत्वेन सर्वज्ञत्वं ब्रह्मणस्सिद्धं, तत्रैवार्थिके सर्वज्ञत्वे हेत्वन्तरमुच्यते [शास्त्रयोनित्वादिति] । शास्त्रं वेदः, तद्योनित्वं तत्कर्तृत्वं, वेदकर्तृत्वादपि ब्रह्मणस्सर्वज्ञत्वमित्यर्थः ।

अथ वा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता ।
नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते ॥

अस्मिन्पक्षे श्रौतप्रतिज्ञयैव सङ्गतिः । पूर्वसूत्रोक्तजगत्कारणत्वस्यैव समर्थनात् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदः' (बृ०-२-४-१०) इति वाक्यं विषयः । अस्य, नित्यसिद्धस्य ब्रह्मणः निश्वास इवानायासेन वेदः सिद्ध इत्यर्थः । ब्रह्म वेदं न करोति, करोति वेति सन्देहे, न करोति, 'वाचा विरूप नित्यया' इति नित्यत्वश्रवणात् । अस्मिन्मन्त्रे विरूपेति देवतां संबोध्य नित्यया वाचा स्तुतिं प्रेरयेत्येवं प्रार्थ्यते । नित्या वाग्वेद एव ।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः' ॥

इति स्मृतेः । अतो न वेदकर्तृत्वं ब्रह्मण इति, न जगद्योनित्वमिति प्राप्ते, ब्रूमः । निःश्वसितन्यायेन वेदोत्पत्तिश्रवणात् , 'तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे ।' इति सर्वैर्यज्ञैः हूयमानाद्यज्ञशब्दवाच्याद्ब्रह्मणो वेदोत्पत्तिप्रतीतेः वेदकर्तृत्वम् ।

न चैवं वेदस्य पौरुषेयत्वापत्तिः । वर्णनित्यत्ववादिनामपि आनुपूर्व्या अनित्यत्वेन पौरुषेयत्वापातात् । पूर्वपूर्वानुपूर्वीसजातीयानुपूर्वीकत्वेन तस्य अपौरुषेयत्वं सिद्धान्तेऽपि समानम् । 'धाता यथापूर्वमकल्पयत्' (ऋ०-स०-१०-१९०-३) इति श्रुत्या पूर्वपूर्वकल्पसिद्धानुपूर्वीसजातीयानुपूर्वीकवेदराशेरेव उत्पत्त्यवगमात् ।

इयान्विशेषः— सृष्टिप्रलयानङ्गीकारवादिनां पूर्वपूर्वाध्यापकप्रसिद्धैवानुपूर्वी । सिद्धान्ते तु तदङ्गीकारात्, सृष्ट्यादावीश्वरेण कल्पान्तरसिद्धवेदसजातीय एव वेदोऽनायासेनोपदिश्यत इति पूर्वपूर्ववेदसजातीयवेदोपदेशे न कश्चिद्विशेष इति ।

अत एव सजातीयानादितया नित्यत्वम् । वास्तवनित्यत्वं तु न कस्यापि संभवति, अद्वैतश्रुतेः । सर्वावभासकवेदकर्तृत्वेन च सर्वज्ञत्वं सिद्धम् । यच्छास्त्रं येन प्रणीतं स तच्छास्त्रप्रतिपाद्यादधिकज्ञः, यथा पाणिन्यादिरिति व्याप्तेरिति ।

अस्य सूत्रस्य द्वितीयवर्णकं—पूर्वसूत्रेण जन्मादिकारणत्वकथनेन 'अङ्कुरादिकं सकर्तृकं कार्यत्वात्' इत्याद्यनुमानमपि ब्रह्मण्यङ्गीकृतमिति शङ्का स्यात् । तन्माभूदितीदमुच्यते, ब्रह्म मानान्तरवेद्यं न भवति । कुतः ? शास्त्रयोनित्वात् । शास्त्रं वेदो योनिः प्रमाणं यस्य तत्त्वादित्यर्थः । 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ०- ३-९-२६) इति श्रुत्या समर्थाधिकारविहिततद्धितेन उपनिषत्स्वेवावगत इति प्रतीतेः, 'नावेदविन्मनुते तं बृहन्तम्' इति श्रुत्या स्पष्टं मानान्तरनिषेधाच्च, ब्रह्मण उपनिषन्मात्रवेद्यत्वप्रतीतेः । तर्कस्तु अनुग्राहकतया अङ्गीक्रियते । अनुमानमपि तर्कतयैवोपयुज्यते, न तु स्वातन्त्र्येणेत्यभिप्रायः ॥

ननु 'यतो वाचो निवर्तन्ते' (तै०-२-९) इति श्रुतेः वेदवेद्यत्वमपि कथमिति चेन्न—वेदान्तजन्यवृत्तिविषयत्वेन शास्त्रयोनित्वम् । चैतन्याविषयत्वेनाप्रमेयत्वमिति उभयश्रुत्युपपत्तेरिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां शास्त्रयोनित्वाधिकरणम् ॥

॥ श्रीः ॥

(४) ॥ अथ समन्वयाधिकरणम् ॥

## ॥ तत्तु समन्वयात् ॥ ॥४॥

पूर्वसूत्रे द्वितीयवर्णके ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तं, तदत्राक्षिप्य समाधीयते। वेदान्ताः किं कर्मशेषभूतकर्त्रादिप्रतिपादनपराः, उत नित्यशुद्धबुद्धसत्योदासीनब्रह्मप्रतिपादनपराः, इति संशये, जीवप्रतिपादकास्सर्वे कर्माङ्गकर्तृप्रतिपादनपराः, ब्रह्मप्रतिपादकाश्च देवताप्रकाशनपरा इति। तथा सति अनुष्ठानोपयोगितया सप्रयोजनत्वं भविष्यति, अन्यथा निष्प्रयोजनत्वं स्यादिति पूर्वः पक्षः। राद्धान्तस्तु—तत्तु समन्वयात्। तुशब्दः पूर्वपक्षनिरासार्थः, तच्छब्देन वेदान्तेषु ब्रह्मैव प्राधान्येन प्रतिपाद्यत इति प्रतिज्ञायते। कुतः? समन्वयात्। सम्यक् अन्वयः समन्वयः तस्मादित्यर्थः। अन्वये सम्यक्त्वं तात्पर्यवत्त्वम्। वेदान्ता न कर्त्रादिप्रतिपादकाः, भिन्नप्रकरणस्थत्वात्। नोपासनाविधिपराः, तत्त्वमसीत्यादेरुपासनविधिरहितस्यैव बहुलमुपलब्धेः। स्वरूपज्ञानादपि 'नायं सर्प' इत्यादिवदनर्थनिवृत्तेः प्रयोजनस्य सम्भवेन कथंचिद्विधिशेषत्वस्य कल्पनायोगात्।

न च कार्य एवार्थे लोके पदानां व्युत्पन्नत्वात् कार्यपरत्वं कल्पनीयम्। 'पुत्रस्ते जात' इत्यादौ सिद्धेऽपि व्युत्पत्तिदर्शनात्। 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' (छा०-६-२-१) "आत्मा वा इदमेक एवाग्र आसीत्" (ऐत०-२-१-१-१) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म" (बृ०-२-५-१९) "ब्रह्मैवेदममृतं पुरस्तात्" (मु०-२-२-११) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै०-२-१) 'नेह नानास्ति किञ्चन' (बृ०-४-४-१९) 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे०-६-११) इत्यादिषु तात्पर्यतः सिद्धब्रह्मप्रतिपादनपरे समन्वये अवगम्यमाने, सिद्धज्ञानस्यापि 'तरति शोकमात्मवित्' (छा०-७-१-३) इत्यादिश्रुत्या अनर्थनिवृत्तिलक्षणप्रयोजने चावगम्यमाने, वृथा कार्यपरत्वकल्पनानौचित्यात्। तात्पर्यग्राहकं च वृद्धैस्संगृहीतम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥इति।

एतच्च तात्पर्यग्राहकं सर्वेषु वाक्येषु भाष्यभामत्यादौ सुव्यक्तम्। दिक्प्रदर्शनार्थमेकस्मिन् वाक्ये प्रदर्श्यते। 'सदेव सोम्येदमग्र आसीत्' (छा०-६-२-१) इत्युपक्रमः,

'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छा०-६-१-८-७) इत्युपसंहारः, तयोः ब्रह्मविषयत्वेनैकरूपत्वं लिङ्गं, 'तत्त्वमसी' ति नवकृत्वोऽभ्यासः, मानान्तरागम्यत्वेनापूर्वत्वं, एकविज्ञानेन सर्वविज्ञानं फलं, 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा०-६-३-२) इत्यादिसृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः, 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छा०-६-१-४) इत्यादिमृदादिदृष्टान्ता उपपत्तयः, इत्येतैर्लिङ्गैः ब्रह्मपरत्वनिश्चयान्नाकस्माद्विधिशेषत्वकल्पनमिति ।

ननु सिद्धब्रह्मप्रतिपादने प्रयोजनाभावात् प्रयोजनवत्कर्मशेषत्वं वक्तव्यम् । न चाविद्यानिवृत्तिः प्रयोजनम्, सा किं ब्रह्मभिन्ना, अभिन्ना वा? । आद्ये, सत्या, मिथ्या वा? । नाद्यः, अद्वैतहानेः । न द्वितीयः, मोक्षस्य मिथ्यात्वे अनित्यत्वप्रसक्त्या पुनस्संसारापत्तेः । न चरमः, ब्रह्मणो नित्यसिद्धतया प्रवृत्त्यनुपपत्तेः, मुक्तिसंसारयोरविशेषप्रसङ्गाच्च, ब्रह्मस्वरूपस्य इदानीमपि सत्त्वादिति चेन्न । अविद्यानिवृत्तिः ब्रह्मभिन्नैव । न चाद्वैतहानिः, पञ्चमप्रकारत्वाङ्गीकारात् । सत्यैव वा । नाद्वैतहानिः, भावाद्वैतस्वीकारात् । न च तत्र प्रमाणाभावः । अद्वैतमोक्षप्रतिपादकशास्त्रद्वयबलात्तथा कल्पनात् ।

अन्ये तु—अविद्यावत् तन्निवृत्तिरप्यनिर्वचनीयैव । न चानिर्वचनीयस्य अविद्योपादानकत्वात् तदुपादानतया अविद्यानुवृत्तौ संसारानुवृत्तिप्रसङ्ग इति वाच्यम् । अविद्या(निवृत्त्य)[नुवृत्तौ]मानाभावात् । तथाहि—यथोत्पत्तिराद्यसमयसंसर्गी क्षणिको भावविकारः, एवं ध्वंसोऽपि चरमसमयसंबन्धी क्षणिको भावविकार एव, न त्वतिरिक्तः [नित्यो ध्वंसः] । तस्य तद्व्यतिरिक्तत्वे चिरविनष्टेऽपि घटे विनश्यतीति व्यवहारापत्तिः, आख्यातस्य प्रकृत्यर्थान्वितवर्तमानत्वाद्यभिधायकत्वात् । न च धात्वर्थकर्त्रादिगतवर्तमानत्वाद्यभिधायकत्वमाख्यातस्य तद्गतसंख्याभिधायित्ववदिति वाच्यम् । चिरोत्पन्नेऽपि घटे इदानीमुत्पद्यत इति प्रयोगापत्तेः । घटस्य विद्यमानत्वात् । न च ध्वंसस्य क्षणिकत्वे चिरध्वस्ते नास्तीति प्रत्ययानुपपत्तिः, घ(टोद्ध) [टापस] रणानन्तरं भूतल इव सामयिकाभावेनैव तदुपपत्तेः ।

न चैवं प्रागभावोऽपि न स्यात्, सामयिकाभावेन अन्यथासिद्धेरिति वाच्यम् । इष्टापत्तेः ।

वस्तुतस्तु—चरमभावविकारातिरिक्तध्वंसाङ्गीकारेऽपि न स नित्यः । घटादिध्वंसानामपि तथात्वापातात् । किन्तु—नित्यत्वेन अभिमतं सर्वं यावदविद्यमेवावतिष्ठत इति,

अविद्यानिवृत्तौ निवर्तत इत्येव वक्तव्यम्। अन्यथा अनन्तध्वंसात्यन्तान्योन्याभावानां स्थित्यङ्गीकारस्याप्रामाणिकत्वात्।

न च ध्वंसनाशे प्रतियोग्युन्मज्जनप्रसङ्गः, ध्वंसप्रागभावानाधारकालस्य प्रतियोग्याधारत्वनियमादिति वाच्यम्। अप्रयोजकत्वात्। एवं च, अविद्यानिवृत्तेः सर्वथा क्षणिकत्वमावश्यकमेव। न च तस्याः क्षणिकत्वे, स्थिरपुरुषार्थत्वं न स्यादिति वाच्यम्। इष्टापत्तेः। न ह्यविद्यानिवृत्तिरेव स्वतः पुरुषार्थ इति, तस्याः ज्ञानसाध्यत्वमङ्गीक्रियते। किन्त्वविद्यया निरतिशयानन्दावरणात्, तन्निवृत्तौ तन्मूलसांसारिकदुःखनिवृत्तिः निरतिशयानन्दस्फुरणं च भवतीति, तदुपयोगितया तस्या ज्ञानसाध्यत्वमङ्गीक्रियत इति न किञ्चिदेतत्।

न च उक्तन्यायेन दुःखनिवृत्तिरपि क्षणिकेत्यपुरुषार्थत्वप्रसङ्गः, तथापि निरतिशयानन्दस्फुरणस्यानपायित्वात्। इदानीं च तत्स्फुरणं नास्ति, 'इदानीं निरतिशयानन्दो नास्ती'ति प्रतीत्या तदावरणकल्पनात्। अविद्यानिवृत्तौ च तत्कृतावरणनिवृत्तौ निरतिशयानन्दस्फुरणमिति।

इतरे तु—अविद्यानिवृत्तेः ब्रह्मस्वरूपत्वेऽपि साध्यत्वं संभवति। 'यत्सत्वे यत्सत्वं यदभावे यदभाव' इत्येवंरूपसाध्यत्वस्यात्रापि संभवात्। ज्ञाने सति अज्ञाननिवृत्तिरूपब्रह्मसत्वं, तदभावे तदभावरूपमज्ञानमिति प्रागभावपरिपालनन्यायेन साध्यत्वं वर्णयन्तीति दिक्।

वर्णकान्तरं—एकदेशिनो मन्यन्ते-ज्ञानविधिपरा वेदान्ताः, न सिद्धब्रह्मप्रतिपादनमात्रपर्यवसिताः। तथा सति पुरुषप्रवृत्तिपरत्वाभावाच्छास्त्रत्वं न स्यादिति, ज्ञानविधिपरैरेव वेदान्तैः ब्रह्म प्रतिपाद्यत इति। अत एव—'श्रोतव्यो मन्तव्यः' (बृ०-२-४-५) इति स्पष्टो विधिर्दृश्यत इति। एतन्मतनिराकरणार्थमिदं सूत्रम् — ॥ तत्तु समन्वयात् ॥

तुशब्दः पूर्वपक्षनिरासार्थः। तद्ब्रह्म सर्ववेदान्तैः प्राधान्येनैव प्रतिपाद्यते, न तु विधिपरैः विधिशेषतया, इति प्रतिज्ञा। कुतः? समन्वयात्, सिद्धब्रह्मण्येव वेदान्तानां विधिमन्तरेण सम्यगन्वयादित्यर्थः।

अयं भावः—विधिमन्तरेणापि सिद्धब्रह्मज्ञानेनानर्थनिवृत्तेः पुरुषार्थस्य प्रतिपादनात् शास्त्रत्वं संभवतीति, न तदनुरोधेन विधिपरत्वं कल्पनीयम्। न च 'श्रोतव्य' इति विधिश्रवणात् तत्परत्वकल्पनमिति वाच्यम्। तस्य विधित्वस्य निरस्तत्वात्।

ननु विचारविध्यसंभवेऽपि 'पत्न्यवेक्षितमाज्यं भवती'तिवत् ज्ञानविधिरयमस्त्विति चेत् न। तद्वदत्र संस्कारविधिप्रसङ्गात्। न चेष्टापत्तिः। नित्यशुद्धबुद्धोदासीनस्य कर्मशेषत्वाभावेन उपयुक्तोपयोक्ष्यमाणसंस्कारत्वाभावात्। न चात्मनि संस्कारोऽपि संभवति। स हि गुणाधानेन वा, बीजापूरकुसुमस्य लाक्षारसावसेकवत्। [ तेन तत्कुसुमं संस्कृतं लाक्षारससवर्णफलं प्रसूते। ] दोषापनयनेन वा ? यथा मलिनमादर्शतलं निघृष्टमिष्टकाचूर्णेन भास्वरं भवति। न तावद्गुणाधानेन, अनाधेयातिशयत्वात् ब्रह्मणः। नापि दोषापनयनेन, नित्यशुद्धत्वात्। न चाविद्याकृतमालिन्यनिवृत्तिः संस्कारः, अविद्यानिवृत्त्यैव तत्सिद्धेः। नापि सैव संस्कारः, परोक्षज्ञानेन तन्निवृत्तेः कर्तुमशक्यत्वात्। अपरोक्षज्ञानस्य तन्निवर्तकत्वस्य लोकसिद्धत्वेन विध्यनपेक्षणात्।

न चापरोक्षज्ञानस्य लोकसिद्धकारणभावस्य विधिं विनैव सिद्धत्वात् अविधेयत्वेऽपि, शाब्दं परोक्षज्ञानं श्रवणशब्दवाच्यं 'श्रोतव्य' इत्यनेन विधीयते, तच्चापूर्वद्वारा अविद्यानिवृत्तावुपयोक्ष्यते इति वाच्यम्। अपरोक्षज्ञानस्यैव अज्ञाननिवृत्तौ पुष्कलकारणत्वेन साधनान्तरानपेक्षणात्। मननिदिध्यासनयोरपि अविद्यानिवृत्तौ अपूर्वद्वारा साधनत्वापाताच्च।

न च 'द्रष्टव्य' इति दर्शनानुवादेन विधीयमानयोस्तयोः दर्शनसाधनत्वमेवेति वाच्यम्। तथा सति, श्रवणस्यापि उपांशुयाजवत्नायपाठेन दर्शनसाधनत्वेनैव विधेरुचितत्वात्।

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
(आत्मा) [ज्ञात्वा] च सततं ध्येय एते दर्शनहेतवः॥'

इति स्मृत्या श्रवणस्य दर्शनसाधनत्वस्य स्पष्टं प्रतीतेश्च।

नन्वेवं दर्शनसाधनत्वेनैव श्रवणविधिरस्त्विति चेन्न। परोक्षं वा शाब्दज्ञानं दर्शनसाधनत्वेन विधीयते, अपरोक्षं वा ? नाद्यः, दशमस्त्वमसीत्यादावपरोक्षे वस्तुनि शब्दस्यापरोक्षज्ञानजनकत्वेन, अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वायोगात्।

न च इन्द्रियत्वेन इन्द्रियजन्यत्वेनापरोक्षत्वं व्याप्तं, तच्च न शब्दजन्यज्ञाने, इति कथमापरोक्ष्यमिति वाच्यम्। इन्द्रियजन्यत्वस्यापरोक्षत्वाप्रयोजकत्वात्। परमते ईश्वरज्ञानस्याजन्यस्यापि अपरोक्षत्वात्। सिद्धान्ते ब्रह्मणस्तथात्वाच्च।

न च साक्षात्करोमीत्यनुव्यवसायबलात् तत्सिद्धिः, शाब्दे च न तादृशानुव्यवसाय इति वाच्यम् । तस्य चाक्षुषमात्रविषयत्वात् । न हि स्पार्शनादिज्ञाने तथानुव्यवसायः । उपनीतप्रत्यक्षे तददर्शनाच्च । 'पर्वतं साक्षात्करोमि वह्निमनुमिनोमि' इति अव्याप्यवृत्तिजातिद्वयानुव्यवसायदर्शनाच्च । वह्निमत्तया पर्वतमनुमिनोमीत्यपि वह्न्यंश एव अनुमितित्वविषयकं, न पर्वतांश इत्यनुभवसिद्धम् । तस्मादपरोक्षवस्तुविषयकत्वेनैव अपरोक्षत्वं ज्ञानस्य । एवं च नित्यापरोक्षे ब्रह्मणि शब्दादप्यपरोक्षज्ञानमेवोत्पद्यते, न तु परोक्षम् । न द्वितीयः, तस्यैव तं प्रति विधानायोगात् ।

न चापातज्ञानं विधेयम् । अध्ययनादेव सिद्धत्वात् । न च गुरुमुखात्तात्पर्यज्ञानं विधेयं, तस्य श्रवणशब्दार्थत्वाभावात् । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' (मु०-१-२-१२) इति गुरूपगमनविधिनैव सिद्धत्वाच्च । किञ्च—तात्पर्यज्ञानं परोक्षज्ञानोद्देशेन विधीयते, अपरोक्षज्ञानोद्देशेन वा ? नाद्यः, अन्वयव्यतिरेकसिद्धत्वात् । तात्पर्यज्ञानस्य शाब्दज्ञानहेतुत्वे मानाभावाच्च । तद्ग्राहकन्यायानामेव तद्धेतुत्वात् ।

न च न्यायविचार एव विधेयः । लक्षणाप्रसङ्गात् । उपगमनविधिनैव गुरुरहितविचारव्यावृत्तिसिद्धेः नियमस्यानवकाशाच्च । लक्षणायां नियमविधिः, नियमविधिसिद्धौ च लक्षणेत्यन्योन्याश्रयप्रसङ्गाच्च ।

अत एव न द्वितीयः, अपरोक्षज्ञानस्य तात्पर्यज्ञानाजन्यत्वाच्च । न च तात्पर्यज्ञानमदृष्टद्वारा तदुपयोग्यस्त्विति वाच्यम् । शाब्दज्ञानद्वारा मननादिक्रमेण चरमसाक्षात्कारहेतुत्वस्यापि सिद्धत्वेन पुनरपूर्वद्वारा विधानायोगात् । वस्तुतः 'तं त्वौपनिषदम्' (बृ०-३-९-२६) 'नावेदविन्मनुते तं बृहन्तम्' इत्यादिश्रुत्या मानान्तरावेद्यत्वनिश्चयात् । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' (मु०-१-२-१२) इति श्रुत्या दृष्टद्वारत्वलाभात् । परोक्ष[ज्ञानस्या]परोक्षज्ञानस्य तात्पर्यज्ञानस्य विचारस्य वा सिद्धत्वात् न श्रवणविध्यवकाशः । धर्मिनिश्चयाभावे तदनुकूलयुक्त्यनुसंधानरूपमननस्याप्यभावात्, धर्मिनिश्चयस्य चौपनिषदे ब्रह्मणि तात्पर्यग्राहकन्यायाधीनत्वात् विचारस्य प्राप्तिः । शाब्दनिश्चये बाह्यतर्काभाससमुत्थाप्यमानाशङ्कानिवृत्तेः तर्कानुसंधानरूपमननव्यतिरेकेणासंभवात् मननस्य प्राप्तिः । अप्रमितस्य निदिध्यासनासंभवात्, निदिध्यासनस्य सूक्ष्मवस्तुसाक्षात्कारे हेतुभावस्य लोकसिद्धत्वाच्च न विधिसंभवः । एवं च श्रवणादीनां त्रयाणां

परस्परभेदः (क्रमस्य)[क्रमो]ऽन्यतः प्रातिश्चेति, न विधित्रयस्याप्यवकाशः। तस्मात् सुष्ठूक्तं न ज्ञानविधिपरा वेदान्ताः, । किन्तु सिद्धब्रह्मप्रतिपादनपरा इतीति दिक्।

इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां समन्वयाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ ईक्षत्यधिकरणम् ॥

## ॥ ईक्षतेर्नाशब्दम् ॥५॥

ब्रह्मलक्षणस्य प्रधानादावतिव्याप्तिपरिहारायेदमधिकरणम्। सांख्यादिपरिकल्पितप्रधानादिकं जगत्कारणं न भवति। तत्र हेतुः अशब्दमिति। हेतुगर्भविशेषणमेतत्, अशब्दत्वात् अवेदमूलत्वादिति। अवेदमूलत्वे हेतुः ईक्षतेरिति। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य, 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा०-६-२-१-३) तथा, 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत' (ऐत०-२-४-१-१-२) तथा क्वचित् षोडशकलं पुरुषं प्रकृत्य, 'स ईक्षाञ्चक्रे' 'स प्राणमसृजत' (प्रश्न०-६-३-४) इत्यादि[षु कारण]वाक्येषु सदादिशब्दप्रतिपाद्यस्य ब्रह्मण ईक्षापूर्वकं तेजःप्रभृतिस्रष्टृत्वप्रतिपादनादचेतनस्य ईक्षारहितस्य प्रधानस्य न जगत्कारणत्वं संभवतीति।

---

ननु 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' (छा०-६-२-३-४) इत्यत्र अप्तेजसोरिव प्रधाने ईक्षितृत्वं गौणमस्तु, तत्राह--

## ॥ गौणश्चेन्नात्मशब्दात् ॥६॥

ईक्षतिशब्दः प्रधाने गौण इति चेत्तन्न। किं कारणं? आत्मशब्दात्। आत्मशब्दश्रवणादित्यर्थः। 'सदेव सोम्येदमग्र आसी'दित्युपक्रम्य, 'तदैक्षत तत्तेजोऽसृजते'ति तेजोबन्नानां सृष्टिमुक्त्वा, तदेव प्रकृतं सदीक्षितृ (तानि) [तत्कर्तृकाणि] च तेजोबन्नानि देवताशब्देन परामृश्याह 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा०-६-३-२) इति। तत्र यदि प्रधानमेवेक्षितृ,

तदा 'सेयं देवते'ति तस्यैव परामर्शात् तदात्मत्वेन जीवकीर्तनमनुपपन्नं स्यात्। आत्मा हि स्वरूपं, न च चेतनो जीवः अचेतनस्यात्मा। ब्रह्मणि तु जीवविषय आत्मशब्द उपपद्यते। तथा, 'स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा०-६-८-७) इत्यत्र श्वेतकेतोः जीवस्य सदात्मतादात्म्योपदेशात्। अप्तेजसोस्तु अचेतनत्वात् नैव किञ्चित् मुख्यत्वे कारणमस्तीति गौणमीक्षितृत्वम्।

---

ननु आत्मशब्दोऽपि प्रधाने नानार्थतया उपचारेण वा वर्ततां, तत्राह—

॥ तन्निष्ठस्य मोक्षोपदेशात् ॥७॥

न प्रधानमात्मशब्दालम्बनम्। 'स आत्मे'ति प्रकृतं सदणिमानमादाय, 'तत्त्वमसि श्वेतकेतो' इति श्वेतकेतोश्चेतनस्य मोक्षयितव्यस्य तन्निष्ठतामुपदिश्य, 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा०-६-१४-२) इति मोक्षोपदेशात्। न हि चेतनस्य अचेतनतादात्म्यं वास्तवं संभवतीति तादात्म्यशास्त्रमप्रमाणं स्यात्। तस्माच्चेतनविषय एवात्मशब्दः।

---

ननु स्थूलारुन्धतीन्यायेन प्रधानतादात्म्योपदेशद्वारा आत्मोपदेशोऽयमस्तु, तत्राह—

॥ हेयत्वावचनाच्च ॥८॥

यदि प्रधानतादात्म्योपदेशोऽयं, तदा अस्य हेयत्वं ब्रूयात्। यथा अरुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां तारां प्रथममरुन्धतीति ग्राहयित्वा, तां प्रत्याख्याय, पश्चादरुन्धतीमेव ग्राहयति, तद्वन्नायमात्मेति ब्रूयात्। न चैवमवोचत्। च शब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः। सत्यपि हेयत्ववचने, प्रतिज्ञाविरोधः प्रसज्येत। 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवस्स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'एवं सोम्य स आदेशो भवतीति' (छा०-६-१-२-३-४-६) इति वाक्योपक्रमे कारणविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। न च सच्छब्दवाच्ये

प्रधाने ज्ञाते भोग्यवर्गज्ञानेऽपि भोक्तृवर्गज्ञानं संभवति । अप्रधानविकारत्वात् भोक्तृवर्गस्य । तस्मान्न सच्छब्दवाच्यं प्रधानम् ।

---

इतश्च न सच्छब्दवाच्यं प्रधानम्—

## ॥ स्वाप्ययात् ॥९॥

स्वस्मिन्नप्ययः स्वाप्ययः । अप्ययो लय इत्यर्थः । सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते— 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति' (छा०-६-८-१) इति । अत्र स्वशब्देन प्रकृतः सच्छब्दवाच्य आत्मा निर्दिश्यते । तमपीतः अपिगतः, अपिपूर्वस्येतेः लयार्थत्वात् । सुषुप्तावस्थायामुपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इवेति 'स्वं ह्यपीतो भवती' त्युच्यते । यदि प्रधानमेव स्वशब्देनोच्येत, चेतनोऽचेतनमप्येतीति विरुद्धं स्यात् । श्रुत्यन्तरं च 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ०-४-३-२१) इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति । अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणम् ।

---

किञ्च—

## ॥ गतिसामान्यात् ॥१०॥

समानैव हि सर्वेषु वेदान्तेपु चेतनकारणावगतिः । न कचिदपि विरुद्धमुपलभ्यते । 'यथा अग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः' (कौ०-३-३) इति, 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' (तै०-२-१) इति, [ 'आत्मत एवेदं सर्वम्' ] (छा०-७-२६-१) इति, 'आत्मन एष प्राणो जायते' (प्र०-३-३) इति च आत्मन एव कारणत्वं सर्वत्र गम्यते ।आत्मशब्दश्चेतने प्रसिद्धः ।

---

किञ्च—

## ॥ श्रुतत्वाच्च ॥ ॥११॥

स्वशब्देनैव सर्वज्ञेश्वरो जगतः कारणमिति श्रूयते, श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य, 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः'

(श्वे०-६-९) इति । तस्मात्सर्वज्ञं ब्रह्म जगतः कारणं नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥
इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ईक्षत्यधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ आनन्दमयाधिकरणम् ॥

## ॥ आनन्दमयोऽभ्यासात् ॥ ॥१२॥

तैत्तिरीयके अन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्य, 'अन्योऽन्तर आत्मानन्दमयः' (तै०-२-५) इति श्रूयते । तत्र किमानन्दमयशब्देन परं ब्रह्मोच्यते, किं वा अन्नमयादिवद्ब्रह्मणोऽर्थान्तरमिति संशयः । अन्नमयादिवदर्थान्तरमेवेति पूर्वपक्षे, राद्धान्तः—'आनन्दमयोऽभ्यासात्' इति । आनन्दमयः परमात्मा । कुतः? अभ्यासात् । पुनः पुनः श्रवणमभ्यासः । परस्मिन्नेव आनन्दशब्दस्य बहुशो वेदान्तेषु प्रयोगात् पर एवात्मा आनन्दमयं इति सूत्रार्थः । आनन्दमयं प्रस्तुत्य, 'रसो वै सः' (तै०-२-७) इति तस्यैव रसत्वमुक्त्वा उच्यते—'रसँ ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ।' (तै०-२-७) 'सैषानन्दस्य मीमाँसा भवति' (तै०-२-८) 'एतमानन्दमयमात्मानमुपसंक्रामति' (तै०-२-८) 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति' (तै०-२-९) इति, 'आनन्दो ब्रह्मेति व्यजानात् (तै०-३-६) इति च । श्रुत्यन्तरे च 'विज्ञानमानन्दं ब्रह्म' (बृ०-३-९-२८) इति ब्रह्मण्येवानन्दशब्दो दृष्टः । एवमानन्दशब्दस्य बहुशो ब्रह्मण्यभ्यासात् आनन्दमयः परमात्मैवेति सिद्धम् ।

---

## ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१३॥

ननु आनन्दविकारार्थक आनन्दमयशब्दः, तस्माद्विकारशब्दान्न परब्रह्माधिगतिरिति चेन्न । किं कारणं? प्राचुर्यात् । ब्रह्मण आनन्दप्राचुर्यात्, प्राचुर्यार्थेऽपि 'तत्प्रकृतवचने मयट्' (पा०-सू०-५-४-२१) इति मयट्स्मरणादानन्दमयशब्देन आनन्दप्रचुरः परमात्मा उच्यते इति सूत्रार्थः ।

## ॥ तद्धेतुव्यपदेशाच्च ॥१४॥

पूर्वं सामर्थ्यात्प्राचुर्ये मयडित्युक्तम् । इदानीमग्रिमवाक्यपर्यालोचनया प्राचुर्ये मयडित्युच्यते । तस्य जीवानन्दस्य आनन्दमयो हेतुरिति व्यपदेशात्कीर्तनादित्यर्थः ।

अथ वा, तस्य प्रकृतानन्दमयस्य हेतुत्वव्यपदेशात् । जीवानन्दं प्रतीति शेषः । यद्वा, स आनन्दमयः हेतुः यस्य जीवानन्दस्य स तद्धेतुः । 'एष ह्येवानन्दयाति' (तै०-२-७) इति अग्रिमवाक्यस्य एषः प्रकृतः अन्यानानन्दयतीत्यर्थः । छान्दसं दीर्घत्वं, स्वयमप्रचुरानन्दत्वे अन्यान्नानन्दयेदिति प्राचुर्यार्थ एव मयडिति ।

---

## ॥ मान्त्रवर्णिकमेव च गीयते ॥१५॥

किञ्च—आनन्दमयः परमात्मैव । कुतः ? यस्मान्मान्त्रवर्णिकमेव मन्त्रवर्णप्रतिपाद्यमेव 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०-२-१) इति मन्त्रवर्णप्रतिपाद्यं परं ब्रह्मैव, 'अन्योऽन्तर आत्मानन्दमयः' (तै०-२-५) इत्यत्र गीयते प्रतिपाद्यते । मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ।

---

## ॥ नेतरोऽनुपपत्तेः ॥१६॥

किञ्च— इतरः परमात्मनोऽन्यः जीवो नानन्दमयः । कुतः? अनुपपत्तेः । अग्रिमसन्दर्भप्रतिपाद्यार्थस्य अन्यस्मिन्ननुपपन्नत्वादित्यर्थः । आनन्दमयं प्रकृत्य श्रूयते — 'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदँ सर्वमसृजत । यदिदं किञ्च ।' (तै०-२-६) इत्यादि । तत्र प्राक् शरीराद्युत्पत्तेरभिध्यानं, सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ।

---

## ॥ भेदव्यपदेशाच्च ॥१७॥

किञ्च—भेदेन व्यपदेशो भेदव्यपदेशः, जीवानन्दमययोर्भेदेन व्यपदेशाच्च आनन्दमयो न जीव इत्यर्थः । आनन्दमयाधिकारे 'रसो वै सः । रसँ ह्येवायं लब्ध्वानन्दी

भवति' (तै०-२-७) इति जीवानन्दमयौ भेदेन व्यपदिशति। न हि लब्धैव लब्धव्यो भवति।

---

## ॥ कामाच्च नानुमानापेक्षा ॥१८॥

अनुमीयत इत्यनुमानं, आनुमानिकं प्रधानादिकमित्यर्थः। तस्यापेक्षा स्वीकारः। आनन्दमयत्वेन कारणत्वेन वा प्रधानादिस्वीकारो न संभवति। कुतः? कामात्। आनन्दमयाधिकारे 'सोऽकामयत' (तै०-२-६) इति कामश्रवणादित्यर्थः। 'ईक्षतेर्नाशब्दम्' (ब्र०-सू०-१-१-५) इति निराकृतमपि प्रधानं प्रसङ्गात् गतिसामान्यप्रपञ्चार्थं पुनर्निराकृतमिति वेदितव्यम्।

---

## ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥

इतश्च न प्रधाने जीवे वा आनन्दमयशब्दः। यतः, अस्मिन्नानन्दमये प्रकृत आत्मनि प्रतिबुद्धस्य अस्य जीवस्य तद्योगं शास्ति शास्त्रम्। तदात्मना योगः तद्योगः तद्भावापत्तिर्मुक्तिरित्यर्थः। 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति।' (तै०-२-७) इति। यदा एतस्मिन्नानन्दमये अरमल्पमप्यन्तरं भेदं अतादात्म्यरूपं पश्यति, तदा संसारभयान्न निवर्तते। यदात्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति, तदा संसारभयान्निवर्तते। एतच्च परमात्मपरिग्रहे उपपद्यते नान्यथा। तस्मादानन्दमयः परमात्मेति सिद्धम्।

---

इदं त्वेकदेशिमतम्। भगवत्पादैस्तु अन्नमयादिशब्दवदानन्दमयशब्दस्यापि विकारार्थत्वात् 'आनन्दमयोऽभ्यासात्' इत्यादिसूत्राणि प्रकारान्तरेण व्याख्यातानि।

### ॥ आनन्दमयोऽभ्यासात् ॥

'ब्रह्म पुच्छं प्रतिष्ठा' (तै०-२-५) इत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति संशयः। पुच्छशब्दादवयवत्वेनेति प्राप्ते, उच्यते—॥आनन्दमयोऽभ्यासात्॥ आनन्दमयशब्देन आनन्दमयवाक्यस्थं 'ब्रह्म पुच्छं प्रतिष्ठे'त्येतद्गत-

ब्रह्मपदमुपलक्ष्यते । तद्ब्रह्मपदं स्वप्रधानब्रह्मपरमिति प्रतिज्ञा । कुतः ? अभ्यासात् । ' असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् ' ( तै०-२-६) इत्यादौ ब्रह्मणोऽभ्यस्यमानत्वात् ।

॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥

विकारशब्दोऽवयवशब्दोऽभिमतः । पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति चेन्न । प्राचुर्यादवयवशब्दोपपत्तेः । प्राचुर्यं प्रायपाठः । पूर्वमवयवप्रधानशब्दप्रयोगात्, तस्यैव बुद्धौ सन्निधानात्पुच्छशब्देन व्यपदेशः । न तु मुख्यं पुच्छत्वम् । पुच्छवत्पुच्छं प्रतिष्ठा परायणं लौकिकस्यानन्दस्य आधारभूतमिति पुच्छशब्देन अधिकरणलक्षणोपपत्तेरिति ।

॥ तद्धेतुव्यपदेशाच्च ॥

हेतुत्वेन व्यपदेशः हेतुव्यपदेशः, तस्य ब्रह्मणः विकारजातं प्रति हेतुत्वव्यपदेशादित्यर्थः । यद्वा, तस्य विकारजातस्य ब्रह्मणो हेतुत्वव्यपदेशादित्यर्थः । ' इदँ सर्वमसृजत ; यदिदं किञ्च । ( तै०-२-६) इति । न च कारणं ब्रह्म स्वविकारस्य आनन्दमयस्य मुख्यया वृत्त्या अवयवः भवतीति, स्वप्रधानं ब्रह्म पुच्छं ज्ञेयत्वेन विवक्ष्यत इति सिद्धम् ।

॥ मान्त्रवर्णिकमेव च गीयते ॥

यत् ' सत्यं ज्ञानमनन्त ' मित्यादिमन्त्रवर्णप्रतिपाद्यं, तदेव ' ब्रह्म पुच्छ'मिति ब्राह्मणे स्वप्राधान्येन गीयते, मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ।

॥ नेतरोऽनुपपत्तेः ॥

ब्रह्म पुच्छं नेतरः, नानन्दमयस्यावयवः । किन्तु परब्रह्मैव । कुतः ? अनुपपत्तेः । अग्रिमवाक्यप्रतिपाद्यजगत्स्रष्टृत्वस्यान्यस्मिन्ननुपपत्तेरित्यर्थः ।

॥ भेदव्यपदेशाच्च ॥

इतश्च—ब्रह्म पुच्छं परब्रह्मैव । ' रसो वै सः । रसँ ह्येवायं लब्ध्वानन्दी भवति । ' ( तै०-२-७) इति आनन्दमयब्रह्मणोर्भेदेन व्यपदेशादित्यर्थः ।

॥ कामाच्च नानुमानापेक्षा ॥

॥ अस्मिन्नस्य च तद्योगं शास्ति ॥

अनयोः पूर्ववदेव व्याख्यानम् । तस्मात् ‘ ब्रह्म पुच्छं प्रतिष्ठा ’ इति परं ब्रह्म ज्ञेयत्वेन विवक्षितमिति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आनन्दमयाधिकरणम् ॥

॥ श्रीः ॥

(७) ॥ अथ अन्तरधिकरणम् ॥

## ॥ अन्तस्तद्धर्मोपदेशात् ॥२०॥

‘अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । ’ (छा०.१-६-६-७) इत्याद्यधिदैवतम् । अथाध्यात्ममपि ‘ अथ य एषोऽन्तरक्षिणि पुरुषः’ ‘तस्यैतस्य तदेव रूपं यदमुष्य रूपम्’(छा०-१-७-५)इत्यादि । तत्र संशयः, किं विद्याकर्मातिशयवशात् प्राप्तोत्कर्षः कश्चित्संसारी आदित्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किं वा नित्यसिद्धः परमेश्वर इति । हिरण्यश्मश्रुरित्यादिशरीरश्रवणात् जीव एवेति प्राप्ते, ब्रूमः— ॥ अन्तस्तद्धर्मोपदेशात् ॥ ‘ य एषोऽन्तरादित्ये ’ ‘ य एषोऽन्तरक्षिणि ’ इति च आदित्याक्ष्णोः अन्तः श्रूयमाणः परमेश्वर एव । कुतः ? तद्धर्मोपदेशात् । तस्य परमेश्वरस्य ये धर्मास्तेषामस्मिन्वाक्ये उपदेशादित्यर्थः । तद्यथा—‘ स एष सर्वेभ्यः पाप्मभ्य उदितः’ (छा०-१-६-७-) इति । सर्वपापरहितत्वस्य ईश्वरधर्मत्वात् । न हि जीवे सर्वपापराहित्यं संभवति । परमेश्वरस्यापि लोकानुग्रहार्थं स्वेच्छया मायिकशरीरपरिग्रहसंभवाद्धिरण्यश्मश्रुत्वादिदर्शनोपपत्तेः ।

## ॥ भेदव्यपदेशाच्चान्यः ॥२१॥

किञ्च—आदित्याक्ष्णोः अन्तः श्रूयमाणः आदित्यशरीराभिमानिनो जीवादन्यः । कुतः ? भेदव्यपदेशात् । आदित्यमण्डले जीवादन्यस्य परमेश्वरस्य अन्तर्यामितया अन्तर्यामिब्राह्मणे ‘ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः’ (बृ०-३-७-९-) इति

श्रुत्यन्तरे भेदेन व्यपदेशादत्रापि अन्तश्शब्दश्रवणेन तत्प्रत्यभिज्ञानात् परमेश्वर एव युक्त इत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्तरधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ आकाशाधिकरणम् ॥

## ॥ आकाशस्तल्लिङ्गात् ॥२२॥

एवं श्रूयते --- ' अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ' (छा०-१-९-१) इति । तत्र संशयः, किमत्राकाशशब्देन परं ब्रह्म अभिधीयते, किं वा भूताकाशमिति । प्रचुरप्रसिद्ध्या भूताकाशमिति प्राप्ते, ब्रूमः— ॥ आकाशस्तल्लिङ्गात् ॥ अत्राकाशशब्देन परमात्मैवाभिधीयते । कुतः ? तल्लिङ्गात् । तस्य परब्रह्मणो यल्लिङ्गं सर्वभूतस्रष्टृत्वादिकं तस्मादित्यर्थः । ' सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते ' ( छा०-१-९-१ ) इति ब्रह्मलिङ्गदर्शनादित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आकाशाधिकरणम् ॥

---

(९) ॥ अथ प्राणाधिकरणम् ॥

## ॥ अत एव प्राणः ॥२३॥

' सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ' (छा०-१-११-५) इत्यत्र प्राणशब्दे पूर्ववदेव संशयनिर्णयौ [ संशयपूर्वपक्षनिर्णयाः] । अत्र प्राणशब्दः [ब्रह्म]पर एव । कुतः ? अत एव । तल्लिङ्गादेवेत्यर्थः ॥

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्राणाधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ ज्योतिरधिकरणम् ॥

## ॥ ज्योतिश्चरणाभिधानात् ॥२४॥

इदं श्रूयते—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' (छा०-३-१३-७) इति। तत्र संशयः, किमिह ज्योतिश्शब्देन आदित्यादिज्योतिरभिधीयते, किं वा परमात्मेति। प्रसिद्धिवशादादित्यादिज्योतिरभिधीयत इति प्राप्ते, ब्रूमः—॥ ज्योतिश्चरणाभिधानात् ॥ अत्र ज्योतिश्शब्देन परब्रह्मैवाभिधीयते। कुतः? चरणाभिधानात्। पादाभिधानादित्यर्थः। पूर्वस्मिन् वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं 'तावानस्य महिमा ततो ज्यायाँश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि॥' (छा०-३-१२-६) इति मन्त्रेण। तत्र चतुष्पदो ब्रह्मणः त्रिपादमृतं रूपं द्युसंबन्धितया निर्दिष्टम्। अस्मिंश्च वाक्ये 'यदतः परो दिवो ज्योति'रिति द्युसंबन्धितया ज्योतिर्निर्दिश्यते। यच्छब्दयोगाच्च प्रसिद्धं ज्योतिरिहाभिधेयम्। प्रसिद्धिश्च पूर्ववाक्ये ब्रह्मण एवेति ज्योतिरत्र ब्रह्मैवेत्यर्थः।

---

## ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥२५॥

ननु पूर्वस्मिन्वाक्ये 'गायत्री वा इदं सर्वं भूतं यदिदं किं च' (छा०-३-१२-१) इति गायत्र्याः प्रकृतत्वात् तस्या एव 'पादोऽस्य सर्वा भूतानी'ति भूतपादव्यपदेशो, न ब्रह्मण इति चेन्न। गायत्र्याख्यछन्दोद्वारेण तद्गतब्रह्मणि सर्वात्मकत्वं प्रतिपाद्यते। न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं संभवति। तस्माद्गायत्र्यां विकारे यदनुगतं जगत्कारणं ब्रह्म तदेव 'गायत्री वा इदं सर्व'मित्युच्यते। सूत्रस्य चायमर्थः। छन्दोऽभिधानात्, गायत्र्याश्छन्दस एव पूर्वं प्रक्रान्तत्वात्, न ब्रह्मणः प्रकृतत्वमिति चेत्तन्न। किं कारणम्? तथा, छन्दोद्वारेण तद्गते ब्रह्मणि। चेतोऽर्पणस्य चित्तसमाधानस्य। निगदात् अभिधानात्। तत्र दृष्टान्तः—तथा हि दर्शनम्। अन्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते। दृश्यत इति दर्शनं दृष्टमित्यर्थः। 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' (ऐ०-आ०-३-२-३-१२) इति। तस्माद्ब्रह्म पूर्वं निर्दिष्टम्। 'तथा चेतोऽर्पण-

निगदात्तथाहि दर्शन' मित्यस्य अपरा व्याख्या—गायत्रीशब्देन गायत्रीसादृश्याद्ब्रह्मैवाभिधीयते। यथा गायत्री चतुष्पदा षडक्षरैः पादैः, एवं ब्रह्मापि चतुष्पात्। तथा गायत्रीसादृश्येन। चेतोऽर्पणस्य ध्यानस्य निगदाद्विधानादित्यर्थः। तथाहि दर्शनं—अन्यत्रापि छन्दोऽभिधायिशब्दः संख्यासाम्यादर्थान्तरे प्रयुज्यमानो दृश्यते। तद्यथा—'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' (छा०-४-३-८) इत्युपक्रम्य, 'सैषा विराट्' इत्युक्तम्। तस्माद्ब्रह्मैव पूर्वं प्रकृतं, न छन्दः।

---

## ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥

किञ्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यत इति अभ्युपगन्तव्यं इति एवंशब्दार्थः। कुतः? भूतादिपादव्यपदेशोपपत्तेः, भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशस्य ब्रह्मण्येवोपपत्तेरित्यर्थः। न हि गायत्र्या भूतादिपादव्यपदेश उपपद्यते। तस्माद्गायत्रीवाक्ये ब्रह्मैव प्रकृतमिति तदेव ज्योतिर्वाक्ये द्युसम्बन्धात्प्रत्यभिज्ञायत इति सिद्धम्।

---

## ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥

ननु पूर्ववाक्ये 'त्रिपादस्यामृतं दिवि' इति सप्तम्या द्यौराधारत्वेनोपदिश्यते। इह पुनः 'अथ यदतः परो दिवो ज्योतिः' इति पञ्चम्या अवधित्वेनेति विभक्तिभेदेन उपदेशभेदात् ज्योतिर्वाक्ये प्रत्यभिज्ञानं न संभवतीति चेन्न। किं कारणम्? उभयस्मिन्नप्यविरोधात्। विभक्तिभेदेन उपदेशद्वयेऽपि प्रत्यभिज्ञाया अविरोधादित्यर्थः। प्रधानप्रातिपदिका (र्थेन) [र्थ]प्रत्यभिज्ञायां गुणभूतविभक्तिविरोधो न प्रतिबन्धक इत्यर्थः। तस्मात् परमेव ब्रह्म ज्योतिश्शब्दवाच्यमिति सिद्धम्॥

इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ज्योतिरधिकरणम्॥

---

॥ श्रीः ॥

(११) ॥ अथ (इन्द्र) प्रतर्दनाधिकरणम् ॥

## ॥ प्राणस्तथानुगमात् ॥२८॥

अस्ति कौषीतकिब्राह्मणे इन्द्रप्रतर्दनाख्यायिका । 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' (कौ०-३-१) इत्यारभ्याम्नाता । तस्यां श्रूयते—'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' (कौ०.३-२) इति । तत्रोत्तरत्र 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (कौ०.३-३) इति । तथा 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' (कौ०.३.८) इत्यादि । अन्ते च 'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' (कौ०-३-९) इत्यादि । तत्र प्राणशब्देन वायुरभिधीयते, इन्द्रो वा, जीवो वा, परं ब्रह्म वेति संशयः । प्रसिद्धिवशात्प्राणो वायुरिति प्राप्ते, ब्रूमः—॥प्राणस्तथानुगमात् ॥ प्राणशब्दं ब्रह्म विज्ञेयम् । कुतः? तथानुगमात् । तथा, ब्रह्मपरत्वेन । अनुगमादवगमादित्यर्थः । उपक्रमादिपर्यालोचनया ब्रह्मपरत्वमेवावगम्यते । आनन्दाजरामृतत्वादीनां परमात्मधर्माणामनुगमात् ॥

---

## ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥२९॥

ननु श्रौतप्राणशब्देन न ब्रह्मोच्यते । कुतः? वक्तुरात्मोपदेशात् । वक्ता ह्यत्रेन्द्रः स्वमात्मानं प्रतर्दनायाचचक्षे, 'मामेव विजानीही'त्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इति इन्द्रवचनात् । तत्र वक्तुरिन्द्रस्य आत्मत्वेन प्राणोपदेशादिन्द्र एव प्राणशब्देन उच्यत इति चेत् । अत्र प्रतिविधीयते । अध्यात्मसंबन्धभूमा ह्यस्मिन् । हि यस्मादस्मिन्नध्याये अध्यात्मसंबन्धस्य परमात्मसंबन्धस्य भूमा बाहुल्यं विद्यत इत्यर्थः । तथाहि—उपक्रमे तावत् 'यं त्वं मनुष्याय हिततमं मन्यसे' (कौ०-३-१) इति हिततमोपासनं प्रारब्धम् । तत्तावत्परमात्मविषयं, तदुपासनस्यैव मोक्षसाधनत्वेन हिततमत्वात् । मध्येऽपि 'एष ह्येव साधु कर्म कारयति' (कौ०-३-९) इत्यादिना सर्वकर्मकारयितृत्वं परमेश्वरधर्मः । एवमध्यात्मसंबन्धभूयस्त्वात् परमात्मैवात्रोपास्यः ।

---

नन्वेवं सति कथमिन्द्रेण प्रतर्दनं प्रति ' मामेव विजानीहि ' इत्युक्तं ? तत्राह—

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥३०॥

इन्द्रस्य ' मामेव विजानीहि ' इत्युपदेशः शास्त्रदृष्ट्या नेतव्यः । अहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः । तत्र दृष्टान्तः—वामदेववत् । यथा वामदेवः शास्त्रदृष्ट्या ' अहं मनुरभवं सूर्यश्च ' ( बृ०-१-४-१० ) इत्याह तद्वदित्यर्थः ।

---

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३१॥

जीवश्च मुख्यप्राणश्च तयोर्लिङ्गात् । अस्मिन्वाक्ये तल्लिङ्गदर्शनात्प्राणशब्देन न ब्रह्माभिधीयते । किन्तु जीवः, मुख्यप्राणो वेति शङ्कार्थः । प्राणपदस्य ब्रह्मपरत्वे गौणत्वप्रसङ्गात् । मुख्यप्राणशब्देन शरीरान्तर्वर्तिवायुरभिमतः । जीवलिङ्गं तावत् ' न वाचं विजिज्ञासीत वक्तारं विद्यात् इति । वक्तृत्वादेः जीवधर्मत्वात् । मुख्यप्राणलिङ्गमपि, ' अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्य उत्थापयति ' इति । शरीरधारणस्य मुख्यप्राणधर्मत्वात् । तस्मान्न ब्रह्म प्राणशब्दाभिधेयं इति शङ्का ।

समाधत्ते—नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् इति । नायं पक्षस्सम्यक्, जीवो वा मुख्यप्राणो वेति । कुतः? उपासात्रैविध्यात् उपासात्रैविध्यापत्तेरित्यर्थः । जीव-मुख्यप्राणलिङ्गवद्ब्रह्मलिङ्गमप्यत्र दृश्यते—'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्मा ' (कौ०-३-९) इत्यादि । तत्र त्रितयलिङ्गदर्शनादुपासनत्रितयविधाने वाक्यभेदा-पत्त्या, ' मामेव विजानीहि ' ( कौ०-३-१ ) ' प्राणोऽस्मि प्रज्ञात्मा ' ( कौ०-३-२ ) इत्युपक्रम्य ' स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' ( कौ०-३-९ ) इति उपसंहारात् उपक्रमोपसंहारयोरैकरूप्यात् तत्र च ब्रह्मलिङ्गदर्शनात्प्राणशब्दो ब्रह्मपर एवेति भावः ।

तत्र दृष्टान्तः—आश्रितत्वादिति । ब्रह्मलिङ्गवशात्प्राणशब्दस्य ' अत एव प्राणः' (ब्र-सू-१-१-२३) इत्यत्र ब्रह्मपरत्वस्याश्रितत्वादित्यर्थः । पक्षधर्मतामाह इह—तद्योगात् ।

इह अस्मिन्वाक्ये तस्य ब्रह्मलिङ्गस्य योगात् सत्वादित्यर्थः । यद्वा-उपसंहरति—इह तद्योगात् । इह अस्मिन्वाक्ये । तस्यैव ब्रह्मपरिग्रहस्यैव योगात् युक्तत्वादित्यर्थः । नोपासात्रैविध्यादित्यस्यापरा व्याख्या—नात्र जीवप्राणलिङ्गविरोधः । कुतः? उपासात्रैविध्यात् गुणत्रयविशिष्टैकोपासनस्य ब्रह्मविषयस्य विधानादित्यर्थः । तत्र दृष्टान्तः, आश्रितत्वादिति—अन्यत्रापि 'मनोमयः प्राणशरीरः' (छा०-३-१४-२ ) इत्यादौ उपाधिधर्मेण ब्रह्मण उपासनस्य आश्रितत्वादित्यर्थः । इह तद्योगादित्युपसंहारः । इहापि तस्योपाधित्रयविशिष्टोपासनस्य योगात् युक्तत्वादित्यर्थः । तस्मात्तत्र प्राणशब्दो ब्रह्मपर एवेति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इन्द्रप्रतर्दनाधिकरणम् ॥

॥ इति श्रीमत्कौशिकगोत्रजलधिचन्द्रश्रीमद्राघवसोमयाजिकुलावतंसश्री(महा)महोपाध्यायश्रीतिरुमलार्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रथमाध्यायस्य प्रथमः पादः ॥

॥ अथैकादशैकत्रिंशत् ॥

अधिकरणसंख्या—११

सूत्र संख्या—३१

---

॥ श्रीः ॥

॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

(१) ॥ सर्वत्र प्रसिद्ध्यधिकरणम् ॥

## ॥ सर्वत्र प्रसिद्धोपदेशात् ॥१॥

छान्दोग्ये श्रूयते—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषः यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत । 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः' ( छा०-३-१४-१-२ ) इत्यादि । तत्र संशयः, किमिह मनोमयत्वादिधर्मैः शारीर आत्मा उपास्यत्वेन उपदिश्यते, किं वा परं ब्रह्मेति । मनआदिसंबन्धस्य जीवधर्मत्वाज्जीव इति प्राप्ते-ब्रूमः-सर्वत्र प्रसिद्धोपदेशात् । अत्र परमेव ब्रह्मोपास्यत्वेनोपदिश्यते । कुतः?

सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र सर्वेषु वेदान्तेषु यत्प्रसिद्धं जगत्कारणं परं ब्रह्म तस्यैवात्र 'सर्वं खल्वि' त्यदिना उपदेशादित्यर्थः ।

---

## ॥ विवक्षितगुणोपपत्तेश्च ॥२॥

किञ्च—विवक्षिता उपासनायां उपादेयत्वेन उपदिष्टा ये गुणास्सत्यसंकल्पादयः तेषां ब्रह्मण्येव युक्ततरत्वादित्यर्थः ॥

---

## ॥ अनुपपत्तेस्तु न शारीरः ॥३॥

तुशब्दः अवधारणार्थः । अत्र मनोमयत्वादिभिरुपास्यं परब्रह्मैव, न तु शारीरः जीव इत्यर्थः । कुतः? अनुपपत्तेः । सत्यसंकल्पादिगुणानां जीवे अनुपपन्नत्वात्, सामञ्जस्येनासंम्भवादित्यर्थः ।

---

## ॥ कर्मकर्तृव्यपदेशाच्च ॥४॥

किञ्च—मनोमयत्वादिगुणो न शारीरः । कुतः? कर्मकर्तृव्यपदेशात्, 'एतमितः प्रेत्याभिसंभवितास्मि' (छा०-३-१४-४) इति । एतमिति प्रकृतं मनोमयत्वादिगुणं उपास्यं कर्मत्वेन व्यपदिशति, अभिसंभवितास्मीति शारीरमुपासकं कर्तृत्वेन । न ह्येकस्मिन् शारीरे कर्मकर्तृभाव आञ्जस्येन सत्यां गतौ उपपद्यते । तस्मान्न शारीरः ।

---

## ॥ शब्दविशेषात् ॥५॥

किञ्च—मनोमयत्वादिगुणकः परमात्मैव, न तु शारीरः । कुतः? शब्दविशेषात् । 'मनोमय' इत्यादिप्रथमान्तशब्दस्य परमात्मप्रतिपादकस्य सत्त्वादित्यर्थः । समानप्रकरणे श्रुत्यन्तरे 'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः' (शत-ब्रा०-१०-६-३-२) इत्यादौ प्रथमान्तेन परमात्माभिधानं

हिरण्मय इति, अन्तरात्मन्निति सप्तम्यन्तेन शारीराभिधानं दृष्टमिति, इहापि प्रथमान्तशब्दः परमात्मपर एवेत्यर्थः ।

---

## ॥ स्मृतेश्च ॥ ६ ॥

स्मृतिवशाज्जीवपरमात्मनोर्भेद इत्यर्थः ॥

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥' ( गी०-१८-६१ )

इत्यादिस्मृतिः शारीरपरमात्मनोर्भेदं दर्शयति । तथा च कर्मकर्तृव्यपदेश उपपद्यत इत्यर्थः ।

---

## ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

ननु नात्र परमात्मोपास्यः । कुतः? अर्भकौकस्त्वात् । अर्भकं अल्पं ओकः स्थानं यस्य तस्य भावः अर्भकौकस्त्वं तस्मादित्यर्थः । 'एष म आत्मान्तर्हृदये' ( छा०-३-१४-४ ) इति परिच्छिन्नायतनत्वादित्यर्थः । किञ्च—तद्व्यपदेशाच्च । तस्य अणीयस्त्वस्य व्यपदेशादित्यर्थः । स्वशब्देनैव 'अणीयान्व्रीहेर्वा यवाद्वा' ( छा०-३-१४-४ ) इत्यणीयस्त्वव्यपदेशाच्छारीर एवाराग्रमात्रो जीव इह उपदिश्यते, न सर्वगतः परमात्मेति शङ्कार्थः ।

अत्र समाधिः—न निचाय्यत्वादेवं व्योमवच्च । नायं पक्षः, शारीर इहोपदिश्यत इति । किन्तु परमात्मैवेत्यर्थः । अर्भकौकस्त्वाद्यनुपपत्तिं परिहरति—निचाय्यत्वादेवमिति । एवमणीयस्त्वादिविशिष्टस्य परमात्मनः निचाय्यत्वादुपास्यत्वादित्यर्थः । सालग्रामे विष्णुबुद्धिवत् हृदयपुण्डरीके परमात्मा उपास्यत्वेनोपदिश्यते । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तः—व्योमवदिति । यथा सर्वगतमपि व्योम सूचीपाशाद्यपेक्षया अर्भकौकोऽणीयश्च व्यपदिश्यते, एवं ब्रह्मापीति ।

---

## ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥

ननु ईश्वरस्य व्योमवत्सर्वगतत्वे चेतनत्वाविशेषाज्जीववत्सुखदुःखानुभवरूपसंभोगप्राप्तिरिति चेन्न। किं कारणम्? वैशेष्यात्। जीवपरमात्मनोरत्यन्तविशेषादित्यर्थः। जीवः कर्ता भोक्ता धर्मादिमांश्चेति तस्य सुखदुःखसंबन्धः। परमात्मा तु तद्विलक्षण इति न तस्य भोगप्रसङ्ग इत्यर्थः। विशेष एव वैशेष्यम्। स्वार्थे ष्यञ्। विशेषातिशयद्योतनार्थो वा। जीवपरमात्मनोरैक्येऽपि न जीवगतसुखदुःखादिकमीश्वरस्य, बिम्बप्रतिबिम्बधर्मयोरसाङ्कर्यस्य चालं प्रसिद्धत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वत्र प्रसिद्ध्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ अत्रधिकरणम् ॥

## ॥ अत्ता चराचरग्रहणात् ॥९॥

कठवल्लीषु पठ्यते—'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥' (१-२-२४) इति। अत्र ओदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते। स किमग्निः, जीवः, परमात्मा वेति संशये, 'अग्निरन्नादः' बृ०-१-४-६) 'तयोरन्यः पिप्पलं स्वाद्वत्ति' (मुण्ड०-३-१-१) इति अग्निजीवयोरत्तृत्वप्रसिद्धेस्तयोरन्यतर इह अत्ता भवितुमर्हतीति प्राप्ते-ब्रूमः—अत्ता चराचरग्रहणात्। अत्र अत्ता परमात्मैव। कुतः? चराचरग्रहणात्। चरं अचरं च तयोः स्थावर जङ्गमयोः अत्राद्यत्वेन ग्रहणात् श्रवणादित्यर्थः। मृत्यूपसेचनत्वेन प्राणिमात्रस्याद्यत्वेन प्रतीयमानत्वात्। ब्रह्मक्षत्रग्रहणस्य प्रदर्शनमात्रार्थत्वोपपत्तेः। परमात्मनः सर्वसंहर्तृत्वाच्चराचरस्याद्यत्वेन ग्रहणमुपपद्यतेतराम्।

---

## ॥ प्रकरणाच्च ॥१०॥

इतश्च परमात्मैवात्ता। कुतः? प्रकरणात् परमात्मनः प्रकृतत्वात् इत्यर्थः। 'न जायते म्रियते वा विपश्चित्' (काठ०-१-२-१८) इत्यादिना परमात्मनः प्रकृतत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अत्रधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ गुहां प्रविष्टाधिकरणम् ॥

## ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

कठवल्लीषु पठ्यते—'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥' (काठ०-१-३-१) इति । तत्र संशयः किमिह गुहां प्रविष्टाविति बुद्धिजीवौ निर्दिष्टौ, किं वा जीवपरमात्मानाविति । गुहां प्रविष्टाविति प्रादेशिकत्वश्रवणाद्बुद्धिजीवाविति प्राप्ते-ब्रूमः—गुहां प्रविष्टौ जीवपरमात्मानौ वेदितव्यौ । कुतः? आत्मानौ हि । हि यस्मात् द्वावप्यात्मानावित्यर्थः । ऋतं पिबन्ताविति कर्मफलभोगश्रवणात् एकस्तावदात्मा, द्वितीयोऽप्यात्मैव न्याय्यः । तत्र युक्तिमाह— तद्दर्शनादिति । संख्याश्रवणे तस्य समानस्वभावप्रत्ययस्यैव लोके दर्शनादित्यर्थः । लोके हि 'अस्य गोर्द्वितीयोऽन्वेष्टव्य' इत्युक्ते, गौरेव द्वितीयः अन्विष्यते, नाश्वो न वा पुरुषः । एवमिहाप्यात्मत्वसाम्याज्जीवपरमात्मानावेवेत्यर्थः ।

---

## ॥ विशेषणाच्च ॥१२॥

किञ्च—अस्मिन्प्रकरणे जीवपरमात्मनोरेव विशेषणश्रवणादित्यर्थः ।

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु'—(का०-१-३-३)

इत्यादिना जीवविशेषणात् ॥

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥' (का०-१-२-१२) इति परमात्मविशेषणादिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां गुहां प्रविष्टाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ अन्तराधिकरणम् ॥

## ॥ अन्तर उपपत्तेः ॥१३॥

छान्दोग्ये श्रूयते—'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति'

( छा०-४-१५-१ ) इत्यादि । अन्तरे उपदिश्यमानः परमात्मा, अन्यो वेति संशये, सर्वगतस्य अक्षिस्थानत्वानुपपत्तेः अन्य इति प्राप्ते, ब्रूमः—अन्तरः अक्षिमध्यगतः परमात्मैव । कुतः? उपपत्तेः । आत्मत्वामृतत्वाभयत्वादीनामिहोपदिश्यमानानां परमात्मन्येव उपपत्तेरित्यर्थः ॥

कथं पुनस्सर्वगतस्याक्ष्यल्पस्थानमुपदिश्यत इत्यत्राह—

## ॥ स्थानादिव्यपदेशाच्च ॥१४॥

ईश्वरस्य अल्पस्थानव्यपदेशो नानुपपन्नः । कुतः? स्थानादिव्यपदेशात् 'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरः यं चक्षुर्न वेद यस्य चक्षुश्शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (बृ०-३-७-१८) इति परमात्मनोऽपि चक्षुस्स्थानव्यपदेशदर्शनादित्यर्थः । आदिशब्देन रूपपरिग्रहः दृष्टान्तत्वेनोक्तः । 'हिरण्यश्मश्रु'रित्यादिरूपश्रवणवत् अल्पस्थानत्वमपि उपासनार्थमविरुद्धमिति भावः ।

## ॥ सुखविशिष्टाभिधानादेव च ॥१५॥

किञ्च—परमात्मैव इहोपदिश्यते । कुतः? सुखविशिष्टाभिधानादेव । एवकारेण नात्र संशयः कार्यः इति सूचयति । सुखविशिष्टं ब्रह्म वाक्योपक्रमे श्रूयते, तस्यैवेहाभिधानादित्यर्थः । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा०-४-१०-५) इति प्रक्रान्तं, तस्यैवात्र ग्रहणं युक्तम् । कंशब्दः लोके वैषयिकसुखे प्रसिद्धः । तस्य 'यद्वाव कं तदेव खं यदेव खं तदेव कम् ।' (छा०-४-१०-५) इति प्रतिवचने परस्परवैशिष्ट्यप्रतिपादनेन सुखविशिष्टस्य ब्रह्मणः प्रतिपादनात् ।

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥१६॥

इतश्च परमात्मा । कुतः? श्रुतोपनिषत्कगत्यभिधानात् । श्रुता अभ्यस्ता उपनिषद्ब्रह्मविद्या येन स श्रुतोपनिषत्कः, तस्य या गतिः, तस्या अभिधानादित्यर्थः । 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्य आदित्यमभिजयन्ते एतद्वै प्राणानामायतनं एतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते' (प्रश्न०-१-१०) इति श्रुतौ,

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥' ( गी०-८-१४ )

इति स्मृतौ च, ब्रह्मविदो या गतिः देवयानाख्या प्रसिद्धा, सैवेहाक्षिपुरुषविदोऽप्यभिधीयते—'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथश्च एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा०-४-१५-५) इति । तदेवं ब्रह्मविद्विषयया गत्या अक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ।

---

## ॥ अनवस्थितेरसंभवाच्च नेतरः ॥१७॥

किञ्च—इतरः छायापुरुषादिः अक्षिगत इति नायं पक्षः । कुतः? अनवस्थितेः । उपासकस्य सर्वत्र अक्षिणि छायासंपादकपुरुषान्तरस्यानवस्थितेरसंनिधानादित्यर्थः । असंभवादिति छायापुरुषे अमृतत्वादिगुणानामसंभवादित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्तराधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ अन्तर्याम्यधिकरणम् ॥

## ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥१८॥

य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' (बृ०-३-७-१) इत्युपक्रम्य श्रूयते— 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः' ( बृ०-३-७-३ ) इत्यादि । तत्राधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयिता अन्तर्यामी श्रूयते । स किमधिदैवाद्यभिमानी देवतात्मा कश्चित् किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किं वा परमात्मेति, संशयः । देवतात्मैवेति प्राप्ते, ब्रूमः,—अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । अधिदैवादिषु अन्तर्यामी यः श्रूयते, स परमात्मैव । कुतः ? तद्धर्मव्यपदेशात् । तस्य परमात्मनो ये धर्मा आत्मत्वामृतत्वनियन्तृत्वाविज्ञेयत्वादयः, तेषां व्यपदेशान्निर्देशादित्यर्थः ॥

प्रधानस्य अन्तर्यामिशब्दवाच्यत्वं निराकरोति—

---

## ॥ न च स्मार्तमतद्धर्माभिलापात् ॥१९॥

स्मार्तं सांख्यस्मृतिकल्पितं प्रधानं नान्तर्यामिशब्दवाच्यम् । कुतः ? अतद्धर्माभिलापात् । तच्छब्देनात्र प्रधानमुच्यते । न तत्, अतत् । प्रधानभिन्नं परमात्मेत्यर्थः । तस्यैव ये धर्मास्तेषामभिलापादभिधानादित्यर्थः । प्रधानधर्माणामभिलापाभावादित्यर्थः । 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' (बृह०-३-७-२३) इति वाक्यशेषे श्रूयते । ते च द्रष्टृत्वात्मत्वादयो न प्रधानस्य संभवन्ति ।

---

ननु शारीरोऽन्तर्यामीत्याशङ्क्याह—

## ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥२०॥

नेत्यनुवर्तते । शारीरश्च नान्तर्यामी । कुतः? उभयेऽपि हि भेदेनैनमधीयते । हि यस्मादुभयेऽपि काण्वा माध्यन्दिनाश्च 'यो विज्ञाने तिष्ठ'न्नित्यादिना प्रकारेण अन्तर्यामिणो भेदेनैनं जीवमधीयते । 'यो विज्ञाने तिष्ठन्' (बृ०-३-७-२२) इति काण्वाः । 'य आत्मनि तिष्ठ'न्निति माध्यंदिनाः । विज्ञानात्मशब्दयोः शारीरपरत्वेन तयोर्भेदस्य स्पष्टत्वादिति भावः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्तर्याम्यधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ अदृश्यत्वादिगुणकाधिकरणम् ॥

## ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥२१॥

'अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥' (मुण्ड०-१-१-५-६) इति श्रूयते । तत्र संशयः, किमदृश्यत्वादिगुणकः शारीरः, किं वा प्रधानं, किं परमात्मेति । प्रधानं जीवो वेति प्राप्ते, ब्रूमः— ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ अदृश्यत्वादिगुणकः परमात्मैव । कुतः? धर्मोक्तेः 'यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः (मुण्ड०-१-१-९) इत्यादिपरमेश्वरधर्मोक्तेरित्यर्थः ।

---

## ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥

किञ्च—अत्र अदृश्यत्वादिगुणकः परमात्मैव । नेतरौ, न प्रधानजीवौ । कुतः? विशेषणभेदव्यपदेशाभ्याम् । भेदेन व्यपदेशो भेदव्यपदेशः । विशेषणं च भेदव्यपदेशश्च ताभ्यामित्यर्थः । विशेषणं तावत्—'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः' (मु०-२-१-२) इत्यादि । न ह्येतद्दिव्यत्वादि विशेषणं परमात्मनोऽन्यस्य संभवति । भेदव्यपदेशोऽपि 'अक्षरात्परतः परः' (मु०-२-१-२) इति । अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परं, तस्मात्परतः पर इति, प्रधानात्परमात्मनो भेदव्यपदेशः ।

---

## ॥ रूपोपन्यासाच्च ॥२३॥

किञ्च—स परमात्मा । कुतः? रूपोपन्यासात् । रूपं शरीरं तस्योपन्यासादित्यर्थः । 'अक्षरात्परतः परः' इत्यस्यानन्तरं 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु०-२-१-३) इत्यादिना प्राणप्रभृतीनां पृथिवीपर्यन्तानां सर्गमुक्त्वा, तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं दृश्यते—'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥' (मु०-२-१-४) इति । एतत्सर्वं परमेश्वरस्यैवोचितं नान्यस्य । 'अग्निर्मूर्धे'ति वाक्यस्य जायमानमध्यपाठाद्धिरण्यगर्भपरस्य न परमात्मपरतेति, 'पुरुष एवेदं विश्वम्' (मु०-२-१-१०) इत्यादिसर्वात्मत्वोपन्यासः सूत्रार्थ इति भगवत्पादाः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अदृश्यत्वादिगुणकाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ वैश्वानराधिकरणम् ॥

## ॥ वैश्वानरः साधारणशब्दविशेषात् ॥२४॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः

चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः मनोऽन्वाहार्यपचन आस्यमाहवनीयः' ( छा०-५-१८-२ ) इत्यादि श्रूयते । तत्र संशयः, किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निः, अथवा तदभिमानिनी देवता, अथवा शारीरः, आहोस्वित्परमेश्वर, इति । वैश्वानरशब्दस्य परमात्मनोऽन्यस्मिन् प्रसिद्धत्वात् जाठरादिरेव वैश्वानर इति प्राप्ते, ब्रूमः— ॥वैश्वानरस्साधारणशब्दविशेषात् ॥ वैश्वानरः परमात्मैव । कुतः? साधारणशब्दविशेषात् । [ साधारणशब्दयोर्विशेषः साधारणशब्दविशेषःतस्मात् ] । साधारणशब्दयोरपि विशेषदर्शनादित्यर्थः ।

यद्यपि वैश्वानरशब्दः त्रयाणां जाठरादीनां साधारणः, 'अयमग्निः वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' ( बृ०-५-९ ) इत्यादौ जाठरे प्रयोगो दृश्यते । सामान्येनाग्निमात्रेऽपि प्रयोगो दृश्यते—'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' ( ऋ० सं०-१०-८८-१२ ) इत्यादौ । 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' ( ऋ० सं०-१-९८-१ ) इत्यादौ देवतात्मनि प्रयोगदर्शनात् । आत्मशब्दोऽपि शारीरपरमात्मनोः साधारणः । तथापि, वैश्वानरात्मशब्दयोः साधारणयोरपि परमात्मपरत्व एव विशेषोऽवगम्यते—'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' ( छा०-५-१८-२ ) इत्यादिः, द्युमूर्धत्वादेः परमेश्वर एव उपपन्नतरत्वात् ।

---

## ॥ स्मर्यमाणमनुमानं स्यादिति ॥२५॥

किञ्च वैश्वानरपदस्य आत्मपरत्वे स्मर्यमाणं स्मृत्युक्तं रूपं अनुमानं स्यात्, गमकं स्यादित्यर्थः । इतिशब्दो हेत्वर्थः, यस्मादेवं स्मृतिः तस्मादित्यर्थः ।

'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिः चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥' इति ।

एतस्याः स्मृतेरुदाहृतश्रुतिरेव मूलम् । मूलान्तरकल्पने मानाभावात् इति ; अतस्त्यवैश्वानरशब्दः परमेश्वरपर एवेति तात्पर्यम् ।

---

## ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥२६॥

ननु वैश्वानरो न परमात्मा। [कुतः ?] शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च। शब्दस्तावत्—वैश्वानरशब्दो न परमेश्वरे संभवति, अर्थान्तरे रूढत्वात्। तथाग्निशब्दः—'स एषोऽग्निर्वैश्वानरः' (श० ब्रा०-१०-६-१-११) इति। आदिशब्दात् 'हृदयं गार्हपत्यः' (छा०-५-१८-२) इत्यादिप्रकल्पनं, तथा 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' (छा०-५-१०-१) इत्यादिना प्राणाहुत्यधिकरणतासंकीर्तनं च गृह्यते। एतेभ्यो हेतुभ्यः जाठरो वैश्वानरः। किञ्च अन्तःप्रतिष्ठानात्। अन्तःप्रतिष्ठानमपि श्रूयते—'पुरुषेऽन्तः प्रतिष्ठितं वेद' इति। तदपि जाठरे संभवति। तस्मात् वैश्वानरो न परमात्मेति चेत्।

नैष दोषः। कुतः ? तथा दृष्ट्युपदेशात्। तथा, जाठरापरित्यागेन। दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे इहोपदिश्यते 'मनो ब्रह्मेत्युपासीत' (छा०-३-१८-१) इत्यादिवत्। अथवा, तथा, जाठरोपहितरूपेण परमेश्वरस्य दृष्टेरुपासनाया उपदेशादित्यर्थः। 'मनोमयः प्राणशरीरो भारूपः' (छा०-३-१४-२) इतिवत्।

ननु मुख्य एव जाठरोऽत्रोपदिश्यतामित्यत्राह-असंभवादिति। 'मूर्धैव सुतेजा' इत्यादिविशेषस्य जाठरे असंभवादित्यर्थः। किञ्च पुरुषमपि एनं वैश्वानरं वाजसनेयिनः अधीयते—'स एषोऽग्निर्वैश्वानरः यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' (श० ब्रा०-१०-६-१-११) इति। परमेश्वरस्य सर्वात्मत्वात् पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च उभयमपि उपपद्यते॥

---

## ॥ अत एव न देवता भूतञ्च ॥२७॥

देवता च भूतं च देवताभूतं, एकवद्भावात्। द्वयमपि न वैश्वानरशब्दाभिधेयम्। कुतः? अत एव, पूर्वोक्तेभ्यो हेतुभ्यः। द्युमूर्धत्वादेरुभयत्रासामञ्जस्यादिति भावः।

---

॥ साक्षादप्यविरोधं जैमिनिः ॥२८॥

पूर्वं जाठराग्निप्रतीको वा जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तं अन्तः-प्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादेव परमेश्वरोपासनापरिग्रहे अविरोधं विरोधाभावं जैमिनिर्मन्यते । पूर्वापरपर्यालोचनया वैश्वानरशब्दस्य परमेश्वरपरत्वे निर्णीते, परमेश्वर एव वैश्वानरशब्दः केनचिद्योगेन वर्णनीय इत्यभिप्रायः । विश्वश्चायं नरश्चेति वा, विश्वेषां नर इति वा, विश्वे नरा यस्येति वा, विश्वनरः । विश्वनर एव वैश्वानरः । तद्धितः अनन्यार्थो राक्षसवायसादिवत् ।

---

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इत्याशङ्क्याह—

॥ अभिव्यक्तेरित्याश्मरथ्यः ॥२९॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमुपपद्यते । कुतः? अभिव्यक्तेः । उपासकानां कृते परमेश्वरः हृदयादिषु उपलब्धिस्थानेषु प्रादेशमात्रपरिमाणोऽभिव्यज्यते किल इत्याश्मरथ्य आचार्यो मन्यते ।

---

॥ अनुस्मृतेर्बादरिः ॥३०॥

प्रादेशमात्रहृदयप्रतिष्ठेन मनसा अनुस्मृतेः ध्यानात् प्रादेशमात्र इत्युच्यत इति बादरिराह । यथा प्रस्थपरिमिततण्डुलाः प्रस्था इत्युच्यन्ते, तद्वत् ।

---

॥ संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥३१॥

मूर्धप्रभृतिचुबुकपर्यन्ते प्रादेशमात्रे वैश्वानरस्य उपास्यत्वप्रतिपादनात्परमेश्वरस्य प्रादेशमात्रत्वं संपन्नम् । ततः प्रादेशमात्रसंपत्तेः प्रादेशमात्रश्रुतिरुपपन्नेति जैमिनिराह । अत्रार्थे श्रुत्यन्तरसंवादमाह सूत्रकारः— तथा हि दर्शयति [इति] । वैश्वानरस्य प्रादेशमात्रत्वं श्रुत्यन्तरमपि दर्शयतीत्यर्थः ।

तथा हि वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्य अवयवान् अध्यात्मं मूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति । तच्च ब्राह्मणं भाष्ये अनुसन्धेयम् ।

---

## ॥ आमनन्ति चैनमस्मिन् ॥३ ॥

[ किञ्च ] अस्मिन् मूर्धचुबुकान्तराले प्रादेशमात्रे एनं परमेश्वरं जाबाला आमनन्ति—' य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति, सोऽविमुक्तः कस्मिन्प्रतिष्ठितः इति, वरणायां नाश्यां च मध्ये प्रतिष्ठित इति, का वै वरणा का च नाशीति, सर्वानिन्द्रियकृतान् दोषान् वारयतीति तेन वरणा भवतीति, सर्वाणि इन्द्रियकृतानि पापानि नाशयतीति तेन नाशी भवतीति ' इति निरुच्य, ते पुनरप्यामनन्ति—' कतमच्चास्य स्थानं भवतीति, भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्युलोकस्य परस्य च सन्धिर्भवतीति ' ( जाबा ७-२ ) इति तस्मात्प्रादेशमात्रश्रुतिः परमेश्वरेऽप्युपपन्ना ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वैश्वानराधिकरणम् ॥

॥ इति श्रीमत्कौशिकगोत्रजलधिचन्द्रश्रीमद्राघवसोमयाजिकुलावतंसश्री(महा)महोपाध्यायतिरुमलार्यसूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रथमाध्यायस्य द्वितीयः पादः ॥

सर्वत्र सप्त द्वात्रिंशत् ॥
अधिकणसंख्या— (७)
सूत्रसंख्या—(३२)

---

॥ श्रीः ॥

॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

ललितैः पदविन्यासैः या नृत्यति विबुधवदनरङ्गेषु ।
सच्छास्त्रवेदवाक्यैः सरस्वतीं तां नमस्यामः ॥

(१) ॥ अथ द्युभ्वाद्यधिकरणम् ॥

## ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥१॥

मुण्डकोपनिषदि श्रूयते—'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः॥' (मु०-२-२-५) इति । अत्र यदेतत् द्युप्रभृतीनामोतत्ववचनादायतनं किञ्चिदवगम्यते, तत्किं परब्रह्म स्यात्, आहोस्विदर्थान्तरमिति संशये, अर्थान्तरमिति प्राप्ते, ब्रूमः—॥द्युभ्वाद्यायतनं स्वशब्दात् ॥ द्युभ्वाद्यायतनं परब्रह्मैव । द्यौश्च भूश्च द्युभुवौ, द्युभुवावादी यस्य तत् द्युभ्वादि । द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं यदस्मिन्वाक्ये ओतत्वेन निर्दिष्टं तत् द्युभ्वादि, तस्य आयतनं स्थानमित्यर्थः । कुतः? स्वशब्दात्, स्वस्य परब्रह्मणः प्रतिपादको यः शब्द आत्मशब्दः तस्मात्, 'तमेवैकं जानथ आत्मान'मित्यात्मशब्दश्रवणादित्यर्थः ।

---

## ॥ मुक्तोपसृप्यव्यपदेशात् ॥२॥

किञ्च द्युभ्वाद्यायतनं परब्रह्म । कुतः? ॥मुक्तोपसृप्यव्यपदेशात् ॥ मुक्तैः उपसृप्यं प्राप्यं मुक्तोपसृप्यं, भावप्रधानो निर्देशः, मुक्तोपसृप्यत्वव्यपदेशः, तस्मादित्यर्थः । यद्वा, मुक्तोपसृप्यं यत्तस्यैवात्र व्यपदेशादित्यर्थः ।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥' (मु०-२-२-८)

'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु०-३-२-८) इति । मुक्तोपसृप्यत्वं च ब्रह्मण एव प्रसिद्धम्—

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' ( बृ०-४-४-७ )

इत्यादौ ।

---

## ॥ नानुमानमतच्छब्दात् ॥३॥

अनुमीयत इत्यनुमानं सांख्यपरिकल्पितं प्रधानं न द्युभ्वाद्यायतनम् । कुतः ? अतच्छब्दात् । तस्य अनुमानस्य शब्दः तच्छब्दः, न तच्छब्दः, अतच्छब्दः, तस्मात्, प्रधानप्रतिपादकशब्दस्यात्राश्रवणादित्यर्थः ।

---

## ॥ प्राणभृच्च ॥४॥

प्राणभृत् जीवोऽपि न द्युभ्वाद्यायतनम् । कुतः? अतच्छब्दादेव । यद्यप्यात्मशब्दस्साधारणः, तथापि प्राणभृतः परिच्छिन्नस्य न द्युभ्वाद्यायतनत्वं सम्यक् संभवतीत्यतच्छब्दत्वमेव ।

---

## ॥ भेदव्यपदेशात् ॥५॥

इतोऽपि प्राणभृन्न द्युभ्वाद्यायतनं, ॥भेदव्यपदेशात्॥ 'तमेवैकं जानथ आत्मान' मिति ज्ञातृज्ञेयभावेन भेदव्यपदेशादित्यर्थः । प्राणभृतो मुमुक्षुत्वेन ज्ञातृत्वात् परिशेषात् ज्ञेयं परं ब्रह्मैव द्युभ्वाद्यायतनम् ।

---

## ॥ प्रकरणात् ॥६॥

'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु०-१-१-३ ) इत्युपक्रमात् परमात्मन एवेदं प्रकरणम् । तस्मादपि न प्राणभृदित्यर्थः ।

---

## ॥ स्थित्यदनाभ्यां च ॥७॥

किञ्च न प्राणभृत् द्युभ्वाद्यायतनम् । कुतः ? स्थित्यदनाभ्याम् । स्थितिश्च अदनं च ताभ्याम् । पञ्चमीद्विवचनम् । द्युभ्वाद्यायतनं प्रकृत्य, 'द्वा सुपर्णा' (मु०-३-१-१) इति मन्त्रे स्थित्यदने निर्दिश्येते । 'तयोरन्यः पिप्पलं स्वाद्वत्ती' ति अदनं, 'अनश्नन्नन्योऽभिचाकशीति' इत्यौदासीन्येन स्थितिर्निर्दिश्यते । यदि परमेश्वरः इह द्युभ्वाद्यायतनत्वेन प्रकृतः स्यात्, तदैव तस्य क्षेत्रज्ञात् पृथग्वचनं समञ्जसं स्यात् नान्यथेति भावः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां द्युभ्वाद्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ भूमाधिकरणम् ॥

## ॥ भूमा संप्रसादादध्युपदेशात् ॥८॥

छान्दोग्ये श्रूयते—'भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' (छा०-७-२३-२४) इत्यादि । तत्र संशयः, किं प्राणो भूमा स्यात्, परमात्मा वेति । 'प्राणो वा आशाया भूयान्' (छा०-७-१५-१) इति पूर्वं प्राणस्य सन्निधानात्प्राणो भूमेति प्राप्ते, ब्रूमः—भूमा परमात्मैव । कुतः? संप्रसादादध्युपदेशात् । सम्यक्प्रसीदति अस्मिन्निति संप्रसादः सुषुप्तिस्थानम् । सुषुप्त्यवस्थायां च प्राणो जागर्तीति संप्रसादशब्देन प्राण उच्यते, प्राणादध्यूर्ध्वं भूम्न उपदेशादित्यर्थः । प्राणोपदेशानन्तरं 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा०-७-१६-१) इति सत्यशब्दवाच्यपरमात्मवादस्यातिवादत्वमुक्त्वा, भूमोपदेशात् संप्रसादादध्युपदेशो ज्ञेयः ।

---

## ॥ धर्मोपपत्तेश्च ॥९॥

किञ्च 'यत्र नान्यत्पश्यती' त्यादिधर्माणां परमात्मन्येवोपपत्तेः परमात्मैव भूमेत्यर्थः । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ०-४-५-१५) इति श्रुत्यन्तरानुसारात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां भूमाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ अक्षराधिकरणम् ॥

## ॥ अक्षरमम्बरान्तधृतेः ॥ १० ॥

बृहदारण्यके श्रूयते—'कस्मिन्नु खलु आकाश ओतश्च प्रोतश्चेति । स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ०-३-८-७-८) इत्यादि । तत्र संशयः, किमक्षरशब्देन वर्ण उच्यते, किं वा परमात्मेति । 'अक्षरसमाम्नाय' इत्यादौ वर्णे प्रसिद्धत्वात्स एवाक्षरशब्दवाच्य इति प्राप्ते, ब्रूमः—अक्षरं परब्रह्मैव । कुतः ? अम्बरान्तधृतेः । पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः । 'यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्याः' इत्यारभ्य 'आकाश एव तदोतश्च प्रोतश्च' (बृ०-३-८-७) इत्यन्तेन सर्वविकाराधारतया निर्दिष्ट आकाशः । आकाशः कस्मिन्नोतश्च प्रोतश्चेति गार्ग्या पृष्टस्य याज्ञवल्क्यस्य 'एतद्वै तदक्षरं गार्गि' इत्यादिना—'एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' (बृ०-३-८-८-११) इत्यन्तेन प्रतिवचनेन अक्षरस्य अम्बरान्तधृतिरवगम्यते ।

---

## ॥ सा च प्रशासनात् ॥ ११ ॥

नन्वम्बरान्तधृतिः प्रधानस्यापि संभवतीत्यत आह—सा च धृतिः परमेश्वरस्यैव, [कर्म]नान्यस्य । कुतः ? प्रशासनात् । प्रशासनश्रवणादित्यर्थः । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ०-३-८-९) इत्यादि । ज्ञानपूर्वकं च प्रशासनं नाचेतनस्य । तस्मान्न प्रधानमक्षरशब्दवाच्यम् ।

---

## ॥ अन्यभावव्यावृत्तेश्च ॥१२॥

किञ्च—अम्बरान्तधृतिः परमेश्वरस्यैव, न प्रधानादेः । कुतः ? अन्यभावव्यावृत्तेः । अन्यस्य प्रधानादेर्भावो धर्मोऽन्यभावः, तद्व्यावृत्तेः, तद्विपरीतधर्मवत्त्वादित्यर्थः । 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ' (बृ०-३-८-११) इत्यादि तत्र तत्र । द्रष्टृत्वादिकं नाचेतनस्य संभवति । 'नान्यदतोऽस्ति द्रष्टृ' (बृ०-३-८-११) इत्यादिना द्रष्ट्रन्तरनिरासाच्च न जीवोऽप्यक्षरशब्दवाच्यः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अक्षराधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ ईक्षतिकर्माधिकरणम् ॥

## ॥ ईक्षतिकर्मव्यपदेशात्सः ॥१३॥

'एतद्वै सत्यकाम परञ्चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति प्रकृत्य श्रूयते—'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र०-५-२-५) इति। तत्र किमपरं ब्रह्म ध्यातव्यमुपदिश्यते, किं वा परमिति विशये, अपरमिति प्राप्ते, सिद्धान्तः—सः ध्यातव्यः परमपुरुषः परमात्मैव। कुतः? ईक्षतिकर्मव्यपदेशात। वाक्यशेषे ध्यातव्यस्य ईक्षतिकर्मत्वेन व्यपदेशात्—'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र०-५-५) इति। अतथाभूतमपि ध्यायतिकर्म भवति, मनोरथकल्पितस्यापि ध्यानकर्मत्वदर्शनात्। ईक्षतिकर्मत्वं तु तथाभूतस्यैव लोके दृष्टम्। अतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ईक्षतिकर्माधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ दहराधिकरणम् ॥

## ॥ दहर उत्तरेभ्यः ॥१४॥

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा०-८-१-१) इत्यत्र दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः। स किं भूताकाशः, उत विज्ञानात्मा, आहोस्वित्परमात्मेति विशये, प्रसिद्ध्या भूताकाश इति। अथ वा, ब्रह्मपुरशब्देन शरीरमभिधीयते, तच्च जीवस्यायतनमिति जीवो दहराकाश इति प्राप्ते, ब्रूमः—अत्र दहराकाशः परमेश्वर एव। कुतः? उत्तरेभ्यः वाक्यशेषगतहेतुभ्यः। 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' 'एष आत्मापहतपाप्मा' (छा०-८-१-३-५) इत्यादिवाक्यशेषप्रतिपादितस्य द्यावापृथिव्याधारत्वापहतपाप्मत्वादेः परमेश्वरादन्यत्रासंभवात्। शरीरायतनत्वं परस्याप्युपासनार्थमुपपन्नम्।

---

## ॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥१५॥

उत्तरेभ्य इत्यस्यैव प्रपञ्चोऽयम् । किञ्च—'इमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा०-८-३-२) इति दहरवाक्ये प्रकृतं परमेश्वरं ब्रह्मलोकशब्देन निर्दिश्य, जीवानां सुषुप्तिकाले प्रत्यहं तद्विषयगतिरुच्यमाना दहरस्य ब्रह्मतां गमयति । ब्रह्मलोकशब्दं गतिं चाभिप्रेत्य गतिशब्दाभ्यामिति द्विवचनम् । तथा हि दृष्टमित्यनेन 'सता सोम्य तदा संपन्नो भवति' (छा०-६-८-१) इत्यादिश्रुत्यन्तरदर्शनेन सुषुप्त्यवस्थायां ब्रह्मगमनं दृढीकृतम् । प्रत्यहं चतुर्मुखब्रह्मलोकगमनासंभवात् । ब्रह्मैव लोक इति समानाधिकरणसमास एव ग्राह्य इत्यस्मिन्नर्थे अहरहर्गमनमेव लिङ्गमिति लिङ्गमित्यनेनोक्तम् ।

---

## ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥

धृतेरपि दहरः परमेश्वरः । अस्मिन्नेव प्रकरणे 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानां असंभेदाय' (छा०-८-४-१) इति श्रूयते । विधृतिरिति क्तिजन्तत्वाद्विधारक उच्यते । लोकविधारकत्वञ्च परमेश्वरादन्यस्य न संभवति । अस्य च विधारणलक्षणस्य महिम्नोऽस्मिन्परमेश्वरे, अन्यत्रापि श्रुत्यन्तरे उपलब्धेः परमेश्वरलिङ्गत्वमेव । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ०-३-८-९) इति । तथा, 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' । (बृ०-४-४-२२) इति ।

---

## ॥ प्रसिद्धेश्च ॥१७॥

आकाशशब्दोऽपि परमेश्वर एव प्रसिद्धो, न जीवे । 'आकाशो वै नाम नामरूपयोर्निर्वहिता' (छा०-८-१४) 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छा०-१-९-१) इत्यादिदर्शनात् । भूताकाशस्य [चात्र]'यावान्वा अयमाकाशः' (छा०-८-१-३) इत्युपमानत्वेन ग्रहणान्नोपमेयत्वसंभवः ।

---

## ॥ इतरपरामर्शात्स इति चेन्नासंभवात् ॥१८॥

ननु 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा०-८-३-४) इति संप्रसादशब्देनेतरस्य जीवस्यापि अस्मिन्प्रकरणे परामर्शात् स जीव एव दहराकाशोऽस्त्विति चेन्नासंभवात्। जीवे अपहतपाप्मत्वादीनाम संभवादित्यर्थः।

---

## ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१९॥

ननु दहरविद्याया उपरि प्रजापतिविद्यायां 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' (छा०-८-७-४) इति जाग्रदवस्थं जीवमुपक्रम्य, 'एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा०-८-९-३) इति जीवमेव परामृश्य, 'य एष स्वप्ने महीयमानश्चरत्येष आत्मा' (छा०-८-१०-१) इति, 'तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा' (छा०-८-११-१) इति च अवस्थात्रयविशिष्टं जीवमेव प्रतिपाद्य, तस्मिन्नेवापहतपाप्मत्वादि दर्शयति 'एतदमृतमभयमेतद्ब्रह्म' (छा०-८-११-१) इति। तस्माज्जीवस्याप्यपहतपाप्मत्वादिसंभवात् दहराकाशोऽपि जीव एवास्त्विति चेत्। अनेन 'असंभवा' दिति पूर्वसूत्रोक्तहेत्वाक्षेपः। उच्यते---आविर्भूतस्वरूपस्तु। तुना आक्षेपपरिहारः। उत्तरवाक्यादपि न जीवाशङ्का युक्तेत्यर्थः। कुतः? यतः आविर्भूतस्वरूपो जीवोऽत्र विवक्षितः, न तु जीवत्वेन रूपेण, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा०-८-१२-३) इति उपसंहारदर्शनात्। यदपहतपाप्मत्वादिभिः प्रतिपाद्यं परं ब्रह्म, तदेव जीवस्य पारमार्थिकं रूपम्। न तु जीवत्वम्। अतः 'असंभवा' दिति पूर्वसूत्रस्थहेतुर्नासिद्धः।

---

## ॥ अन्यार्थश्च परामर्शः ॥२०॥

नन्वीश्वरत्वे दहरस्य, तत्र 'एष संप्रसादः' (छां०-८-३-४) इत्यादिना जीवपरामर्शो व्यर्थ इत्यत आह--अन्यार्थोऽयं जीवपरामर्शो, न जीवस्वरूपप्रतिपादनाय। 'परं ज्योतिरुपसंपद्य' इत्युपसंपत्तव्यपरमात्मपर एव जीवनिर्देशः, जीवोपसंपत्तव्यत्वेनापि परमात्मैव प्रतिपाद्य इत्यर्थः।

---

## ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥२१॥

ननु 'दहरोऽस्मिन्नन्तराकाशः' इत्यल्पत्वश्रवणात्, दहरस्य परमात्मत्वासंभवाज्जीवत्वमेव युक्तमिति चेत्तत्र समाधानमुक्तं 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च' (ब्र०-१-२-७) इत्यत्र। उपासनार्थमौपाधिकमल्पत्वमीश्वरेऽपि संभवतीत्यर्थः।

'उत्तराच्चे'दित्यादिसूत्रत्रयमधिकरणान्तरत्वेन अधिकरणमालायां व्याख्यातम्। तत्र, प्रजापतिविद्यायामक्षिपुरुषः जीवः, परमेश्वरो वेति संशये, अवस्थात्रयस्य परमेश्वरे असंभवाज्जीवत्वे प्राप्ते, 'य आत्मापहतपाप्मा विजरः' (छा०-८-७-१) इत्यादिपरमेश्वरलिङ्गात् अवस्थाप्रतिपादनस्यापि शाखाचन्द्रन्यायेन परमात्मप्रतिपादकतयोपपत्तेः परमात्मैव अक्षिपुरुष इति सिद्धान्तः। दर्शितदिशा सूत्रत्रयमप्यस्मिन्नधिकरणे योजनीयम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां दहराधिकरणम् ॥

---

॥ श्रीः ॥

(६) अथ अनुकृत्यधिकरणम् ॥

## ॥ अनुकृतेस्तस्य च ॥२२॥

मुण्डकोपनिषदि श्रूयते—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥' (मु०-२-२-१०) इति। तत्र जगद्भासकतया प्रतीयमानं तेजोविशेषो वा, चैतन्यं वेति संशये, तेजस एव प्रकाशकत्वेन प्रसिद्धेः, प्रबलेन तेजसा दुर्बलस्य अभिभवदर्शनाच्च तेजोविशेष एवेति प्राप्ते, चैतन्यमिति सिद्धान्तः। कुतः? अनुकृतेः। अनुकृतिरनुकरणं, यत् 'तमेव भान्तमनुभाति सर्वम्' इति अनुभानं, तदुच्यते। न हि तेजस्तेजोऽन्तरे भासमाने भासते। स्वप्रकाशतया भासमानं चैतन्यमनु सर्वं भासते। 'तस्य च' इत्युदाहरणवाक्ये चतुर्थचरणोऽभिप्रेतः 'तस्य भासा सर्वमिदं विभाति' इति। तेजोऽन्तरस्य न सर्वभासकत्वं प्रसिद्धम्। चैतन्यस्य तु सर्वजगत्प्रकाशकत्वमुपपन्नम्। 'न तत्र' इति तच्छब्देन 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥' (मु०-२-२-९) इति प्रकृतचैतन्यग्रहणमेव युक्तमिति।

---

## ॥ अपि च स्मर्यते ॥२३॥

अपि चेदृग्रूपत्वं परमात्मनः स्मर्यते गीतासु—

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' (गी०-१५-६) इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अनुकृत्यधिकरणम् ॥

॥ श्रीः ॥

(७) ॥ अथ प्रमिताधिकरणम् ॥

## ॥ शब्दादेव प्रमितः ॥२४॥

कठवल्लीषु श्रूयते—

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' (का०-२-४-१२) इति । अत्र पुरुषः किं जीव, ईश्वरो वेति सन्देहे, अङ्गुष्ठपरिमाणस्य ईश्वरे असम्भवात् जीव इति प्राप्ते, ईश्वर इति सिद्धान्तः । कुतः ? शब्दादेव, ईशानशब्दादेव ईश्वरः प्रमित इत्यर्थः । न हि जीवस्येश्वरत्वमस्ति । 'भूतभव्यस्ये'ति सर्वेशितृत्वं अत्यन्तानुपपन्नम् ।

नन्वीश्वरे अङ्गुष्ठमात्रत्वं न संभवतीत्युक्तं, तत्राह—

## ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥

तुशब्दाच्चोद्यव्यावृत्तिः । हृद्यपेक्षया, सर्वगतस्यापीश्वरस्य अङ्गुष्ठपरिमाणहृदयावच्छिन्नतया अङ्गुष्ठमात्रत्वं संभवतीत्यर्थः । ननु हस्तिमशकादिशरीरेषु हृदयस्य अनियतपरिमाणत्वात्कथमङ्गुष्ठमात्रत्वनियमोऽत आह—मनुष्याधिकारत्वात् । शास्त्रस्येति शेषः । षाष्ठतिर्यगधिकरणे (जै०. सू०. ६-१-२) शास्त्रं मनुष्याधिकारं इत्युक्तं, तत्र मनुष्यहृदयमङ्गुष्ठपरिमाणमिति, न कश्चिद्विरोध इति भावः ।

इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रमिताधिकरणम् ।

॥ श्रीः ॥

(८) ॥ अथ देवताधिकरणम् ॥

## ॥ तदुपर्यपि बादरायणस्सम्भवात् ॥२६॥

मनुष्याधिकारत्वादित्येतत्प्रसङ्गागतमिदं अधिकरणम् । बृहदारण्यके तृतीयाध्याये श्रूयते—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणाम्' (बृ०-उ०-१-४-१०) इति । देवानां मध्ये यो यो देवः ब्रह्म वेद, स एव ब्रह्माभवदित्यर्थः । तत्र देवादीनां ब्रह्मविद्यायामधिकारोऽस्ति, न वेति सन्देहे, नास्ति, मनुष्याधिकारत्वाच्छास्त्रस्येति प्राप्ते ब्रूमः— तेषां मनुष्याणामुपरि देवादीनामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायणो मन्यते स्म । कुतः ? सम्भवात् । तेषामप्यर्थित्वाद्यधिकारकारणसम्भवादित्यर्थः ।

---

## ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२७॥

ननु देवादीनामपि विग्रहवत्त्वेन विद्यायामधिकारे, कर्मण्यपि शरीरितया ऋत्विगादिवत्सन्निधानेनैव उपकारकत्वं स्यात्, तच्च न संभवति, एकस्य शरीरस्य अनेकत्र युगपत्सन्निधानासंभवात् । तस्माद्विग्रहवत्त्वे कर्मणि देवतात्वविरोध इति चेन्न । अनेकप्रतिपत्तेर्दर्शनात् । तथा हि श्रुतिः—'कति देवाः' इत्युपक्रम्य, 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इत्युक्त्वा, 'कतमे ते' इति प्रश्ने, 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' (बृ०-३-९-१-२) इति एकैकस्यानेकरूपतां दर्शयति । अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या—विग्रहवतोऽपि कर्माङ्गभावचोदनास्वनेकविधत्वं दृश्यते, अनेकैर्भोजयद्भिः युगपदेको न भोज्यते, बहुभिर्नमस्कुर्वाणैस्तु युगपदेको नमस्क्रियते । एवं विग्रहवतीं देवतामेकामुद्दिश्य युगपत्सर्वे हविस्त्यक्ष्यन्तीति न कश्चिद्विरोधः ।

---

## ॥ शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम् ॥२८॥

ननु कर्मणि विरोधाभावेऽपि, शब्दे, चोदनायां विरोधः । देवताविग्रहस्याप्यसदादिन्यायेन अनित्यतया, नित्यवेदस्य अनित्यार्थसंबन्धे नित्यानित्यसंयोगविरोधादिति चेत् । नायमपि विरोधः । कुतः ? अतः प्रभवात्, शब्दादेव देवादीनामुत्पत्तेरित्यर्थः । कथमवगम्यते ? प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षानुमानशब्दाभ्यां यथाक्रमं श्रुतिस्मृती दर्शयति ।

तथा हि श्रुतिः—'एत इति वै प्रजापतिर्देवानसृजत। असृग्रमिति मनुष्यानिन्दव इति पितॄन्' इत्यादि। स्मृतिरपि—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः ॥' इति ।

तथा —

नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥' इति ।

नन्वेवं वेदस्य नित्यत्वं देवादीनामनित्यत्वञ्च उदाहृतवाक्यैः प्रतीयत इति, विरोधोऽपरिहृत इति चेत् । न, व्यक्तीनामनित्यत्वेऽपि आकृतिनित्यतया, तस्या एव शब्दार्थत्वेन गवादिवत्संबन्धस्यौत्पत्तिकत्वसिद्धेः ।

---

## ॥ अत एव च नित्यत्वम् ॥२९॥

कर्तृस्मरणादिना सिद्धमेव वेदनित्यत्वं अनित्यसंयोगेनानुपपन्नमाशङ्क्य, वेदानां देवाकृतिविशेषावच्छिन्नदेवादिसृष्टिहेतुत्वप्रतिपादनेनाकृतेः शब्दार्थत्वात् तस्याश्च नित्यत्वान्नानित्यसंयोगनिबन्धनमनित्यत्वमित्युपसंहरति । अत एव, आकृतिशब्दार्थत्वादेव वेदस्य नित्यत्वमविरुद्धमित्यर्थः ।

---

## ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥३०॥

ननु आकृतेः पदार्थत्वेऽपि, प्रलये सर्वाकृतिव्यक्तिनाशे पुनस्तदाकृतिकव्यक्त्युत्पत्तौ प्रमाणाभावान्नित्यानित्यसंयोगविरोधः तदवस्थ इति चेदुच्यते—सृष्टिप्रलयावृत्तावपि शब्दे विरोधो नास्ति । कुतः ? समाननामरूपत्वात् । संसारस्यानादित्वात् प्रतिसृष्टि तदाकृतिकमेव जन्यते न विलक्षणं, प्रलये सर्वं वस्तु संस्कारावशेषमेव नश्यति, न तु निरन्वयध्वंसः, ज्ञानस्येवार्थस्यापि सजातीयकार्योत्पत्तिदर्शनेन संस्काराङ्गीकारात् । संस्काराच्च समाननामरूपैव सृष्टिर्न विलक्षणा । समाननामरूपत्वञ्च श्रुतौ दर्शनात् स्मृतेश्चाभ्युपगन्तव्यम् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( ऋ०. स०-१०-१९०-३ ) इत्यादिका श्रुतिः । स्मृतिरपि—

'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥

इत्यादिका ।

---

## ॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥३१॥

शङ्कासूत्रम्—देवानां ब्रह्मविद्यायामनधिकारं जैमिनिर्मन्यते । कुतः ? मधुविद्यादिष्वधिकारासंभवात् । 'असौ वा आदित्यो देवमधु' (छा०-३-१-१) इत्यादिमधुविद्यादिष्वादित्यादीनामुपास्यत्वात् न तत्रादित्यादीनामधिकारः, आदित्याद्यन्तराभावात्, एकस्यैवोपास्योपासकत्वायोगात् । तथा च ब्रह्मविद्यायामधिकाराङ्गीकारे विद्यात्वाविशेषात्तत्रापि स्यात् । तत्र चाधिकारासंभवे सम्भवात् ब्रह्मविद्यायामपि न संभवतीति शङ्काभिप्रायः ।

---

## ॥ ज्योतिषि भावाच्च ॥३२॥

किञ्च—परिदृश्यमानज्योतिर्मण्डल एव सूर्यचन्द्रादिदेवताशब्दानां लोके व्यवहारसद्भावात्, मण्डलस्य चाचेतनत्वेन विग्रहाभावात्, अग्निवाय्वादीनामपि तत्तुल्यत्वात्, मन्त्रार्थवादादीनां चान्यपरत्वेन स्वार्थप्रामाण्याभावात् न देवानां विग्रहवत्त्वं, तस्मादपि नाधिकार इति ।

---

## ॥ भावं तु बादरायणोऽस्ति हि ॥३३॥

तुशब्दश्चोद्यनिरासार्थः, बादरायण आचार्यो ब्रह्मविद्यायां देवानामधिकारस्य भावं मन्यते । यद्यपि देवतामिश्रोपासनास्वनधिकारः, तथापि निर्गुणब्रह्मविद्यायां देवानामप्यधिकारस्य संभवोऽस्ति हि । न ह्येकत्रानधिकारे सर्वत्रानधिकारः, राजसूयाद्यनधिकृतानां ब्राह्मणादीनां ज्योतिष्टोमाद्यनधिकारप्रसङ्गात् ।

'ज्योतिषि भावाच्च' इत्यस्य उत्तरमस्तिहि इति । यद्यपि आदित्यादिदेवताशब्दा ज्योतिरादौ प्रयुज्यन्ते, तथापि तदभिमानिदेवतापरा एव तं तं देवतात्मानं प्रतिपादयन्ति । अस्ति ह्यैश्वर्ययोगाद्देवानां ज्योतीरूपेणावस्थातुं, तं तं विग्रहं गृहीत्वा च व्यवहर्तुं सामर्थ्यम् ।

तथाहि श्रूयते सुब्रह्मण्यार्थवादे 'मेधातिथेर्मेष' इति। 'मेधातिथिं हि काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंश० ब्रा०-१-१) इति। स्मर्यते च—

'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इति।

मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते 'मृदब्रवीदापोऽब्रुवन्' इत्यादिदर्शनात्।

ननु मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात् तन्मूलेतिहासपुराणानामपि तथात्वात् कथं विग्रहसिद्धिरिति चेत्; अत्रापि—अस्ति हीत्येवोत्तरम्। तेषामप्यबाधितेऽर्थे प्रामाण्यमस्तीत्यर्थः। अर्थवादेष्वपि शब्दशक्तिबलाज्जातस्य अर्थप्रत्ययस्य बाधाभावे प्रामाण्यमप्रतिहतमेव। तन्मात्रेण प्रयोजनानवाप्तेर्विधेयस्तावकतया विध्येकवाक्यत्वं कल्प्यते। न चैतावता अवान्तरवाक्यार्थबाधस्संभवति। तस्याभावे स्तुतिरपि न स्यात्।

अत एव चोदनाद्यर्थवादेष्वपि गुणवादेनाबाधितमर्थमङ्गीकृत्यैव स्तुतिपरत्वमङ्गीक्रियते। वस्तुतस्तु यथा स्वर्गार्थवादानां चोदनापेक्षितफलप्रतिपादकतया प्रामाण्यम्, एवं देवताविग्रहप्रतिपादकागमानामपि। तथाहि, 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इत्यादिपर्यालोचनया रात्रिसत्रन्यायेन देवताप्रीतिरेव कर्मणां व्यापारत्वेन कल्प्यते, न त्वात्मसमवेतं अपूर्वाख्यं मानान्तरागोचरं कल्पनार्हम्।

न च त्यक्तं हविर्देवता न भुङ्क्ते प्रत्यक्षविरोधात्, अभुञ्जाना च कथं तृप्ता? अतृप्ता च कथं प्रसीदेदिति वाच्यम्। अभुञ्जानाया अपि तदुद्देशेन त्यागमात्रेण प्रीतिसंभवात्। यथा कस्मिंश्चित्पूज्यतमे असन्निहितेऽपि, सन्निहितानां पूजाप्रसङ्गे, तदुद्देशेन किञ्चित्ताम्बूलादिकं पूर्वं विभज्य अन्यस्मै दत्वा, सन्निहितपूजायां कृतायां तच्छ्रुत्वा सोऽपि किञ्चिदप्यलभमानोऽपि प्रथमं स्वोद्देशेन त्यागमात्रेण आत्मानं संपूजितं मन्वानः प्रसीदति, तथा देवानामपि तदुद्देशेन त्यक्त्वा आहवनीये प्रक्षेपेऽपि प्रीतिरविरुद्धा। एवं नमस्कारादिना अतृप्तिकारणेनापि प्रीतिरुदाहर्तव्या।

न च ग्रावादीनां अचेतनानां अदेवतात्वात् प्रीत्यननुषङ्गः, तदधिष्ठातृदेवतासंभवात्। एतेनाश्वचरितादीनि व्याख्यातानि। वस्तुतस्सर्वान्तर्यामीश्वर एव सर्वत्र फलद इति तस्यैव प्रीतिः कल्प्यते।

अत एव गीतासु—

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥

स तया श्रद्धया युक्तः तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ (गी०-७-२१-२२) इति ।

तस्माच्चेतनावत्त्वात् (दिग्द्रादि)विग्रहवत्त्वाच्च देवानां ब्रह्मविद्याधिकारोऽस्तीति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां देवताधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ अपशूद्राधिकरणम् ॥

## ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३४॥

इह शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति, न वेति चिन्त्यते । यथा मनुष्याधिकारनियममपहाय देवानामप्यधिकारः, तद्वत् त्रैवर्णिकाधिकारनियममपहाय शूद्रस्याप्यधिकार प्राप्तं, आहवनीयाभावेन अग्निसाध्यकर्मानधिकारेऽपि, देवादिवदध्ययनाभावेऽपि विद्यायामधिकारसंभवात् । अत एव छान्दोग्ये चतुर्थाध्याये संवर्गविद्यायां जानश्रुतेः शिष्यस्य रैक्वेण गुरुणा 'अह हारेत्वा शूद्र' (छा०-४-२-३) इति शूद्रशब्देन संबोधनमुपपद्यते । तत्र शूद्रशब्दस्य मुख्यार्थे संभवति क्षत्रियविषयतया गौणार्थत्वासंभवात् । इति प्राप्ते, ब्रूमः—

न शूद्रस्य ब्रह्मविद्याधिकारः, उपनयनाभावेन अध्ययनाभावात् । देवानां तु सुकृतविशेषात्स्वयंप्रतिभातवेदत्वादधिकाराविरोधः । न्यायाभावाच्च न लिङ्गं साधकम् । लिङ्गस्याधिकृतविषयत्वव्याख्यानार्थमिदं सूत्रम् । अस्य, जानश्रुतेः क्षत्रियस्य । तदनादरश्रवणात्, तस्य हंसस्यानादरश्रवणात् । शुक् उत्पन्ना शूद्रशब्देन सूच्यते, रैक्वेण स्वस्य सार्वज्ञख्यापनार्थम् । तदाद्रवणात्, तया शुचा रैक्वं प्रति जानश्रुतिर्दुद्रावेति शूद्रो जानश्रुतिः । मुख्यार्थासंभवाद्गौणो गृह्यते ।

अत्र जानश्रुतौ पौत्रायणे राज्ञि प्रासादस्थे, कदाचिद्धंसानां तदुपरि मालारूपेण गच्छतां एको हंस एकं प्रत्युवाच—अयं जानश्रुतिर्महाभाग इति। तमितरः प्रत्युवाच—कोऽयं वराकः, इतोऽप्युत्कृष्टो रैक्व इति। तच्छ्रुत्वा जानश्रुतेः शोक उत्पन्नः, तेनैव शोकेन हाररथसुवर्णाद्युपायनं गृहीत्वा रैक्वनिकटं गतवान्। तं रैक्व आह—अह जानश्रुते शूद्र हारेत्वा हारयुक्तो गमनशीलो रथः गवादिकं चानीतमुपायनं तवैवास्तु, नैतेनाल्पोपायनेन अहमुपदेक्ष्यामीति। इत्याख्यायिकार्थः संक्षेपतो ज्ञेयः।

---

## ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५॥

ननु जानश्रुतिर्मुख्य एव शूद्रोऽस्तु। किमुक्तकुसृत्या योगाश्रयणेनेति शङ्कां निरस्यते। जानश्रुतिर्न मुख्यशूद्रः, क्षत्रियत्वगतेः, क्षत्रियत्वनिश्चयादित्यर्थः। कुतः उत्तरत्र, संवर्गविद्यायामेव। चैत्ररथेन, प्रसिद्धक्षत्रियेणाभिप्रतारिणा समभिव्याहारात्मकलिङ्गात्। समानानां च प्रायेण समभिव्याहारो भवति।

---

## ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥३६॥

इतोऽपि शूद्रस्य नाधिकारः। कुतः? विद्याप्रदेशेषु उपनयनादिसंस्कारपरामर्शात् 'तं होपनिन्ये' (श०. ब्रा०-११-५-३-१३) 'अधीहि भगवः' (छा०-७-१-१) इत्यादिषु। शूद्रेषु संस्काराभावाभिलापात् न शूद्रस्याप्युपनयनप्रसङ्गः। 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' (मनु०-१०-१२६) इत्यादिनिषेधात्।

---

## ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥३७॥

इतश्च न शूद्राधिकारः। शूद्रत्वाभावनिर्धारणे सत्येवोपदेशे प्रवृत्तिदर्शनात्। सत्यकामो जाबालः प्रमीतपितृकः गौतमसमीपं गत्वा ब्रह्मचर्यमुपेयामित्युवाच। तं गौतमः पप्रच्छ—किंगोत्रोऽसीति। जाबाल उवाच—मातापि न जानात्यहमपि न जानामीति। तच्छ्रुत्वा गौतमो नाब्राह्मणस्य एतादृशं यथार्थवादित्वं संभवतीति शूद्रत्वाभावं निश्चित्य शुश्रूषामङ्गीकृतवानित्यत्र आख्यायिकानुसंधेया।

---

## ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥३८॥

इतश्च न शूद्राधिकारः । कुतः ? स्मृतेः, स्मृतितः श्रवणाध्ययनयोः तत्प्रयोजनयोरर्थज्ञानानुष्ठानरूपयोः अर्थयोश्च प्रतिषेधात् । एवं हि स्मरन्ति---'अथास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति श्रवणस्य निषेधः । 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति अध्ययनस्य, 'न शूद्राय मतिं दद्यात्' (मनु०-४-८०) इति तदर्थज्ञानस्य, 'द्विजातीनामध्ययनमिज्या दानम्' इत्यनुष्ठानस्येति । विदुरादीनां पूर्वजन्मकृतश्रवणादिना गर्भस्थवामदेववत् ज्ञानोत्पत्तिरिति वेदितव्यम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अपशूद्राधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ कम्पनाधिकरणम् ॥

## ॥ कम्पनात् ॥३९॥

प्रासङ्गिक्यधिकारचिन्ता वृत्ता । प्रकृतं वाक्यार्थविचारमनुसन्धत्ते । कठवल्लीषु षष्ठ्यां वल्ल्यां पठ्यते---'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥' (का०-२-६-२) इति । अयमर्थः--निःसृतं उत्पन्नं यदिदं जगत्सर्वं, प्राणे निमित्तभूते सत्येजति, कम्पते । एतदुद्यतवज्रवद्भयहेतुं प्राणशब्दवाच्यं ये विदुर्मरणरहितास्ते भवन्तीति । अत्र प्राणः, अशनिर्वा, परमात्मा वेति संशये, प्राणशब्दात्प्राणो, वज्रशब्दाद्वा अशनिः, इति प्राप्ते, ब्रूमः 'शब्दादेव प्रमित' इति मण्डूकप्लुत्येहानुवर्तते । अत्र परमेश्वर एव शब्दात्प्रमितः । कुतः ? कम्पनात् । 'एजृ कम्पने' इति धातोः कम्पनमर्थः, तस्मात् ; सर्वशब्दवाच्यवायोरप्यन्यस्मात्कम्पनशब्दवाच्यप्रवृत्त्युपलब्धेः, ब्रह्मण्यपि प्राणशब्दाविरोधात्, 'भीषास्माद्वातः पवते' (तै०-८-१) इत्यादिपर्यालोचनया भयहेतुत्वेन वज्रशब्दप्रतिपाद्यत्वसंभवात्, 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' (का०-२-६-१) इत्युपक्रमात्, 'अन्यत्र धर्मात्' (का०-१-२-१४) इत्युपरिष्टाच्छ्रवणात्, 'अत्र ह्यमृताः' इति मोक्षश्रवणाच्च परमात्मैवेति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कम्पनाधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ ज्योतिरधिकरणम् ॥

## ॥ ज्योतिर्दर्शनात् ॥४०॥

छान्दोग्ये अष्टमाध्याये प्रजापतिविद्यायां श्रूयते—'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा०-८-१२-३) इति। संप्रसीदत्यस्मिन्निति संप्रसादः सुषुप्तिः, तद्वान् जीवस्तेन उपलक्ष्यते। अत्र ज्योतिश्शब्देन प्रसिद्धं सूर्यादिज्योतिरुच्यते, परमात्मा वेति संशये, प्रसिद्धेः प्रसिद्धग्रहणमिति प्राप्ते, ब्रूमः—ज्योतिरत्र परमेव ब्रह्म। कुतः? दर्शनात्। 'य आत्मापहतपाप्मा' (छा०-८-७-१) इत्युपक्रमालोचनेन परमात्मन एव प्रतिपाद्यत्वेन अनुवृत्तिदर्शनात्। अत्रापि 'परं ज्योतिः' 'उत्तमः पुरुषः' (छा०-८-१२-३) इति च विशेषणात्। न च 'समुत्थायोपसंपद्य' इति विरोधः, शोधितत्वंपदार्थस्य परमात्मैक्यबोधने वाक्यस्य तात्पर्यात् समुत्थानादेरविवक्षितत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ज्योतिरधिकरणम् ॥

---

॥ श्रीः ॥

(१२) ॥ अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥

## ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥४१॥

छान्दोग्यस्याष्टमाध्याये श्रूयते—'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा०-८-१४) इति। अत्र आकाशो भूताकाशः, परमात्मा वेति संदेहे, प्रसिद्धेः भूताकाश इति प्राप्ते, अभिधीयते—आकाशः परमात्मैव। कुतः? अर्थान्तरत्वादिव्यपदेशात् 'ते यदन्तरा' इति। यस्यान्तरा ते नामरूपे वर्तेते तद्ब्रह्मेति नामरूपभिन्नत्वेनाकाशस्य व्यपदेशाद्भूताकाशस्य तद्भिन्नत्वासंभवात्। आदिशब्देन 'तद्ब्रह्म तदमृतम्' (छा०-८-१४) इत्यादिसंग्रहात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥

---

॥ श्रीः ॥

(१३) ॥ अथ सुषुप्त्युत्क्रान्त्यधिकरणम् ॥

## ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥

व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठाध्याये श्रूयते—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानस्सन्नुभौ लोकावनुसञ्चरति' (बृ०-४-३-७) इति। विज्ञानमयः लिङ्गशरीरावच्छिन्नो जीवः। किमिदं वाक्यजातं संसार्यनुवादमात्रं, किं वा तदनुवादेन परमात्मैक्यप्रतिपादनपरमिति संशये, तत्सन्दर्भे परमात्मप्रतिपादकशब्दाभावात् जीवमात्रप्रतिपादनपरमिति प्राप्ते, ब्रूमः:—

जीवस्य तात्विकस्वरूपप्रतिपादनपरमिदं न संसार्यनुवादमात्रम्। न च परमात्मप्रतिपादकाभावः, सुषुप्त्युत्क्रान्त्योः भेदेन व्यपदेशात्। सुषुप्तौ तावत्, 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ०-४-३-२१) इति शारीराद्भेदेन प्राज्ञशब्देन ईश्वरं निर्दिशति। उत्क्रान्तावपि, 'शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति' (बृ०-४-३-३५) इति। अत एवोपसंहरति 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' (बृ०-४-४-२२) इति। यो विज्ञानमय उक्तः स परमात्मैवेत्यर्थः।

---

## ॥ पत्यादिशब्देभ्यः ॥४३॥

इतश्चासंसारिरूपप्रतिपादनपरमेवैतत्। यतोऽस्मिन्सन्दर्भे असंसारित्वप्रतिपादकाः पत्यादयः शब्दा दृश्यन्ते—'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' (बृ०-४-४-२२) इत्येवंजातीयकाः। तस्माद्ब्रह्मात्मैक्यपरमेवेदमिति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सुषुप्त्युत्क्रान्त्यधिकरणम् ॥

॥ इति श्रीमहोपाध्यायश्रीमद्राघवसोमयाजिकुलावतंसश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रथमाध्यायस्य तृतीयः पादः ॥

॥ द्युभ्वाद्यायतनं त्रयोदश त्रिचत्वारिंशत् ॥

अधिकरणसंख्या—१३

सूत्रसंख्या—४३

---

॥ श्रीः ॥

॥ अथ प्रथमाध्याये चतुर्थः पादः ॥

(१) ॥ अथ आनुमानिकाधिकरणम् ॥

## ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥१॥

ब्रह्मजिज्ञासां प्रतिज्ञाय, ब्रह्मणो लक्षणमुक्त्वा, तस्य प्रधाने अतिव्याप्तिमाशङ्क्याशब्दत्वेन प्रधानं निराकृतं 'ईक्षतेर्नाशब्दम्' (ब्र०. सू०-१-१-५) इति । गतिसामान्यं च ब्रह्मकारणवादं प्रति वेदान्तानां प्रपञ्चितं पादत्रयेण । 'इदानीं तु प्रधानस्याशब्दत्वं न संभवति, क्वचिच्छाखासु तत्प्रतिपादकशब्दानामपि दर्शनादित्याशङ्क्य, तेषामन्यपरत्वप्रतिपादनार्थमयं पाद आरभ्यते ।

कठवल्लीषु तृतीयवल्ल्यां श्रूयते—'महतः परमव्यक्तं अव्यक्तात्पुरुषः परः' (का०-१-३-११) इति । तत्राव्यक्तशब्देन प्रधानमुच्यते, शरीरं वेति संदेहे, सांख्यशास्त्रे महदव्यक्तपुरुषशब्दानां तत्वत्रये प्रसिद्धत्वात्तेषामेवात्र प्रत्यभिज्ञानादव्यक्तं प्रधानमेवेति प्राप्तम् । आनुमानिकमिति अनुमानगम्यत्वात् प्रधानम् । तदप्येकेषां शाखिनां प्रत्यक्षमव्यक्तशब्देन पठ्यत इति अशब्दत्वमसिद्धमिति चेदिति सूत्रावयवार्थः । तन्न । किं कारणं ? शरीरस्य पूर्ववाक्ये रथरूपकेण विन्यस्तस्य प्रतिपादितस्य अत्र वाक्ये अव्यक्तशब्देन गृहीतेर्ग्रहणात् ।

ननु अव्यक्तशब्दः कथं शरीरपर इत्यत आह—दर्शयति चेति । पूर्वोत्तरवाक्यसंदर्भः पर्यालोच्यमानः औचित्येन अव्यक्तशब्देन शरीरग्रहणं दर्शयतीत्यर्थः ।

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥' (का०-१-३-३-४)

इत्युपक्रम्य, इन्द्रियादिभिरसंयतैस्संसारमधिगच्छति, संयतैस्तु अध्वनः पारं विष्णोः परमं पदं आप्नोतीत्युक्त्वा, किं तद्विष्णोः परमं पदमित्याकाङ्क्षायाम्—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥

महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥' ( का०-१-३-१०-११ )

इति प्रकृतेन्द्रियादिभ्यः परां गतिं दर्शयति । अत्र पूर्वं प्रकृतानामिन्द्रियार्थमनोबुद्धीनामस्मिन्वाक्ये स्वशब्दैरेवोपादानम् । पूर्वत्रात्मशब्देनोपदिष्टं उत्तरत्र पुरुषशब्देन संगृहीतम् । उत्तरवाक्ये महच्छब्देनोक्ता बुद्धिः पूर्वं बुद्धिशब्देनैव संगृहीता । बुद्धिर्द्विविधा । हिरण्यगर्भबुद्धिः अस्मदादिबुद्धिश्च । हिरण्यगर्भबुद्धेः अस्मदादिबुद्धिजनकत्वेन महत्त्वम् । पूर्वत्र द्वयमेकीकृत्य निर्दिष्टमिह पृथक्कृत्येति विवेकः । पूर्वत्र शरीरपदमुत्तरत्र अव्यक्तपदं, तयोः पारिशेष्यात् एकार्थत्वमित्यव्यक्तं शरीरम् ।

---

ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथं अव्यक्तशब्दवाच्यत्वमत आह---

॥ सूक्ष्मन्तु तदर्हत्वात् ॥२॥

तुशब्देन चोद्यनिरासः । स्थूलशरीरारम्भकभूतसूक्ष्ममव्यक्तशब्देन, दर्शयतीत्यनुषङ्गः । कुतः ? तदर्हत्वात् , अव्यक्तशब्दार्हत्वादित्यर्थः । 'गोभिः श्रीणीत मत्सरम्' (ऋ० सं०-९-४६-४ ) इतिवत्प्रकृतिशब्देन विकृत्यभिधानं युक्तम् ।

---

नन्वेवं जगत्सूक्ष्मावस्थाया एव सांख्यैः प्रधानत्वेनाङ्गीकारात्तदेवापन्नमत आह---

॥ तदधीनत्वादर्थवत् ॥३॥

नैष दोषः सांख्यमतापत्तिरिति । कुतः ? तदधीनत्वात् , ईश्वराधीनत्वात् । स्वतन्त्रमव्यक्तं जगत्कारणमिति तन्मतं, सिद्धान्ते त्वीश्वराधिष्ठितं मायाविद्यादिशब्दवाच्यं कारणमिति भेदात् ।

नन्वीश्वरादेव जगदुत्पत्तौ अव्यक्तवैयर्थ्यमित्याशङ्क्योक्तं 'अर्थवत्' इति । प्रयोजनवदित्यर्थः । 'मायान्तु प्रकृतिं विद्यात्' ( श्वे०-४-१० ) इत्यादिश्रुतिप्रसिद्धमीश्वरस्य सहकारिरूपमव्यक्तमावश्यकमित्यर्थः ।

न चैवमव्यक्तशब्दस्य अविद्यापरत्वे, तद्विकारतया इन्द्रियादीनामपि तच्छब्देनोपादानसंभवात्कथं शरीरस्यैव ग्रहणमिति वाच्यम् । तेषां स्वशब्दैरेवोपादानात् परिशेषतस्तत्सिद्धेः ।

सूत्रद्वयस्यापरा व्याख्या—शरीरं द्विविधं स्थूलं सूक्ष्मञ्च । पूर्ववाक्ये द्वयमपि शरीरग्रहणेन गृहीतं, उत्तरस्मिन् सूक्ष्ममेव अव्यक्तशब्देनोक्तं, तदर्हत्वात् । तच्च अवश्यमभ्युपेयं तदधीनत्वाद्बन्धमोक्षव्यवहारस्य, इति ।

---

## ॥ ज्ञेयत्वावचनाच्च ॥४॥

किञ्च—सांख्यैः प्रकृतिपुरुषविवेकान्मोक्षमङ्गीकृत्य, प्रकृतेरपि तदर्थं ज्ञेयत्वमित्युक्तम् । न च तादृशविवेकोपयुक्तं तस्य ज्ञेयत्वमत्रोक्तं, अव्यक्तशब्दमात्रश्रवणात् । तस्मादपि नाव्यक्तं प्रधानम् ।

---

## ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥५॥

ननु ज्ञेयत्वावचनादित्यसङ्गतं, अव्यक्तशब्दवाच्यस्यैव उत्तरत्र ज्ञेयत्ववचनात्—'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥' (का०-१-३-१५) इति । अत्र शब्दादिरहितं प्रधानमेव प्रतिपादयति शब्दसन्दर्भ इति चेन्न । प्राज्ञः परमात्मात्र प्रतिपाद्यः । हिः प्रसिद्धौ । कस्मात्? प्रकरणात् । 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते।' 'यच्छेद्वाङ्मनसी प्राज्ञः' (का०-१-३-११-१२-१३) इत्यादिनिर्देशात् ।

---

## ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥६॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा । यतस्त्रयाणामग्निजीवपरमात्मनामेव, एवं, वरदानसामर्थ्यात् वक्तव्यत्वेनोपन्यासः, तद्विषय एव च प्रश्नो दृश्यते, सर्वस्मिन् कठवल्लीग्रन्थे, नान्यस्य । तत्र 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय

मह्यम्' (का०-१-१-१३) इत्यग्निविषयः प्रश्नः । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' ॥ (का०-१-१-२०) इति जीवविषयः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥' (का०-१-२-१४) इति परमात्मविषयः । प्रतिवचनमपि 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा' (का०-१-१-१५) इत्यग्निविषयम् ।

'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्'॥— (का०-२-५-६-७)

इति जीवविषयम् । 'न जायते म्रियते वा विपश्चित्'—(का०-१-२-१८) इत्यादि परमात्मविषयम् । न चास्यामुपनिषदि प्रधानस्य प्रश्नोत्तरे स्त इति, न प्रधानमव्यक्तम् ।

---

## ॥ महद्वच्च ॥७॥

किञ्च—यथा, महच्छब्दस्य वेदे सर्वत्र 'बुद्धेरात्मा महान्' (का०-१-३-१०) 'महान्तं विभुमात्मानम्' (का०-१-२-२२) 'वेदाहमेतं पुरुषं महान्तम्' (श्वे०-३-८) इत्यादावात्मादिशब्दसामानाधिकरण्यात्, सांख्यसिद्धद्वितीयतत्त्ववाचित्वं नाङ्गीक्रियते, एवमव्यक्तशब्दस्यापि वैदिकस्य न प्रधानवाचित्वमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आनुमानिकाधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ चमसाधिकरणम् ॥

## ॥ चमसवदविशेषात् ॥८॥

श्वेताश्वतरोपनिषदि श्रूयते—'अजामेकां लोहितशुक्लकृष्णाम्' (श्वे०-४-५) इति । तत्र अजाशब्देन सांख्यसिद्धा प्रकृतिरुच्यते, उत छान्दोग्यसिद्धा तेजोऽबन्ना-

त्मिका प्रकृतिरिति सन्देहे, सांख्यसिद्धात्र विवक्षिता, न जायत इत्यजा प्रकृतिः सत्वरजस्तमोगुणात्मकत्वात् लोहितशुक्लकृष्णा। तथाच प्रधानमेवात्र मन्त्रे विवक्षितमिति, नाशब्दत्वमित्येवं प्राप्ते, ब्रूमः— न प्रधानस्यासाधारण्येनात्र प्रतिपत्तिरस्ति । कुतः ? अविशेषात् । न जायत इत्यजेत्यस्य अन्यत्रापि योजयितुं शक्यत्वात् । शुक्लत्वादिकं रूपत्वैकार्थसमवेतं न सत्वादौ मुख्यम् । यथाकथंचिद्व्याख्यानमन्यत्रापि शक्यमित्यविशेषात् । चमसवत् । यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ०-२-२-३) इत्यस्मिन् मन्त्रे अयं चमस इति ज्ञातुं न शक्यते । यथाकथञ्चिदर्वाग्बिलत्वादेरन्यत्रापि संभवात् । एवमजामन्त्रेऽपि न प्रधाननिर्णय इत्यशब्दत्वमित्यर्थः ।

---

ननु तत्र 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ०-२-२-३) इति वाक्यशेषाच्चमसनिर्णयः । इह तु कथमत आह—

## ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥

तुरवधारणे । ज्योतिस्तेज उपक्रमे आदौ यस्याः प्रकृतेः सा तेजोऽबन्नात्मिकैवात्र विवक्षिता । कुतः ? तथा ह्यधीयत एके । हि यस्मादेके छन्दोगाः तेजोऽबन्नानामेव तथा लोहितादिरूपतामधीयते आमनन्ति—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' (छा०-६-४-१) इति । सर्ववेदान्तप्रत्ययत्वाच्छाखान्तरप्रसिद्धरोहितादिप्रत्यभिज्ञानात्तेजोऽबन्नानामेवात्र ग्रहणं युक्तमित्यर्थः ।

अस्मिन्नेव प्रकरणे 'मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे०-४-१०) इति प्रतिपादनात्प्रकृतिविकृत्योरभेदविवक्षया लोहितादिमत्तयानिर्वाच्याविद्यैव अजाशब्देन विवक्षिता, न सांख्यसिद्धा प्रकृतिरिति तात्पर्यम् ।

---

ननु तेजोऽबन्नानामुत्पत्तिश्रवणाद्योगरूढ्योरसंभवात्कथमजाशब्दोऽत आह—

## ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

चश्चोद्यनिरासे । न अजाशब्देऽनुपपत्तिः । कुतः ? कल्पनोपदेशात् । तेजोऽबन्नात्मिकायाः प्रकृतेः अजात्वं कल्प्यते, त्यागभोगसाम्यप्रतिपत्त्यर्थं मध्वादिवत् । यथा-

'असौ वा आदित्यो देवमधु' (छा०-३-१) 'वाचं धेनुमुपासीत' (बृ०-५-८) इत्यादौ आदित्यादेर्मध्वादित्वकल्पना, एवमजात्वकल्पनाया उपदेशादविरोधः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चमसाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ न संख्योपसंग्रहाधिकरणम् ॥

## ॥ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥

बृहदारण्यके श्रूयते—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥' (बृ०-४-४-१७) इति । अस्यार्थः- यस्मिन्पञ्च पञ्चजनाः आकाशश्च श्रिताः, तमाश्रयभूतमेवात्मानं अमृतं मन्ये । एवं ब्रह्म विद्वानहं अमृतो भवामीति । तत्र, पञ्च पञ्चजना इति सांख्यसिद्धानि 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥' (सांख्यका०-३) इति संगृहीतानि पञ्चविंशतितत्वान्युच्यन्ते, किं वा प्राणादयः पञ्चपदर्थाः श्रुतिसिद्धाः, इति संशये, तत्वानीति प्राप्तम् । पञ्च पञ्चेत्यनेन पञ्चविंशतिसंख्याकाः पदार्था उच्यन्ते । जनशब्दश्च तत्वोपलक्षणार्थः । प्राणादिष्वमुख्यत्वात् । तस्मान्न प्रधानमशब्दं, इति प्राप्ते, अभिधीयते—उदाहृतश्रुतौ पञ्चविंशतिसंख्याश्रवणात् प्रधानस्य शब्दवत्त्वमित्यपि न । कुतः ? नानाभावात्, नानात्वादवान्तरसंख्यायाः अनुगमकधर्माभावेन पञ्चपञ्चकानां प्रतिपादयितुमशक्यत्वादित्यर्थः । नानात्वेऽपि कथंचित्प्रतिपादकत्वाङ्गीकारे, बाधकान्तरमाह— अतिरेकाच्चेति । पञ्चपञ्चजनापेक्षया आकाशपुरुषयोरतिरिक्तत्वात् सप्तविंशतिसंख्यापत्तेः, न पञ्चविंशतिसंख्याप्रतिपत्तिरित्यर्थः । अपिना पञ्चविंशतिसंख्याप्रतीतिरेव नास्तीति सूचितम् । तथा हि, पञ्चजनशब्दस्य पारिभाषिकेण स्वरविशेषेणैकपद्यनिश्चयात्तदेकदेशस्य पञ्चशब्दस्य पञ्चशब्दान्तरेणान्वयायोगान्न पञ्चविंशतिसंख्याप्रतीतिः ।

---

एवं संख्यान्तरप्रतीतौ निरस्तायां पञ्चजनशब्देन के विवक्ष्यन्त इत्यत आह—

## ॥ प्राणादयो वाक्यशेषात् ॥१२॥

प्राणचक्षुश्श्रोत्रान्नमनांसि पञ्चजनशब्देनोच्यन्ते । कुतः ? वाक्यशेषात् । उत्तरमन्त्रे—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' (बृ०-४-४-१८)इति प्राणादीनां पञ्चानामनुक्रमणात्, 'स्युः पुमांसः पञ्चजनाः' इति कोशे पुरुषवाचकत्वेन प्रसिद्धस्यापि पञ्चजनशब्दस्य प्रकृते तत्संबन्धिप्राणादौ लक्षणया वृत्तिरविरुद्धेत्यर्थः ।

---

ननु माध्यन्दिनानामन्नस्य प्राणादिष्वाम्नानात् भवतु पञ्चसंख्या, काण्वानां त्वनाम्नानात्कथं पञ्चसंख्याऽत आह—

## ॥ ज्योतिषैकेषामसत्यन्ने ॥१३॥

एकेषां काण्वानां असत्यन्ने ज्योतिषा पञ्चत्वं पूर्यते । 'तद्देवा ज्योतिषां ज्योतिः' ( बृ०-४-४-१६ ) इति पूर्ववाक्ये ज्योतिषः प्रकृतत्वात् । तस्मात्प्रधानस्याशब्दत्वं सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां न संख्योपसंग्रहाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ कारणत्वाधिकरणम् ॥

## ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥

सार्धपादत्रयेण प्रतिपादितस्य ब्रह्मसमन्वयस्य आक्षेपसमाधानार्थमिदमारभ्यते । उक्तस्समन्वयो न संभवति । वेदान्तेषु परस्परविरोधेन प्रामाण्यस्यैव दुःस्थत्वात् । तथाहि—'आत्मन आकाशस्संभूतः' ( तै०-२-१ ) इति तैत्तिरीयके, 'तत्तेजोऽसृजत' (छा०-६-२-३ ) इति छान्दोग्ये, 'लोकानसृजत' ( ऐ०. उ०-४-१-२ ) इति ऐतरेयके, 'एतस्माज्जायते प्राणः' ( मु०-२-१-३ ) इति मुण्डके, एवं कार्ये परस्पर-

विरोधः। कारणस्वरूपेऽपि, 'सदेव सोम्येदमग्र आसीत्' ( छा०-६-२-१ ) इति छान्दोग्ये, 'असद्वा इदमग्र आसीत्' ( तै०-२-७ ) इति तैत्तिरीयके, 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ०. उ०-४-१) इति ऐतरेयके। तस्मान्न युक्तः समन्वयः, इति प्राप्ते, ब्रूमः—'न वियदश्रुतेः' (ब्र०. सू०-२-३-१ ) इत्यारभ्य कार्येषु क्रमद्वारकविगानं परिहरिष्यते। अत्र कारणे तावद्विगानं नास्तीति उच्यते। चस्त्वर्थे। आकाशादिषु यथाभूत ईश्वरः एकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः कारणत्वेन व्यपदिष्टः, तस्यैव शाखान्तरे उक्तेर्न विगानमित्यर्थः।

---

यत्तु 'असद्वा इदमग्र आसीत्' ( तै०-२-७ ) इत्यादिषु विरोध उक्तस्तत्राह-—

## ॥ समाकर्षात् ॥१५॥

'असद्वा इदम्' ( तै०-२-७ ) इत्यत्र पूर्वप्रकृतस्य सत एव आकर्षणान्नासत्कारणतापरमिदम्। तथाहि—'असन्नेव स भवति' ( तै०-२-६ ) इति असद्वादं निराकृत्य, 'अस्ति ब्रह्मेति चेद्वेद' ( तै-०२-६ ) इति सदात्मानं निर्धार्य, 'सोऽकामयत' ( तै०-२-६ ) इति सृष्टिमुक्त्वा, 'तत्सत्यमित्याचक्षते' ( तै०-२-६ ) इत्युपसंहृत्य, 'तदप्येष श्लोको भवति' ( तै०-२-६ ) इति प्रकृतविषयश्लोक उदाहृतः। तत्र नासच्छब्देन शून्यवादः परिगृहीतुं शक्यते, प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात्। सत्यप्यसच्छब्दस्य नामरूपव्याकरणाभावेन प्रागुत्पत्तेरौपचारिकप्रयोगसम्भवात्। एवं सर्वत्र यथाव्यपदिष्टोक्तिरूह्येति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कारणत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ जगद्वाचित्वाधिकरणम् ॥

## ॥ जगद्वाचित्वात् ॥१६॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' ( कौ०. ब्रा०-४-१८ ) इति। अत्र वेदितव्यः, प्राणो, जीवः, परमात्मा वेति संशये, प्राण इति प्राप्तम्। 'यस्य वैतत्कर्म'

इति श्रवणात्, कर्मणश्चलनात्मकस्य प्राणे संभवात्। वाक्यशेषे च 'प्राण एवैकधा भवति' (कौ०. ब्रा०-४-१९) इति प्राणशब्दश्रवणात्। जीवो वा वेदितव्यः। 'यस्य वैतत्कर्म' इति धर्माधर्मलक्षणकर्मनिर्देशसंभवात्। पूर्वप्रकृतानां 'आदित्ये पुरुषः' (कौ०. ब्रा०-४-२) इत्यादीनां भोगोपकरणभूतानां भोक्तुर्जीवस्य कर्तृत्वसंभवेन, 'एतेषां पुरुषाणां कर्ते' ति निर्देशोपपत्तेः। जीवलिङ्गमप्यत्र दृश्यते। वेदितव्यपुरुषज्ञानोन्मुखं बालाकिं प्रतिबुबोधयिषुणाजातशत्रुणा सुप्तपुरुषमामन्त्रणेन संबोध्य, ततः अनुत्थितं यष्टिघातेन उत्थितं प्रदर्श्य, प्राणादिव्यतिरिक्तस्य जीवस्य प्रतिपादनादित्येवं प्राप्ते, ब्रूमः—अत्र परमात्मैव वेदितव्यः। कुतः? 'ब्रह्म ते ब्रवाणि' (कौ०. ब्रा०-४-१) इति परब्रह्मप्रतिपादनमुपक्रम्य, आदित्यादिपुरुषोपन्यासे बालाकिना कृते, 'मामैतस्मिन् संवादयिष्ठाः (कौ०. ब्रा०-४-२) इति तन्निरासेन स्वयमजातशत्रुः 'एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म' इत्युक्तवान्। तत्र नामुख्यब्रह्मपरत्वं युक्तिमत्। पुरुषकर्तृत्वञ्च स्वातन्त्र्येण ईश्वर एवोपपन्नम्। न च तत्र कर्मशब्दानुपपत्तिः॥ जगद्वाचित्वात्॥ क्रियत इति कर्मेति जगदेव कर्मशब्देनोच्यत इत्यर्थः। जगतः प्रत्यक्षोपस्थित्या पूर्वमनभिहितत्वेऽपि नैतच्छब्दानुपपत्तिः। जगदन्तर्भावादेव पुरुषकर्तृत्वस्यापि प्राप्तौ, बालाकिना वेदितव्यत्वेनोपदिष्टानां अवेदितव्यत्वख्यापनार्थं ब्राह्मणपरिव्राजकन्यायेन पुरुषाणामिति पृथङ्निर्देशः।

---

## ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥१७॥

ननु उक्ताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च न ब्रह्मपरत्वनिश्चय इति चेन्न। कुतस्तद्व्याख्यातं, 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र०. सू०-१-१-३१) इत्यत्र प्रतर्दनाधिकरणे जीवमुख्यप्राणलिङ्गं ब्रह्मपरत्वेऽप्यविरुद्धतया व्याख्यातमित्यर्थः।

न चैवं प्रतर्दनवाक्यविचारेणास्य गतार्थता। कर्मशब्दस्य जगद्वाचित्वस्य तत्राप्रतिपादनात्।

---

## ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥

जैमिनिस्त्वाचार्यो जीवपरामर्शमस्मिन्प्रकरणे अन्यार्थं ब्रह्मप्रतिपत्त्यर्थं मन्यते। कुतः? प्रश्नव्याख्यानाभ्याम्। प्रश्नस्तावत् सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे

बोधिते, पुनर्जीवव्यतिरिक्तविषयो दृश्यते—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्' ( कौ०. ब्रा०-४-१८ ) इति । प्रतिवचनमपि—'यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति' ( कौ०. ब्रा०-४-१९ ) इति । सुषुप्तिकाले च परेण ब्रह्मणा जीव एकीभवतीति वेदान्तमर्यादा ।

अपि चैके वाजसनेयिनो बालाक्यजातशत्रुसंवादे एवं स्पष्टं विज्ञानमयं जीवं तद्व्यतिरिक्तं परमात्मानं चामनन्ति—'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्' ( बृ०-२-१-१६ ) इति प्रश्ने, 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते' ( बृ०-२-१-१७ ) इत्युत्तरे च । आकाशशब्दः ब्रह्मणि प्रसिद्धः । सर्ववेदान्तप्रत्ययत्वाच्च कौषीतकिब्राह्मणेऽपि स एव निश्चयः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां जगद्वाचित्वाधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ वाक्यान्वयाधिकरणम् ॥

## ॥ वाक्यान्वयात् ॥१९॥

मैत्रेयीब्राह्मणे 'आत्मा वा अरे द्रष्टव्यः' ( बृ०-४-५-६ ) इति श्रुत आत्मा जीवः परो वेति संशये, जीवः, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' (बृ०-४-५-६) इत्यादिना जीवस्योपक्रमादिति प्राप्ते, अभिधीयते—'पर एव, न जीवः । कुतः ? ॥ वाक्यान्वयात् ॥ उपक्रमोपसंहारपर्यालोचनया वाक्यावयवानां ब्रह्मण्येवान्वयादित्यर्थः । उपक्रमे वित्तसाध्येन कर्मणा किमहममृता स्यामिति मैत्रेयीप्रश्नदर्शनात्, 'एतावदरे खल्वमृतत्वम्' ( बृ०-४-५-१५ ) इत्युपसंहारदर्शनाच्च अमृतत्वसाधनमात्मज्ञानमत्रोपदेश्यम् । तच्च परमात्मविषयमेव न जीवविषयमिति, परमात्मैवात्र द्रष्टव्य उपदिश्यते ।

---

कथं तर्हि जीवोपक्रमोऽस्त आह—

## ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥२०॥

जीवोपक्रमः प्रतिज्ञासिद्धेः लिङ्गं, तत्सिद्ध्यर्थमिति आश्मरथ्यो मन्यते । जीवस्य परमात्मनोऽत्यन्तभिन्नत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः 'इदं सर्वं यदयमात्मा'

( बृ०-४-५-७ ) इति सार्वात्म्यप्रतिज्ञायाश्च विरोधमाशङ्क्य, तयोरभेदांशप्रतिपत्त्यर्थं जीवोपक्रम इत्यर्थः ।

---

## ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

ज्ञानाभ्यासादिवशाद्देहेन्द्रियादिभ्यः उत्क्रमिष्यतो जीवस्यैवंभावात् मुक्तिसमये परमात्मना एकीभावाद्भविष्यद्भेदमादाय जीवोपक्रम इति औडुलोमिराचार्यो मन्यते ।

---

## ॥ अवस्थितेरिति काशकृत्स्नः ॥२२॥

परमात्मन एव अविद्याकल्पितभेदेन जीवरूपेणावस्थितेः जीवोपक्रमाविरोधं काशकृत्स्नो मन्यते । जीवपरमात्मनोर्भेदाभेदमतेन, प्रथमसमाधानं, मुक्तेः प्राग्भेदः तदनन्तरमभेद इति मतेन द्वितीयं, सिद्धान्तेन तृतीयमिति विवेकः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वाक्यान्वयाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ प्रकृत्यधिकरणम् ॥

## ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२३॥

एतावता 'जन्माद्यस्य यतः' ( ब्र०. सू०-१-१-२ ) इत्युक्तं जगत्कारणत्वं ब्रह्मणो लक्षणं निर्व्यूढम् । तत्र निमित्तत्वमेव ब्रह्मणः, किं वा उपादानत्वमपीति संशये, निमित्तत्वमेव, 'स ईक्षाञ्चक्रे' 'स प्राणमसृजत' ( प्र०-६-३-४ ) इत्यादौ ईक्षापूर्वकजगत्कर्तृत्वश्रवणादिति प्राप्ते, अभिधीयते—'प्रकृतिश्च ब्रह्म, चकारात् निमित्तमपि । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात्, प्रतिज्ञादृष्टान्तयोरनुपरोधोऽविरोधः सामञ्जस्यं तस्मादित्यर्थः । प्रतिज्ञा तावत्—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' ( छा० ६-१-३ ) इति । अत्र चैकविज्ञानेन सर्वविज्ञानं गम्यते । तच्चोपादानत्वे संभवति, उपादानोपादेययोरव्यतिरेकात् उपादानात्मना सर्वज्ञानसम्भवात् । दृष्टान्तोऽपि—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' ( छा०-६-

१-४ ) इत्युपादानविषय एव दृश्यते । निमित्तत्वमपि प्रतिज्ञानुपरोधात् । निमित्तोपादानयोर्भेदे एकविज्ञानेन सर्वविज्ञानविरोधात् ।

---

## ॥ अभिध्योपदेशाच्च ॥२४॥

किञ्च—अभिध्योपदेशादपि कर्तृत्वोपादानत्वे ब्रह्मणः । ध्यानोपदेशादित्यर्थः । 'सोऽकामयत । बहु स्यां प्रजायेयेति ।' (तै०-२-६) इति कामनया च कर्तृत्वं, 'बहु स्याम्' इति चोपादानत्वं गम्यते ।

---

## ॥ साक्षाच्चोभयाम्नानात् ॥२५॥

प्रकृतित्वे युक्त्यन्तरम् । साक्षाद्ब्रह्म गृहीत्वा प्रभवप्रलययोराम्नानादित्यर्थः, 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' (छा०-१-९-१) इति । यत्र प्रभवाप्ययौ यस्य, तत् तस्योपादानं दृष्टं, यथा मृद्घटस्य ।

---

## ॥ आत्मकृतेः परिणामात् ॥२६॥

इतश्च निमित्तत्वोपादानत्वे ब्रह्मणः ॥ आत्मकृतेः परिणामात् ॥ आत्मनः सम्बन्धिनी कृतिरात्मकृतिः कर्तृत्वकर्मत्वसाधारण्येनात्मकृतेः श्रवणादित्यर्थः, 'तदात्मानं स्वयमकुरुत' (तै०-२-७) इति । स्वयमिति कर्तृत्वं, आत्मानमिति कर्मत्वं, कर्मत्वेनोपादानत्वसिद्धिः ।

नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वं ? अत आह—परिणामात् । परिणामो विवर्तः । सिद्धस्यापि विवर्तात्मना साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः । परिणामादिति पृथक्सूत्रं वा ॥ परिणामात् ॥ विकारसामानाधिकरण्येन आत्मनः श्रवणादित्यर्थः, 'सच्च त्यच्चाभवत्' (तै०-२-६) इति ।

---

## ॥ योनिश्च हि गीयते ॥२७॥

इतश्चात्मा प्रकृतिः । हि यस्माद्योनिरिति गीयते, पठ्यते—'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड०-१-१-६) इति । योनिशब्दश्च प्रकृतिपर्यायो लोके प्रसिद्धः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रकृत्यधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ सर्वव्याख्यानाधिकरणम् ॥

## ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥२८॥

वेदान्तेषु परमाण्वादेः कारणत्वं श्रुतं, न वेति संशये,श्रुतमित्याह—छान्दोग्ये षष्ठे श्वेतकेतुं प्रत्युद्दालकः सूक्ष्मतत्वे स्थूलस्य जगतोऽन्तर्भावं प्रतिपिपादयिषुः आह । 'न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इति आसामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ' ' एतस्य वै सोम्यैषोऽणिम्नः एवं महान्न्यग्रोधस्तिष्ठति ' (छा०-६-१२-१-२) इति जगतः प्रागवस्थाया दृष्टान्तः श्रूयते । तत्र दृष्टान्ते नकिञ्चनाणुशब्दश्रवणाच्छून्यस्वभावाणवो दार्ष्टान्तिकत्वेन प्रतिभान्तीति प्राप्ते, अतिदिशति—एतेनेति । एतेन आत्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधेनैव, सर्वे परमाण्वादिवादाः निरस्ततया व्याख्याता इत्यर्थः । परमाण्वादेः कारणत्वे, न आत्मज्ञानेऽपि सर्वं विदितं स्यादनुपादानत्वात् । तस्मात् न किञ्चनेत्यनेन नामरूपानभिव्यक्तिः प्रतिपाद्यते । सूक्ष्मत्वाच्चाणुत्वं ब्रह्मण्युपचरितमिति । तस्मात्सर्ववेदान्तेषु ब्रह्मैव जगत्कारणत्वेन प्रतिपाद्यत इति सिद्धम् । व्याख्यातपदाभ्यासोऽध्यायसमाप्तिसूचनार्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वव्याख्यानाधिकरणम् ॥

प्रतिज्ञा लक्षणं लक्ष्यमाण एव समन्वयः ।
वैदिकस्य च तत्रैव नान्यत्रेत्युपपादितम् ॥

॥ इति श्रीमहोपाध्यायश्रीमद्राघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्न-भट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रथमाध्यायस्य चतुर्थः पादः ॥

अनुमानिकमष्टावष्टाविंशतिः ॥

अधिकरणसंख्या—८

सूत्रसंख्या—२८

॥ श्रीः ॥

# ॥ अथ द्वितीयोऽध्यायः ॥

॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

(१) ॥ अथ स्मृत्यधिकरणम् ॥

## ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष-प्रसङ्गात् ॥१॥

प्रथमाध्याये सर्वज्ञः सर्वशक्तिः परमेश्वरो जगज्जन्मादिकारणं, इत्युक्तम् । तत्रैव सर्वेषां वेदान्तानां समन्वयश्च प्रतिपादितः । प्रधानादिवादाश्चाशब्दत्वेन निराकृताः । इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः, प्रधानादिवादानाञ्च न्यायाभासमूलत्वं, सृष्ट्यादि-प्रक्रियायाश्च सर्ववेदान्तेष्वैकरूप्यमित्येतत्प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते । तत्र प्रथमं स्मृतिविरोधपरिहारः ।

ननु ब्रह्म जगत्कारणमित्यनुपपन्नम् । तथा सति, प्रधानकारणप्रतिपादककापिल-स्मृतेरनवकाशप्रसङ्गात् । न हि मानवादिस्मृतीनां धर्मप्रतिपादनेनेव कापिलस्मृतेस्तथाव-काशस्संभवति । तस्माच्छिष्टपरिगृहीततया प्रमाणभूतकापिलस्मृतिविरोधाद्वस्तुनि (अने-कत्वा)विकल्पासंभवाच्च वेदान्ता एव प्रधानपरतया नेया इत्यभिप्रेत्य चोदयति— ‘ स्मृत्यनवकाशदोषप्रसङ्ग इति चेत् , इति । परिहरति—‘नान्यस्मृत्यनवकाशदोषप्रसङ्गात्’ इति । प्रधानवादो न संभवति । ‘ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा’ (गी०-७-६) इत्यादिस्मृतेरनवकाशप्रसङ्गात् , स्मृत्योर्विरोधे श्रुत्यनुसारितया ईश्वरकारणतास्मृतेरेव प्राबल्यात्। विरोधाधिकरणन्यायेनैव ( जै०. सू०-१-३-३ ) श्रुतिविरोधे स्मृतेरप्रामाण्ये सिद्धेऽपि, स्मृतेः स्मृतिविरोधे अप्रामाण्यकथनार्थमयमारम्भः ।

## ॥ इतरेषां चानुपलब्धेः ॥२॥

किञ्च—सांख्यप्रसिद्धानां प्रधानादितरेषां महदहङ्कारादीनां लोकवेदयोरनुपलब्धेस्तत्स्मृतिस्तावदप्रमाणम् । तत्सामान्यात्प्रधानकारणस्मृतिरपि अप्रमाणमित्यभिप्रायः । यद्यपि स्मृतिमात्रप्रसिद्धधर्मवन्महदादीनामपि तन्मात्रात्सिद्धिरप्रत्यूहा, तथापि श्रुतिविरोध एव मूलयुक्तिः । इदं त्वभ्युच्चयमात्रमिति ध्येयम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां स्मृत्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ योगप्रत्युक्त्यधिकरणम् ॥

## ॥ एतेन योगः प्रत्युक्तः ॥३॥

एतेन सांख्यमतनिरासेन, योगः योगमतं, प्रत्युक्तः निरस्तं वेदितव्यमित्यर्थः । तत्रापि प्रधानकारणवादस्य तुल्यत्वात् । योगे श्रुत्यादिप्रसिद्धानामभ्यासादिज्ञानोपायानां बहूनां प्रतिपादनात्प्रामाण्यशङ्कायामतिदेशः कृतः । वेदनिरपेक्षकेवलसांख्ययोगाभ्यां नात्मैकत्वज्ञानं, 'नावेदविन्मनुते तं बृहन्तम्' (तै०. ब्रा०-३-१२-९-७) 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ०-३-९-२६) इत्यादिश्रुतेः । वेदान्ताविरोध्यंशेन सांख्ययोगयोः प्रामाण्येऽपि, तद्विरोध्यंशेन सर्वथा अप्रामाण्यमित्यधिकरणद्वयतात्पर्यम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां योगप्रत्युक्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(३) अथ न विलक्षणत्वाधिकरणम् ॥

## ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥४॥

स्मृतिविरोधः परिहृतः । इदानीं तर्कविरोधपरिहारार्थमिदम् । यद्यपि तर्कस्य स्वातन्त्र्येण प्रामाण्यं नास्तीति वैदिकार्थपरिपन्थित्वं नास्ति, तथापि 'श्रोतव्यो मन्तव्यः' (बृ०-४-५-६) इति तर्कस्याप्यादर्तव्यत्वश्रवणाद्बलवत्तर्कानुगृहीतप्रमाणविरोधे श्रुतेः प्रतिपादितप्रामाण्यानिर्वाहाद्यत्नेन तन्निराकरणमुपपद्यते ।

तत्र पूर्वः पक्षः—चेतनं ब्रह्म जगत्प्रकृतिरिति यदुक्तं तन्न। कुतः? विलक्षणत्वादस्य जगतः प्रकृत्याः। जगद्ब्रह्मणोर्विलक्षणत्वात् जगदचेतनं ब्रह्म चेतनमिति। विलक्षणत्वञ्च कुतः? इत्यत आह—तथात्वञ्च शब्दात्। तथात्वञ्च वैलक्षण्यं च ब्रह्मजगतोः शब्दात् श्रुतेरवगम्यते। 'विज्ञानञ्चाविज्ञानञ्च' (तै०-२-६) इति ब्रह्मणश्चेतनत्वं जगतोऽचेतनत्वं च श्रावयति।

---

ननु जगतश्चेतनत्वमपि क्वचिच्छ्रूयते—'मृदब्रवीत्' 'आपोऽब्रुवन्' (श०-प०-ब्रा०-१-१-३-२-४) 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' (छा०-६-२-३-४) 'ते हेमे प्राणा अहंश्रेयसे विवदमानाः' (बृ०-६-१-७) इत्यादि। अतो नोक्तवैलक्षण्यमत आह—

## ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥

तुशब्दः शङ्कां वारयति। उक्तश्रुत्या मृदादीनां चेतनत्वं न प्रत्येतुं शक्यम्। यतोऽयमभिमानिव्यपदेशः। मृदाद्यभिमानिन्यो देवतास्तत्र व्यपदिश्यन्ते, न मृदादिमात्रम्। कुतः? विशेषानुगतिभ्याम्। कौषीतकिब्राह्मणे प्राणसंवादे 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इति, 'ता वा एतास्सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' (कौ०-२-१४) इति च, देवताशब्देन विशेषितत्वाद्विशेषः। अनुगताश्च मन्त्रार्थवादेतिहासपुराणादिषु सर्वत्र अभिमानिन्यश्चेतना देवता अवगम्यन्ते, 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ०. आ०-२-४-२-४) इत्यादिषु। ततश्च जगदचेतनं ब्रह्म चेतनमिति वैलक्षण्यान्न प्रकृतिविकारभावः। न हि घटः सुवर्णप्रकृतिकः, रुचकादिकं वा मृत्प्रकृतिकमिति संभवति, वैलक्षण्यात्।

---

एवं प्राप्ते राद्धान्तः—

## ॥ दृश्यते तु ॥६॥

तुशब्दात्पूर्वपक्षनिरासः। वैलक्षण्येऽपि प्रकृतिविकारभावो दृश्यते। गोमयाद्वृश्चिकोत्पत्तिदर्शनात्।

अयं भावः—अशेषप्रकृतिस्वभावानुवर्तनं न विकारमात्रे। तथा सति विकारत्वानुपपत्तेः। यत्किञ्चित्स्वभावानुवर्तनं प्रकृतेऽपि, ब्रह्मसत्ताया विकारे अनुवर्तनात्।

नहि विकारे चैतन्यमापादयितुं शक्यते। यच्चैतन्याननिवतं तद्ब्रह्मप्रकृतिकमित्यत्र दृष्टान्ताभावात्। सर्वस्य विकारस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात्।

---

ननु चेतनं शब्दादिहीनं च ब्रह्म अचेतनस्य शब्दादिमतश्च जगतः कारणं चेदुत्पत्तेः पूर्वं जगतोऽसत्त्वादसत्कार्यवादप्रसङ्ग इत्याशङ्क्य निषेधति-—

## ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥७॥

उत्पत्तेः पूर्वं कार्यमसत्स्यादिति चेत्तन्न। किं कारणम्? प्रतिषेधमात्रत्वात्। अस(त्स्या)दिति मत्वा सत्ता निषिध्यते। तत्प्रतिषेधमात्रं, शब्दमात्रम्। न तु तस्य अर्थोऽस्तीत्यर्थः।

अयं भावः—कार्यस्य कारणसत्तैव सत्ता, न तु तद्व्यतिरेकेण सत्त्वमस्ति। उत्पत्त्यनन्तरं यथा कारणात्मना सत्त्वं, तथोत्पत्तेः पूर्वमपि। तद्व्यतिरेकेण सत्त्वं उत्पत्त्यनन्तरमपि नास्ति। तद्वक्ष्यति 'तदनन्यत्वम्' (ब्र०. सू०-२-१-६) इत्यत्र।

---

शङ्कते—

## ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥८॥

यद्यशुद्ध्यादिमतो जगतः शुद्धमुपादानं, तर्ह्यपीतौ लयसमये कार्यं कारणे लीयमानं स्वजात्यादिभिः कारणं दूषयेत्। ततश्च, तद्वत् कार्यवत् कारणस्यापि जात्यादिप्रसङ्गाच्छुद्धं जगदुपादानमित्येतदसमञ्जसमिति।

---

समाधत्ते—

## ॥ न तु दृष्टान्तभावात् ॥९॥

तुरवधारणे। पूर्वोक्तमसामञ्जस्यं नास्त्येव। नत्विति निपातसमुदायो वा निषेधार्थकः। कुतः? दृष्टान्तभावात्। कार्यमपीतौ कारणमात्मीयेन धर्मेण न दूषयतीत्यत्र शतशो दृष्टान्तसत्त्वादित्यर्थः। न हि घटादयोऽपि स्वकारणमृदं दूषयंति।

तथा सति लयेऽपि घटस्य तादवस्थ्यापातात्। कार्यस्य कारणात्मत्वं, न तु कारणस्य कार्यात्मत्वम्। प्रसिद्धोऽयमौपनिषदानां मार्गः। अत एव, 'इदं सर्वं यदयमात्मा' (बृ०-४-५-७) इत्यादिश्रुतिभिरभेदोद्घोषात् स्थितिकालेऽपि कारणस्य कार्यधर्मसंसर्गो निरस्तः। कारणस्य कार्यानन्यत्वाभ्युपगमेऽपि अभेदानभ्युपगमात् मिथ्याभूतप्रपञ्चतादात्म्यस्य शङ्कानर्हत्वादिति।

---

## ॥ स्वपक्षदोषाच्च ॥१०॥

पूर्वपक्षिणः सांख्यस्यापि पक्षे तदुद्भाविता दोषास्समाना इत्यर्थः। शब्दादिहीनाच्छब्दादिमतो जगत उत्पत्त्यङ्गीकारात्। वैलक्षण्ये प्रकृतिविकारभावानुपपत्तिः, उत्पत्तेः प्रागसत्त्वप्रसङ्गः, अपीतौ तद्वत्प्रसङ्गः, इति दूषणत्रयं समानत्वादस्मदुक्तरीत्यैव त्वयापि समाधेयमिति भावः।

---

## ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥११॥

अपिर्युक्तिसमुच्चये। अपि च केवलतर्केण प्रत्यवस्थातुं न शक्यते। कुतः? तर्काप्रतिष्ठानात्, तर्कस्याव्यवस्थितत्वादित्यर्थः। केनचित्तार्किकेण यत्नेनानुमितोऽप्यर्थोऽन्येनान्यथाक्रियते। तदप्यन्येनान्यथा, इति तर्कस्याव्यवस्था।

ननु सर्वतर्काव्यवस्थितौ व्यवहारमात्रोच्छेदः, धूमादिदर्शनानन्तरं वह्न्याद्यर्थे प्रवृत्त्याद्यनुपपत्तेः। अप्रतिष्ठिततर्कसाम्येन तर्कान्तरस्याप्रतिष्ठितत्वसाधनानुपपत्तेश्च। वेदार्थसंदेहे तर्कस्यैव निर्णयहेतुत्वाच्च।

तदुक्तं मनुना—

> 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
> यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥' (मनु०-१२-१०६) इति।

तस्मात्प्रतिष्ठिततर्केण प्रत्यवस्थानं संभवत्येवेत्यभिप्रेत्य शङ्कते—'अन्यथानुमेयमिति चेत्' इत्यंशेन। अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण प्रत्यवस्थीयत इति शङ्कार्थः। समाधत्ते—'एवमप्यविमोक्षप्रसङ्गः' इति। एवमपि कचित्तर्कस्य प्रतिष्ठितत्वेऽपि अविमोक्ष-

प्रसङ्गः । प्रकृते तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्ष इत्यर्थः । रूपादिहीनतया प्रत्यक्षागोचरत्वात् लिङ्गाभावेनानुमित्यविषयत्वादौपनिषदे ब्रह्मणि आगमनैरपेक्ष्येण प्रवर्तमानस्तर्क आभासीभवतीति भावः ।

' अविमोक्षप्रसङ्ग' इत्यस्यापरा व्याख्या---आगमनिरपेक्षतर्कमात्रात्तत्वज्ञानं न संभवति । तर्काणां विप्रतिपत्तेः, सर्वज्ञानां कपिलकणभुगादीनामपि विप्रतिपत्तेश्च । तस्मात्तर्कमात्रजन्यब्रह्मज्ञानान्मोक्षो न संभवति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां न विलक्षणत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ शिष्टापरिग्रहाधिकरणम् ॥

## ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥

वैदिकदर्शनप्रत्यासन्नत्वात्कैश्चित्केनचिदंशेन परिगृहीतत्वात् प्रधानकारणवादं यत्नेन निरस्य, तत्प्रकारमण्वादिकारणवादेऽपि अतिदिशति । परिगृह्यन्त इति परिग्रहाः । शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदप्यंशेनापरिगृहीता ये अण्वादिकारणवादास्तेऽपि, एतेन प्रधानकारणवादनिराकरणप्रकारेण, व्याख्याता निराकृता वेदितव्याः । तर्कस्याप्रतिष्ठितत्वाद्वेदविरुद्धत्वाच्च । न पृथग्यत्नार्हा इति भावः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां शिष्टापरिग्रहाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ भोक्त्रापत्त्यधिकरणम् ॥

## ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥१३॥

पुनः प्रकारान्तरेण आक्षिप्य समाधीयते । भोक्ता शारीरश्चेतनो जीवः, भोग्याश्शब्दादयो विषयाः । तेषां परस्परविभागो न स्यात् , मूलकारणाद्ब्रह्मणोऽनन्यत्वात् । ततश्च लोकप्रसिद्धो भोक्तृभोग्यविभागो भज्येतेति शङ्कते---' भोक्त्रापत्तेरविभागश्चेत् ' इति । मूलकारणादनन्यत्वेन भोग्यस्य भोक्तृत्वापत्तिः । उपलक्षणमेतत् भोक्तुश्च

भोग्यत्वापत्तेः । ततश्च लोकसिद्धभेदयोः भोक्तृभोग्ययोरविभागः, विभागो न स्यादिति शङ्कार्थः । ससाधत्ते—'स्याल्लोकवत्' इति । उक्तो विभागः स्यात्, लोकवत् । यथा मृद्विकाराणां घटशरावादीनां मृदात्मनाऽभेदेऽपि परस्परमसाङ्कर्यम्, एवं ब्रह्मात्मनाऽभेदेऽपि भोक्तृभोग्ययोः असाङ्कर्यम् । यद्यपि न जीवो ब्रह्मविकारः, तथाप्यौपाधिकविभागसत्त्वादसाङ्कर्यं सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां भोक्त्रापत्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ आरम्भणाधिकरणम् ॥

ननु प्रपञ्चस्य ब्रह्माभेदमङ्गीकृत्य स्याल्लोकवदिति परिहृतम्, तस्य ब्रह्मभेद एव कुतो नाङ्गीकृत इत्यत आह—

## ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१४॥

तस्य प्रपञ्चस्य ब्रह्मणस्सकाशादनन्यत्वम् । यद्वा, तस्माद्ब्रह्मणः प्रपञ्चस्यानन्यत्वं, परमार्थतस्तद्व्यतिरेकेणाभावः । कुतः ? आरम्भणशब्दादिभ्यः । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, तत्र दृष्टान्तत्वेन 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा०-६-१-४) इत्येवमाद्याम्नातम् ।

अस्यायमर्थः—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना ज्ञातेन सर्वं मृण्मयं घटशरावादिकं मृदात्मकत्वाविशेषात्परमार्थतो ज्ञातं भवति । ननु पृथुबुध्नोदराद्याकारविशेषस्य अज्ञानात्कथं मृण्मयं सर्वं ज्ञायते ? अत उक्तं 'वाचारम्भणम्' इत्यादि । आरभ्यत इत्यारम्भणं, वाचा घटादिशब्देनारभ्यते विकारः । न तु कारणव्यतिरेकेण परमार्थतो विकारोऽस्ति । किन्तु घटादिनामधेयमात्रम् । विकारस्तु मिथ्यैव । तर्हि किं सत्यमित्यत आह—मृत्तिकेति । विकारो मिथ्या, कारणं तु सत्यमिति तात्पर्यार्थः ।

न चैतावता मृत्तिकायास्सत्यत्वमिति भ्रमितव्यम् । सन्दर्भस्य विकारमिथ्यात्वे, कारणसत्यत्वे च तात्पर्यात्, मृदोऽपि विकारत्वाविशेषान्मिथ्यात्वसिद्धेः । एवं दृष्टान्ते

वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण प्रपञ्चस्याभावः प्रतीयते । आरम्भणशब्दादिभ्य इत्यादिपदात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छा०-६-८-७) 'इदं सर्वं यदयमात्मा' (बृ०-२-४-६) 'ब्रह्मैवेदं विश्वम्' (मुण्ड०-२-२-११) 'नेह नानास्ति किञ्चन' (बृ०-४-४-१९) इत्यादिकं संगृहीतम् ।

---

## ॥ भावे चोपलब्धेः ॥१५॥

इतश्च कार्यस्य कारणादनन्यत्वम् । कारणभावे कार्यस्योपलब्धेः, तदभावे अनुपलब्धेः । कारणानुरक्तस्यैव कार्यस्योपलब्धेरिति तात्पर्यार्थः । यदनुरक्तं यद्भासते, तस्य तदनन्यत्वं लोकसिद्धम् । 'भावाच्चोपलब्धेः' इति वा सूत्रम् । न केवलं शब्दादेव कार्यकारणयोरनन्यत्वं, किन्तु प्रत्यक्षोपलब्धेर्भावाच्चेत्यर्थः । न हि तन्तुव्यतिरेकेण पटः कश्चिदुपलभ्यते । आतानवितानविशिष्टतन्तूनामेव पटबुद्धिविषयत्वात् । एवं तन्तुष्वपीति, मूलकारणपर्यन्तधावने ब्रह्मण्येव परिसमाप्यत इति ।

---

## ॥ सत्त्वाच्चावरस्य ॥१६॥

अवरस्य कार्यस्योत्पत्तेः प्राक्कारणादनन्यत्वेन सत्त्वात्, सत्त्वश्रवणात्, उत्पत्त्यनन्तरं अनन्यत्वं सिद्धमित्यर्थः । 'सदेव सोम्येदमग्र आसीत्' (छा०-६-२-१) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ०. आ०-२-४-१-१) इत्यादौ इदं सदित्यादि सामानाधिकरण्यादिदंशब्दगृहीतस्य प्रपञ्चस्य तदनन्यत्वं सिद्धम् । यच्च यदात्मना यत्र न वर्तते, न तत् तत उत्पद्यते, यथा सिकताभ्यस्तैलम् । तस्मात्प्रागिव पश्चादपि सदात्मनानन्यत्वं सिद्धम् ।

---

## ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥१७॥

ननु 'असदेवेदमग्र आसीत्' (छा०-३-१९-१) 'असद्वा इदमग्र आसीत्' (तै०-२-७-१) इत्यादावसत्त्वस्यापि श्रवणादुत्पत्तेः प्राक्सत्त्वं न सम्भवतीति

शङ्कार्थः । समाधत्ते—नेति । नात्यन्तासत्त्वाभिप्रायेण असत्त्वमुच्यते । किन्तु, धर्मान्तरेण कार्यात्मना असत्त्वमुच्यत इत्यर्थः । कुतः ? वाक्यशेषात् । 'असदेवेदमग्र आसीत्' इत्युपक्रम्य 'तत्सदासीत्' (छा०-३-१९-१) इति वाक्यशेषे श्रूयते । यद्युपक्रमे अत्यन्तासत्त्वं विवक्षितं, तदा सदित्यनुपपन्नम् । तस्मान्नामरूपव्याकृते लोके सदिति व्यवहारात्तदभावादसदित्युपचर्यते, न तु निरुपाख्यतुच्छत्वमित्यर्थः ।

---

## ॥ युक्तेः शब्दान्तराच्च ॥१८॥

युक्तेः शब्दान्तराच्च कारणादनन्यत्वं प्रागुत्पत्तेः सत्त्वञ्च कार्यस्योपगन्तव्यम् । युक्तिस्तावत्—न हि तन्त्वादिभ्योऽन्यत्पटादिकमित्यत्र किञ्चित्प्रमाणं, संयोगविशेषविशिष्ट-तन्तुव्यतिरेकेण पटस्यादर्शनात् । यथा वनादावेकदेशावच्छेदेनानेकवृक्षादीनां कार्यविशेष-बुद्धिविशेषजनकत्वं, न तु वनादिकं अवयव्यन्तरम्, एवं पटादावपि संयोगविशेष-विशिष्टतन्त्वादीनामेव अवयविकार्यविशेषबुद्धिविशेषजनकत्वसंभवेन अतिरिक्तावयविकल्पनं कुकल्पनमेव ।

नह्याकारविशेषमात्रेण वस्त्वन्यत्वं, सङ्कुचिताङ्गात्प्रसारिताङ्गस्य देवदत्तस्य भेदापत्तेः । बाल्ययौवनकौमारेषु भेदापत्तेश्च । बलवत्प्रत्यभिज्ञाभङ्गभयेनेष्टापत्तेः कर्तुमशक्यत्वात् । उत्पत्तेः प्रागसत्त्वे पट उत्पद्यत इत्यप्रमाणं स्यात्, उत्पत्तिक्रियाया निराश्रयत्वापातात् । उत्पन्नतन्तूनामाश्रयत्वायोगात् । तन्तव उत्पद्यन्त इति प्रतीत्यापत्तेश्च । युक्त्यन्तराणि च भाष्ये अनुसन्धेयानि । शब्दान्तरञ्च—पूर्वमसच्छब्दोपादानात् तदन्यः सच्छब्दः शब्दान्तरम् । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा०-६-२-१) इत्यादि । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यसत्पक्षमुपक्षिप्य, 'कथमसतः सज्जायेत' इत्याक्षिप्य, 'सत्त्वेव सोम्येदमग्र आसीत्' (छा० ६-२-१-२) इत्यवधारयति । तत्र इदं सदिति समानाधिकरणत्वात् कारणात्मना सत्त्वं तदनन्यत्वं च कार्यस्य सिद्धमिति ।

---

## ॥ पटवच्च ॥१९॥

युक्तिप्रपञ्चोऽयम् । यथा संवेष्टितस्य प्रसारितस्य च पटस्य प्रतीतिभेदे कार्यवैलक्षण्ये च सत्यपि न भेदः, एवं तन्तुपटयोरपीत्यर्थः ।

---

## ॥ यथा च प्राणादि ॥२०॥

किञ्च---यथा प्राणापानादिषु प्राणायामेन निरुद्धेषु नाकुञ्चनादिकार्यं, अनिरुद्धेषु च तत्कार्यं, नैतावता प्राणभेदः, एवं तन्तुपटादेरपीति, कारणादनन्यत्कार्यम् । एवं ब्रह्मपर्यन्तधावने 'येनाश्रुत श्रुतं भवति' ( छा०-६-१-१ ) इत्यादिश्रौतप्रतिज्ञा साधु संगच्छेत ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आरम्भणाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ इतरव्यपदेशाधिकरणम् ॥

## ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । जीवब्रह्मणोरभेदाङ्गीकाराज्जीव एव जगन्निर्मातेत्यापतितम् । स च स्वस्य हितकारी हितं प्रपञ्चमेव कुर्यात् , नाहितं जन्मजरामरणादिकम् । इदं मया सृष्टमिति प्रत्यभिजानीयात् । मायाविवत् स्वयमेव कदाचित्प्रपञ्चमुपसंहरेत् । न चेष्टापत्तिः, स्वशरीरोपसंहारेऽप्यसमर्थस्य प्रपञ्चोपसंहारासामर्थ्यात् ।

इतरस्य जीवस्य 'तत्त्वमसि' ( छा०-६-८-७ ) इत्यादिना ब्रह्मात्मत्वव्यपदेशात् , यद्वा—इतरस्य ब्रह्मणः 'अनेन जीवेनात्मना' ( छा०-६-३-२ ) इति शारीरत्वव्यपदेशाच्छारीरकस्यैव स्रष्टृत्वं प्रतीयते । स च स्वस्य हितमेव कुर्यान्नाहितम् । हितस्याकरणं हिताकरणम् । आदिशब्देन प्रपञ्चस्य स्वकृतत्वाभिमानाभावादिकं गृह्यते । ततश्च उक्तदोषाच्चेतनस्य कारणत्वं न संभवतीति सूत्रार्थः ।

---

## ॥ अधिकन्तु भेदनिर्देशात् ॥२२॥

तुः पूर्वपक्षनिवर्तकः । अधिकं जीवादन्यत्सर्वज्ञं सर्वशक्ति च ब्रह्म जगन्निर्मातृ, न जीवः । कुतः ? भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्यः' ( बृ०-२-४-५ ) 'सता सोम्य तदा संपन्नो भवति' (छा०-६-८-१ ) इत्यादौ जीवब्रह्मणोर्भेदेन निर्देशात् ।

न चाभेदश्रुतिविरोधः । वास्तवैक्यस्य औपाधिकभेदस्य च वेदान्तेषु क्रियासमभिहारेण उद्घोषात् । ब्रह्मणः सर्वज्ञस्य नित्यमुक्तस्य हितमहितं वा नास्तीति, न हिताकरणादिदोषप्रसङ्गः ।

## ॥ अश्मादिवच्च तदनुपपत्तिः ॥२३॥

यथा पृथिवीत्वसामान्याक्रान्तानामप्यश्मनां वज्रवैडूर्यसूर्यकान्तवायसप्रक्षेपणार्हपाषाणानामनेकविधं वैचित्र्यं, यथा चैकपृथिव्याश्रितानामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं, यथा चैकस्याप्यन्नरसस्य लोहितादिकेशनखादिविचित्रकार्यजनकत्वं, तद्वदेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यञ्चोपपद्यते इति, तदनुपपत्तिः, उक्तदोषानुपपत्तिरित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इतरव्यपदेशाधिकरणम् ॥

॥ श्रीः ॥

(८) ॥ अथ उपसंहारदर्शनाधिकरणम् ॥

## ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

ननु असहायस्य ब्रह्मणः जगत्कर्तृत्वं न संभवति । कुतः ? उपसंहारदर्शनात् । दण्डचक्राद्यनेककरणान्युपसंहृत्य घटं करोति कुलालः । तद्वैषम्यादनुपसंहृत्य ब्रह्मणो न कर्तृत्वमिति चेत् । न, कुतः ? क्षीरवद्धि । हिः हेतौ । यथा लोके क्षीरं, दुग्धं वा जलं वा स्वयमेव दधिहिमभावेन परिणमते अनपेक्ष्य बाह्यसाधनं, तथेहापि ।

न च दधिभावाय क्षीरस्य औष्ण्यापेक्षा । स्वत एव क्षीरस्य दधिभावशक्तेः, तस्य पूर्णतासंपादकमात्रत्वात् औष्ण्यस्य । [न च दधिभावे औष्ण्यमपेक्षितमिति वाच्यम् । औष्ण्यस्य दधिभावशक्तेः पूर्णतासम्पादकत्वात् ] ब्रह्म तु परिपूर्णशक्तिकं न किञ्चिदपेक्षते, 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे०-६-८) इति श्रुतेः । तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगाद्विचित्रकार्यजनकत्वं क्षीरादिवत् ।

## ॥ देवादिवदपि लोके ॥२५॥

ननु अचेतनस्य क्षीरादेरसहायस्य कारणत्वेऽपि, चेतनस्य कुलालादेः ससहायस्यैव कारणत्वदर्शनाद्ब्रह्मापि ससहायं स्यादित्यत आह—देवादिवदिति । लोक्यते अनेनेति लोकः शब्दः । यथा लोके देवाः पितरः ऋषयो वा चेतनास्सन्तोऽनपेक्ष्य साधनान्तरं ऐश्वर्यविशेषयोगात्संकल्पमात्रेण अनेकविचित्रकार्यकर्तारो मन्त्रार्थवादेतिहासपुराणादौ श्रूयन्ते, तथेहापि । यथैकस्य सामर्थ्यं दृष्टं तथैव सर्वेषामिति नियमो नास्तीत्यभिप्रायः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उपसंहारदर्शनाधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ कृत्स्नप्रसक्त्यधिकरणम् ॥

## ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥

पुनः प्रकारान्तरेण आक्षिप्यते । कृत्स्नस्य ब्रह्मणः जगदाकारेण परिणामप्रसङ्गः, निरवयवत्वात् । सावयवत्वे तु केनचिदंशेन परिणामः केनचिन्नेति शक्यं वक्तुम् । ब्रह्म तु निरवयवं, 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे०-६-१९) इत्यादि-श्रुतिभ्यः । कृत्स्नपरिणामे च कार्यव्यतिरेकेण कारणस्याभावः प्रसज्येत । तत्परिहाराय सावयवत्वाङ्गीकारे उदाहृतनिरवयवत्वश्रुतिव्याकोपः, इति पूर्वः पक्षः ।

---

## ॥ श्रुतेस्तु शब्दमूलत्वात् ॥२७॥

तुर्नार्थे । न तावत्कृत्स्नप्रसक्तिः । कुतः ? श्रुतेः । ब्रह्म जगदुपादानं श्रूयते । एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते—'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा०-३-१२-६) 'सता सोम्य तदा संपन्नो भवति' (छा०-६-८-१) इत्यादौ ।

ननु श्रुतमपि विकारव्यतिरेकेणावस्थानं कथं संगच्छते ? प्रागुक्तयुक्तेरित्यत आह—'शब्दमूलत्वा'दिति । ब्रह्मस्वरूपस्य शब्दैकसमधिगम्यत्वाद्यथाशब्दं द्वयमपि संगच्छत इत्यर्थः । न हि ब्रह्म क्षीरमिव दध्याकारेण, प्रपञ्चाकारेण परिणमते ।

किन्तु—अविद्यावशादाविद्यकप्रपञ्चाधिष्ठानं सत्सर्वव्यवहारास्पदम् । परमार्थतस्तु निरवयवं प्रपञ्चातीतं चेति न किञ्चिद्विरुद्धमिति भावः ।

---

स्वरूपानुपमर्देनैकस्मिन्ननेकविचित्रकार्ये दृष्टान्तमाह—

## ॥ आत्मनि चैवं विचित्राश्च हि ॥२८॥

हिर्हेतौ । चकारो दृष्टान्तान्तरसमुच्चयार्थः । एवं ब्रह्मणि । यतो विचित्राः सृष्टयः एकस्मिन् स्वप्नदृशि श्रूयन्ते—'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते' (बृ०-४-३-१०) इत्यादि । मायाव्यादिषु च स्वरूपानुपमर्देन अनेकहस्त्यश्वादिसृष्टयो दृश्यन्ते । अतो ब्रह्मण्यपि स्वरूपानुपमर्देन विचित्रकार्यकारणत्वमविरुद्धमिति ।

---

## ॥ स्वपक्षदोषाच्च ॥२९॥

इतरमतेऽप्ययं दोषस्समानः । निरवयवस्य प्रधानस्य जगदुपादानत्वाङ्गीकारात्कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपो वा । यदि कार्यकल्पिता विचित्राः शक्तय एव अवयवस्थानीयास्तर्हि ब्रह्मवादिनोऽपि समानम् । तथा अणुवादिनोऽपि अणुरण्वन्तरेण संयुज्यमानो यदि सर्वात्मना संयुज्येत, तर्हि तत्कार्ये प्रथिमानुपपत्तिः । एकदेशेन संयोगे, निरवयवत्वव्याकोप इति समानम् । तस्माद्ब्रह्मवादिनो न किञ्चिद्दूषणमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कृत्स्नप्रसक्त्यधिकरणम् ॥

---

॥ श्रीः ॥

### (१०) ॥ अथ सर्वोपेताधिकरणम् ॥

## ॥ सर्वोपेता च तद्दर्शनात् ॥३०॥

विचित्रशक्तियोगाद्विचित्रकार्योत्पत्तिरित्युक्तं, तदनेन उच्यते । सर्वोपेता, सर्वशक्तियुक्ता परा देवता । कुतः ? तद्दर्शनात् । 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा०-३-१४-४) इत्यादिश्रुतिषु सर्वशक्तियोगदर्शनादित्यर्थः ।

---

॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥३१॥

विचित्रशक्तियोगेऽपि चक्षुरादिकरणरहितत्वाद्ब्रह्मणः कर्तृत्वं न संभवति, लोके तथा दर्शनात्। 'अचक्षुष्कमश्रोत्रमवागमनः' (बृ०-३-८-८) इत्यादिना विकरणत्वश्रुतेः, इति चेत् अत्र यदुत्तरं तदुक्तमेव । विकरणत्वेऽपि, विचित्रशक्त्या विचित्रकार्योपपत्तिः । 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः'( श्वे०-३-१९ ) इति विकरणस्यापि सर्वकार्यश्रवणात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वोपेताधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ प्रयोजनवत्त्वाधिकरणम् ॥

॥ न प्रयोजनवत्त्वात् ॥३२॥

ब्रह्मणो जगत्कर्तृत्वं न संभवति । कुतः ? प्रयोजनवत्त्वात् । लोके चेतनप्रवृत्तेः प्रयोजनवत्त्वनियमात् । अवाप्तसर्वकामस्य च ब्रह्मणः प्रयोजनाभावान्न प्रवृत्तिसम्भव इति पूर्वः पक्षः ।

---

राद्धान्तमाह—

॥ लोकवत्तु लीलाकैवल्यम् ॥३३॥

तुर्नार्थे । यथा लोके राजतदमात्यादीनां प्रयोजनव्यतिरेकेणापि केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वोच्छ्वासादयः स्वभावादेव भवन्ति, एवमीश्वरस्यापि प्रपञ्चरचना केवललीलामात्रं, न प्रयोजनमपेक्षते । लीलाकैवल्यं, केवललीलामात्रम् ।

यद्यपि राजादीनां लीलास्वपि किञ्चित्प्रयोजनमुत्प्रेक्षितुं शक्यम्, तथापि ब्रह्मणि न तच्छङ्का, अवाप्तसमस्तकामत्वात् । किन्तु विलासमात्रमेव प्रपञ्चरचनेति तात्पर्यार्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रयोजनवत्त्वाधिकरणम् ॥

---

॥ श्रीः ॥

(१२) ॥ अथ वैषम्यनैर्घृण्याधिकरणम् ॥

## ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥३४॥

स्थूणानिखननन्यायेन परिज्ञातार्थदृढीकरणाय पुनराक्षिप्य समाधत्ते। देवादीनत्यन्तसुखिनः, पश्वादीनत्यन्तदुःखिनः, मनुष्यादीन् मध्यमांश्च सृजत ईश्वरस्य वैषम्यप्रसङ्गः। सर्वप्रजासंहाराच्च नैर्घृण्यप्रसङ्गः। अतिस्वच्छस्य ईश्वरस्य वैषम्यनैर्घृण्यायोगात् जगन्निर्मातृत्वं न संभवतीति शङ्कां समाधत्ते—ईश्वरस्य वैषम्यनैर्घृण्ये न स्याताम्। कुतः ? सापेक्षत्वात्, प्राणिकृतपुण्यपापसापेक्षत्वात्। यदि ईश्वरो निरपेक्ष एव विषमं सृजेत् संहरेद्वा, स्याद्वैषम्यं नैर्घृण्यं वा। पुण्यपापसहायस्तु तदनुरूपां सृष्टिं करोतीति नोक्तदोषः। तत्सहायत्वं कुत इत्यत आह—'तथा हि दर्शयति' 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति, 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ०-३-२-१३) इत्यादिश्रुतिस्सापेक्षत्वं दर्शयति। स्मृतिरपि—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ०..गी०-४-११) इत्यादिका।

---

## ॥ न कर्माविभागादिति चेन्नानादित्वात् ॥३५॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा०-६-२-१) इति प्राक्सृष्टेः अविभागावधारणात् तदानीं कर्म नास्ति, अतः कर्मापेक्षया विषमसृष्टिरित्यसङ्गतमिति चेत्। न, अनादित्वात्संसारस्य।

---

अनादित्वं कुत इत्यत आह—

## ॥ उपपद्यते चाप्युपलभ्यते च ॥३६॥

संसारस्यानादित्वमेव उपपद्यते। अन्यथा प्रपञ्चवैषम्यस्य निर्निमित्तत्वप्रसङ्गात्। कर्मान्तरेण न शरीरं, शरीरमन्तरेण च न कर्म। तत्रानादित्वे, बीजाङ्कुरवदन्योन्याश्रयपरिहारस्संभवति। निर्निमित्तत्वे मुक्तानामपि पुनः संसारापत्तिः। तस्मात्संसारस्यानादित्वमुपपद्यते। उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः—

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋ०. सं०-१०-१९०-३) इत्यादिः श्रुतिः । स्मृतिरपि—

'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' (गी०-१५-३) इत्यादिः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वैषम्यनैर्घृण्याधिकरणम् ॥

---

॥ श्रीः ॥

(१३) ॥ अथ सर्वधर्मोपपत्त्यधिकरणम् ॥

## ॥ सर्वधर्मोपपत्तेश्च ॥३७॥

उक्तप्रकारेण कारणधर्माणां सर्वेषां ब्रह्मण्युपपत्तेः ब्रह्म जगत्कारणमिति औपनिषदं दर्शनं निर्बाधमित्युपसंहरति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीमदद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस श्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां द्वितीयाध्यायस्य प्रथमः पादः ॥

॥ स्मृति त्रयोदश सप्तत्रिंशत् ॥

अधिकरणसंख्या—१३

सूत्र संख्या—३७

---

॥ श्रीः ॥

॥ अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

(१) ॥ अथ रचनानुपपत्त्यधिकरणम् ॥

## ॥ रचनानुपपत्तेश्च नानुमानम् ॥१॥

पूर्वस्मिन्पादे स्वपक्षे परोद्भावितदूषणनिरासेन स्वपक्षः स्थिरीकृतः । इदानीं परपक्षदूषणार्थं द्वितीयपाद आरभ्यते । यद्यपि ईक्षत्यधिकरणे सांख्यमतं निरस्तं, तथापि

तत्र प्रधानविषयत्वेन वेदान्तवाक्यानां तदीयव्याख्यानं निरस्तम् । इह तु युक्तिबलेन प्रधानकारणत्वं तैर्यदुपपादितं तन्निरस्यते इत्यपुनरुक्तिः ।

तत्र सांख्या मन्यन्ते—यथा मृदन्विता घटादयो मृत्पूर्वकाः, एवं सुखदुःखमोहात्मतया अन्विता बाह्याध्यात्मिका भेदाः तादृशवस्तुपूर्वकाः । यत्तत् सुखदुःखमोहात्मकं वस्तु तत् त्रिगुणं प्रधानं कारणमङ्गीकर्तव्यम् । तच्च चेतनस्य पुरुषार्थं साधयितुं विचित्रविकारात्मना प्रवर्तते, इति ।

अत्र ब्रूमः—उक्तमनुमानं न संभवति । यद्वा, अनुमीयत इत्यनुमानं प्रधानं जगत्कारणं न संभवति, कुतः ? रचनानुपपत्तेः । अचेतनस्य स्रष्टव्यज्ञानशून्यस्य सृष्टिरचनानुपपत्तेः । लोके शिल्प्यादेश्चेतनस्यैव विचित्रप्रासादादिनिर्माणदर्शनात् । चशब्देन हेतोरसिद्धिं समुच्चिनोति । घटादीनां सुखाद्यात्मकत्वाभावात् । तेषामान्तरत्वप्रसिद्धेः । अतो न प्रधानमचेतनं स्वतन्त्रं जगत्स्रष्टुं समर्थमिति ।

---

## ॥ प्रवृत्तेश्च ॥२॥

चेतनाधीनत्वादिति शेषः । रचनानुकूला या प्रधानस्य प्रवृत्तिः, साम्यावस्थानात्प्रच्युतिः सत्वरजस्तमसामङ्गाङ्गिभावापत्तिः, सापि स्वतन्त्रस्य अचेतनस्य प्रधानस्य न संभवति, चेतनाधिष्ठितस्यैव रथादेः प्रवृत्तिदर्शनात् , इत्यर्थः ।

---

## ॥ पयोऽम्बुवच्चेत्तत्रापि ॥३॥

ननु यथा क्षीरमचेतनं स्वयमेव वत्सविवृद्धये प्रवर्तते, यथा वा जलं स्वयमेव स्यन्दते, तथा प्रधानमपि स्वयमेव प्रवर्तते पयोऽम्बुवदिति चेत् । अत्रोत्तरं ' तत्रापि, इति । ईश्वर एव प्रवर्तक इति शेषः । तस्यापि पक्षकुक्षिनिक्षिप्तत्वान्न दृष्टान्ततेति भावः । "योऽप्सु तिष्ठन्योऽपोऽन्तरो यमयति ' ( बृ०-३-७-४ ) ' एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते ' ( बृ०-३-८-७ ) इति श्रुतेः । ' उपसंहारदर्शनान्नेति चेत् न क्षीरवद्धि ' ( ब्र०. सू०-२-१-२४ ) इत्यत्र बाह्यसाधननैरपेक्ष्येण लोकदृष्ट्या दृष्टान्तीकृतम् । शास्त्रदृष्ट्या तु सर्वत्र ईश्वरनियम्यत्वं न पराणुद्यते ।

---

## ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥४॥

किञ्च—यदि प्रधानं स्वतन्त्रं कार्याकारेण परिणमेत, तर्हि सर्वदा परिणाम एव स्यात् । न तु कदाचिदपि तद्व्यतिरेकः । व्यतिरेकस्यानवस्थितिरभावः । व्यतिरेकाभावप्रसङ्गादित्यर्थः । कुतः ? अनपेक्षत्वात् । चैतन्यानपेक्षत्वात् । सर्वज्ञस्य सर्वशक्तेरीश्वरस्य तु प्राणिकर्मपरिपाकज्ञस्य प्रवृत्त्यप्रवृत्ती संभवतः ।



## ॥ अन्यत्राभावाच्च न तृणादिवत् ॥५॥

ननु यथा तृणपल्लवोदकादिकं क्षीराकारेण निरपेक्षमेव परिणमते, एवं प्रधानमपीति चेन्न । अन्यत्राभावात् । तृणादिकमपि न निरपेक्षं क्षीरीभवति । तथा सति, प्रहीणस्य बलीवर्दादिभुक्तस्य च क्षीरभावप्रसङ्गात् । ततश्च धेन्वादेरन्यत्र तृणादेः क्षीरभावादर्शनान्न तृणादिकं निरपेक्षं क्षीरीभवेदिति न दृष्टान्त इत्यर्थः । 'तृणादिवत्' इति शङ्का । 'अन्यत्राभावात्' इति दृष्टान्तनिरासेन समाधानमित्यनुसन्धेयम् ।



## ॥ अभ्युपगमेऽप्यर्थाभावात् ॥६॥

प्रधानस्य स्वातन्त्र्येण प्रवृत्त्यभ्युपगमेऽपि, अर्थाभावात् प्रयोजनाभावान्न प्रवृत्तिः संभवतीत्यर्थः । प्रधानप्रवृत्तिर्भोगापवर्गान्यतरमात्रार्था, उभयार्था वा ? आद्ये, अपवर्गाभावप्रसङ्गः । द्वितीये, भोगाभावप्रसङ्गः । तृतीयेऽप्यनिर्मोक्षप्रसङ्गः, भोक्तव्यानां प्रकृतिमात्राणामानन्त्यात् । तस्मात्प्रयोजनानिरूपणान्न प्रधानस्य प्रवृत्तिस्संभवतीत्यर्थः । निर्मलस्य तु उदासीनस्य पुरुषस्य न प्रवृत्तिनिवृत्तिसंभव इति भावः ।



## ॥ पुरुषाश्मवदिति चेत्तथापि ॥७॥

यथा कश्चिदपङ्गुः काणः, कश्चिच्चक्षुष्मानेव पङ्गुः, तत्र पङ्गुरपङ्गुमधिष्ठाय प्रवर्तयति, यथा वा अयस्कान्तः स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति चेत् । समाधत्ते—तथापि, दोषबाहुल्यमिति शेषः, पुरुषस्य प्रवर्तकत्वे, तस्यौदासीन्यभङ्गः । प्रधानस्याभ्युपगतस्वातन्त्र्यभङ्गः । अयस्कान्तवत्सन्निधिमात्रेण

प्रवर्तकत्वे, सन्निधिनित्यत्वेन प्रवृत्तिनित्यताप्रसङ्गः । प्रधानस्याचेतनत्वात्, पुरुषस्य चौदासीन्यात्, तयोस्संबन्धानुपपत्तिः । योग्यतावशात् संबन्धे, योग्यताया नित्यत्वाद्-निर्मोक्षप्रसङ्गः ।

सिद्धान्ते तु, परमात्मनः स्वरूपेण औदासीन्यं, अविद्यावशाच्च प्रवर्तकत्वमिति, न किञ्चित्संकटम् ।

---

## ॥ अङ्गित्वानुपपत्तेश्च ॥८॥

किञ्च—गुणानां साम्यावस्था प्रकृतिः । तत्र गुणानामङ्गाङ्गिभावव्यतिरेकेण न महदाद्युत्पत्तिः । स च न स्वतः, अनपेक्षस्वभावव्याकोपात् । न परतः, पुरुषस्य औदासीन्यात् । अतो रचनानुपपत्तिरित्यर्थः ।

---

## ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥९॥

ननु कार्यवशेन गुणाः अन्यथा अनुमीयन्ते । तत्र यथा कार्यं संभवति, तथा गुणानां स्वभावः कल्प्यः । तत्र साम्यावस्थायामपि वैषम्ययोग्या एव गुणा अवतिष्ठन्ते । तेन अङ्गाङ्गिभावसंभवात्कार्योपपत्तिरित्येवंप्रकारेण अनुमीयत इति चेत् । समाधानं । 'ज्ञशक्तिवियोगात्' इति । चैतन्याभावादित्यर्थः । अचेतनानां गुणानां साम्यावस्थायां वैषम्ययोग्यानामपि निमित्तमन्तरेण वैषम्ये, सर्वदा वैषम्यप्रसङ्गः । साम्ये च, सर्वदा साम्यप्रसङ्गः, इत्यङ्गित्वानुपपत्तिदोषस्तदवस्थ एवेति भावः ।

---

## ॥ विप्रतिषेधाच्चासमञ्जसम् ॥१०॥

क्वचित्सप्तेन्द्रियाणि, क्वचिदेकादश । क्वचिन्महतस्तन्मात्रसर्गः, क्वचिदहंकारात् । क्वचित् त्रीण्यन्तःकरणानि, क्वचिदेकमिति, परस्परविप्रतिषेधात्, श्रुतिस्मृतिविप्रतिषेधाच्च असमञ्जसं सांख्यदर्शनमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां रचनानुपपत्त्यधिकरणम् ॥

---

|| श्रीः ||

(२) || अथ महद्दीर्घाधिकरणम् ||

**|| महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ||११||**

सांख्यमतं निरस्य, परमाणुवादं निराचिकीर्षुः, प्रथमं सिद्धान्ते तदुद्भावितं दोषं तत्प्रक्रियादृष्टान्तेनैव समाधत्ते । कारणगुणानां कार्यगुणारम्भकत्वात्, चेतनस्य ब्रह्मणो जगदुपादानत्वे, प्रपञ्चे चैतन्यरूपगुणान्तरोत्पत्तिप्रसङ्ग इति तदुद्भावितो दोषः ।

तस्य सूत्रेण परिहारः—यथा परिमण्डलात्परमाणोः ह्रस्वमणु च द्व्यणुकं जायते, न परिमण्डलं, यथा वा ह्रस्वादणोश्च द्व्यणुकान्महद्दीर्घञ्च त्र्यणुकादिकं जायते, नाणु न ह्रस्वं, एवं चेतनादचेतनोत्पत्तौ किं बाधकमित्यर्थः । सर्वेषां कारणगुणानां कार्यगुणान्तरारम्भकत्वनियमाभावाच्चैतन्यमपि कार्ये चैतन्यान्तरं नारभते चेत् किं तव बाधकमिति भावः ।

परमाणौ पारिमाण्डल्यपरिमाणम् । तत्तु नारम्भकम् । द्व्यणुके तद्विजातीयपरिमाणाङ्गीकारात् । द्व्यणुके अणुत्वह्रस्वत्वे अप्यनारम्भके । त्र्यणुकादौ महत्वदीर्घत्वयोः विजातीययोरङ्गीकारादिति तत्प्रक्रिया । सूत्रे वतेरधस्तादण्वित्यध्याहार्यम् । तथा च यथाक्रमं ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुवदिति सूचनाय सूत्रे वाशब्दः ।

|| इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां महद्दीर्घाधिकरणम् ||

---

|| श्रीः ||

(३) || अथ परमाणुजगदकारणत्वाधिकरणम् ||

**|| उभयथापि न कर्मातस्तदभावः ||१२||**

इदानीं परमाणुवादो निरस्यते । परमाण्वोः कर्मणा संयोगे द्व्यणुकमुत्पद्यते । द्व्यणुकादिभ्यश्च त्र्यणुकादिकम् । परमाणुकर्म चादृष्टविशेषादिति तत्प्रक्रिया ।

तत्र परमाणुषु कर्मजनकमदृष्टमात्मसमवेतं, अणुसमवेतं वा? उभयथापि परमाणुषु न कर्म । अतः कर्माभावात्परमाणुद्वयसंयोगाभावः । तदभावे च सृष्ट्यभाव इत्यर्थः । अदृष्टस्याचेतनस्य स्वतः प्रवर्त्यप्रवर्तकत्वयोः अयोगात् । योगे वा, अणुसमवेतत्वपक्षे सर्वदा कर्मोत्पद्येत, अपेक्षणीयान्तराभावात् । आत्मसमवाये, संबन्धाभावान्न कर्म ।

परंपरासंबन्धे, तस्य सार्वदिकत्वात् सर्वदा कर्मप्रसङ्ग इति, नियतकालसृष्टिर्न स्यात् । एवं प्रलयेऽपि योज्यम् । संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा उभयथापि न कर्मातस्तदभावः सृष्टिप्रलययोरभाव इति ।

यद्वा, परमाणुकर्मणः सनिमित्तत्वे अनिमित्तत्वे चोभयथापि न नियतकालं कर्म, अतः तदभावः सृष्ट्यभाव इति सूत्रार्थः ।

न च ईश्वरस्य सृष्ट्यादिकर्तृत्वाङ्गीकारान्नियतकालोपपत्तिः । तस्यापि नित्यज्ञानादिमत्त्वेन सर्वदा कार्यप्रसङ्गेन, अदृष्टसाचिव्येनैव नैयत्यस्याभिमतत्वात् । सिद्धान्ते तु 'लोकवत्तु लीलाकैवल्यम्' (ब्र०-सू०-२-१-३३)इति सृष्टिरुपपादितैव श्रुतिवशादिति तात्पर्यम् ।

---

## ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१३॥

कार्यकारणयोः समवायाभ्युपगमाच्च परमाणुकारणता न संभवति । कुतः ? साम्यादनवस्थितेः । यदि कारणादत्यन्तभिन्नं कार्यं कारणे समवेयात्, तर्हि समवायोऽपि कारणाद्भिन्नः सन् समवायान्तरेण समवेयात्, अत्यन्तभिन्नत्वसाम्यात् । इष्टापत्तौ च तत्राप्येवमित्यनवस्थाप्रसङ्गः । संबन्धत्वात्सम्बन्धान्तरनैरपेक्ष्ये, संयोगोऽपि तथा स्यात् । तस्मादेकासिद्धौ सर्वासिद्धेः परमाणुकारणतैवाप्रामाणिकी इति ।

---

## ॥ नित्यमेव च भावात् ॥१४॥

किञ्च—परमाणवः प्रवृत्तिस्वभावाः,निवृत्तिस्वभावाः, उभयस्वभावाः, अनुभयस्वभावा वा ? आद्ये, प्रवृत्तेः नित्यमेव भावात् प्रलयाभावप्रसङ्गः । द्वितीये, निवृत्तेः नित्यमेव भावात्सर्गाभावप्रसङ्गः । तृतीये, विरोधः । चतुर्थे, अदृष्टवशात्प्रवृत्तिनिवृत्त्यङ्गीकारे, अदृष्टसन्निधानस्य नित्यत्वात् नित्यप्रवृत्तिप्रसङ्गः । तस्मात्परमाणुकारणतावादो न संभवतीति ।

---

## ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१५॥

किञ्च—परमाणूनां पराभिमतं नित्यत्वं नोपपद्यते । अयमेव विपर्ययः । कुतः ?

रूपादिमत्त्वात् । यद्यद्रूपादिमत्तदनित्यमिति घटादौ दर्शनात् , रूपादिहीनाद्ब्रह्मण एव परमाणूनामुत्पत्तिप्रसङ्गान्न तेषामादिकारणत्वमिति भावः ।

---

॥ उभयथा च दोषात् ॥१६॥

किञ्च—रूपादिचतुर्गुणा पृथिवी स्थूला । त्रिगुणा आपस्सूक्ष्माः । द्विगुणं तेजः सूक्ष्मतरम् । एकगुणो वायुः सूक्ष्मतमः । इत्येवं भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मतारतम्येन उपलभ्यन्ते । तद्वत्परमाणवोऽप्युपचितापचितगुणा अभ्युपगम्यन्ते, न वा ? उभयथा च दोषात् , पक्षद्वयेऽपि दोषसंभवान्नाणूनां कारणत्वमित्यर्थः । गुणोपचयकल्पने, सावयवत्वप्रसङ्गः । कार्ये तथा दर्शनात् । उपचयापचयकल्पने तु, सर्वेषां साम्यार्थं चतुर्गुणत्वं वा कल्प्यते, एकगुणत्वं वा ? आद्ये, वाय्वादावपि गन्धाद्युपलब्धिप्रसङ्गः । द्वितीये, पृथिव्यादावपि रूपाद्यनुपलब्धिप्रसङ्गः । कार्यानुरोधाद्यथाकार्यं उपचयादिकल्पने च अनित्यत्वप्रसङ्गः इत्यादिदोषो द्रष्टव्यः ।

---

॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥१७॥

वेदविद्भिः मन्वादिभिः केनचिदप्यंशेन परमाणुकारणवादस्यापरिग्रहादस्वीकारादप्यत्यन्तमनपेक्षा, अत्यन्तापेक्षा वेदवादिभिर्न कर्तव्येत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां परमाणुजगदकारणत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ समुदायाधिकरणम् ॥

॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥१८॥

अर्धवैनाशिकवैशेषिकनिरासानन्तरं वैनाशिकत्वसाम्यात्सर्ववैनाशिकमतं निरस्यते । तत्र केचित्सर्वास्तित्ववादिनः । तत्रापि, प्रत्यक्षेण ज्ञानेन विषयोऽनुमेय इति सौत्रान्तिकाः । वैभाषिकास्तु उभयप्रत्यक्षत्ववादिनः । अन्ये तु ज्ञानमात्रास्तित्ववादिनः । अन्ये सर्वशून्यत्ववादिनः । तत्र सर्वास्तित्ववादिनस्तावन्निरस्यन्ते ।

ते खल्वेवमाहुः—पृथिव्यादिचतुष्टयपरमाणवः पृथिव्यादिभावेन संहन्यन्ते। अवयवातिरिक्तावयवी नाङ्गीक्रियते। एवं रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः अध्यात्मं सर्वव्यवहारास्पदत्वेन संहन्यन्ते। रूप्यन्ते एभिः इति, रूप्यन्ते इति च, व्युत्पत्त्या सविषयेन्द्रियाणि रूपस्कन्धः, स्कन्धः प्रभेद इत्यर्थः। अहमित्याकारो रूपादि-विषय इन्द्रियादिजन्यश्च निर्विकल्पकरूपो विज्ञानस्कन्धः। दुःखाद्यवस्था चित्तस्य वेदना-स्कन्धः। डित्थः, कुण्डली, गौरो, ब्राह्मणो, गच्छतीत्येवंरूपः सविकल्पकप्रत्ययः संज्ञा-स्कन्धः। रागादयः क्लेशाः, उपक्लेशाश्च मदमानादयः, धर्माधर्मौ चेति, संस्कारस्कन्धः। इति।

तत्रेदमभिधीयते—उभयहेतुकेऽपि समुदाये, बाह्ये पृथिव्याद्यणुहेतुके, रूपविज्ञाना-दिस्कन्धहेतुके चाध्यात्मिके अङ्गीक्रियमाणे, तदप्राप्तिः, तस्य समुदायस्यायुक्तता। समुदा-यकर्तुश्चेतनस्य स्थिरस्य तैरनङ्गीकारादित्याशयः।

---

॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥१९॥

तन्मते हेतूपनिबन्धात् प्रत्ययोपनिबन्धाद्वा कार्योत्पादः। एकस्मादेव कार्यो-त्पादो हेतूपनिबन्धः। यथा बीजादङ्कुरः, अङ्कुरात्पत्रं, पत्रात्काण्डं, काण्डान्नालं, नालाद्गर्भः, गर्भाच्छूकः, शूकात्पुष्पं, पुष्पात्फलमिति। कारणसमुदायात् कार्योत्पादः प्रत्ययोपनिबन्धः। यथा दण्डचक्रचीवरकादिभिः घटोत्पत्तिः। एवं अविद्यादोषप्रवृत्तिजन्मादीनां बीजाङ्कुरवत्परस्प-रहेतुत्वेनैव संसारयात्रोपपत्तेर्न चेतनापेक्षा। अविद्या मिथ्याज्ञानम्। जन्माद्यनुपपत्त्यैव स्कन्धानां संघातभावोऽप्याक्षिप्यत इति, न तदर्थमपि चेतनापेक्षा।

एतन्निरासार्थमिदं सूत्रम्। चेतनमन्यमनपेक्ष्य स्कन्धानामणूनाञ्च इतरेतरप्रत्यय-त्वात् इतरेतरमिलितत्वात् कार्यसिद्धिरिति चेत्, न अचेतनानां कार्योत्पत्तिमात्रे निमित्त-त्वात् संघाते चेतनापेक्षा अस्त्येवेति सूत्रार्थः।

---

॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥२०॥

परमते क्षणिकानां हेतुहेतुमद्भावोऽपि न संभवतीत्येतदर्थमिदं सूत्रम्।

किञ्च उत्तरक्षणोत्पादे पूर्वक्षणस्य हेतुत्वं न संभवति। कुतः? पूर्वनिरोधात् पूर्वस्य नाशादित्यर्थः।

न च पूर्ववर्तित्वमात्रं हेतुताप्रयोजकं, न कार्यसहभावोऽपीति वाच्यम् । उपादानस्य मृदादेः कार्यानुस्यूतस्यैव हेतुत्वदर्शनादित्याशयः ।

---

॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥

क्षणभङ्गवादे पूर्वक्षणस्य नष्टत्वाद्धेतुत्वं न संभवतीत्युक्तम् । अथासत्येव हेतौ फलोत्पत्तिं ब्रूयात्, तर्हि प्रतिज्ञोपरोधः प्रतिज्ञाविरोधः, तेनापि इन्द्रियविषयादीनां ज्ञानहेतुत्वाङ्गीकारात् । अन्यथा, हेतुत्वसिद्ध्यर्थं कारणस्य कार्यकालसत्त्वाङ्गीकारे, कार्यकारणयोर्यौगपद्यं एककालवृत्तिता स्यात् । तदापि सर्वत्र क्षणिकत्वप्रतिज्ञोपरोध एवेति भावः ।

---

॥ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥२२॥

वैनाशिकाः कल्पयन्ति—त्रयमिन्नं क्षणिकं, त्रयञ्च प्रतिसंख्याप्रतिसंख्यानिरोधावाकाशञ्चेति । भावप्रातिकूल्येन संख्या ज्ञानं प्रतिसंख्या । 'इदं नाशयिष्यामि' इति बुद्धिपूर्वको भावनाशः प्रतिसंख्यानिरोधः । तद्विपरीतोऽप्रतिसंख्यानिरोधः । आवरणाभाव आकाशं इति ।

तत्र आकाशं उत्तरत्र दूषयिष्यति । अत्र निरोधद्वयं दूषयति । प्रतिसंख्याप्रतिसंख्यानिरोधयोः अप्राप्तिः, अयुक्तता । कुतः ? अविच्छेदात्, सन्तानस्येति शेषः । सन्तानस्य वा नाशः, सन्तानिनो वा ? नाद्यः, तस्य नाशासंभवात् । सन्तानिव्यतिरिक्तसन्तानाभावेन अन्त्यसन्तानिनाश एव तन्नाशो वाच्यः, एवं चान्त्यस्य अन्यं प्रत्यजनकतया असत्त्वं स्यात् । तन्मते जनकस्यैव सत्त्वात् । तथा चान्त्यस्यासत्त्वे, तज्जनकस्योपान्त्यस्याप्यसत्त्वम् । एवं तत्पूर्वपूर्वस्येति, सन्तानस्यासत्त्वान्न तस्य नाशः । निरुपाख्यस्यापि नाशासंभवात् । सत्त्वाभ्युपगमे च सन्तानाविच्छेदान्न नाशसंभवः ।

न द्वितीयः, क्षणिकमते उत्पन्नमात्रस्य स्वत एव ध्वस्तत्वेन पुरुषव्यापारानपेक्षणात् ।

किञ्च—पक्षद्वयेऽपि निरन्वयध्वंसो न संभवति, कारणात्मनावस्थानस्योपपादितत्वात् । तस्मान्निरोधद्वयस्यानुपपत्तिः ।

---

॥ उभयथा च दोषात् ॥२३॥

किञ्च— योऽयं संसारनिदानाविद्यानिरोधः, स किं निर्हेतुकः, सहेतुको वा ? नाद्यः,मुमुक्षूणां स्वमते शमदमश्रवणाद्युपदेशानर्थक्यप्रसङ्गात् । न द्वितीयः, सर्वस्यापि निर्हेतुकनाशाभ्युपगमविरोधात् । तदेवमुभयथापि दोषादयुक्तमिदं दर्शनम् ।

---

॥ आकाशे चाविशेषात् ॥२४॥

यच्च तैराकाशस्य निरुपाख्यत्वमुच्यते, तदनेन दूष्यते । आकाशे च न निरुपाख्यत्वं, वस्तुत्वप्रतीतेरविशेषात् । 'आत्मन आकाशस्संभूतः' ( तै०-२-१ ) इत्यादिश्रुत्या, शब्दलिङ्गकानुमानेन च तस्य वस्तुत्वसिद्धेः ।

---

॥ अनुस्मृतेश्च ॥२५॥

सर्वस्यापि क्षणिकत्वमङ्गीकुर्वन्वैनाशिक आत्मनोऽपि क्षणिकत्वमङ्गीचकार । तदनुपपन्नम् । अनुस्मृतेः । अनुभवानन्तरं स्मरणं अनुस्मृतिः । सा क्षणिकविज्ञानसन्ततेरात्मत्वे न संभवति, अनुभवितुर्ज्ञानस्य नष्टत्वात् । अन्यानुभूते अन्यस्य स्मरणायोगात् । चकारेण 'अहमद्राक्षमिदं पश्यामि' इत्यादिप्रत्यभिज्ञां समुच्चिनोति ।

---

॥ नासतोऽदृष्टत्वात् ॥२६॥

क्षणिकस्य कार्यसहभावाभावेन उपादानत्वासंभवात्, क्षणिकस्य कारणत्वमभ्युपगच्छता अभावस्यैव कारणत्वमभ्युपगन्तव्यमिति आपाद्य, दूषणमुक्तम् । असतोऽभावाद्भावोत्पत्तिरिति वैनाशिकमतं न युक्तम् । कुतः ? अदृष्टत्वात् । असतः शशविषाणादेः कारणत्वादर्शनादित्यर्थः ।

न च सहकारिविशेषसहकृतादभावादपि भावोत्पत्तिः । सहकारिण एव कारणत्वप्रसङ्गात् । प्रागभावस्तु सिद्धान्ते नाङ्गीक्रियते । प्रतिबन्धकाभावश्च न कारणमिति भावः ।

---

॥ उदासीनानामपि चैवं सिद्धिः ॥२७॥

यदि चाभावाद्भावोत्पत्तिरङ्गीक्रियेत, एवं सत्युदासीनानामप्रयतमानानामपि जनानां समीहितसिद्धिः स्यात् । अभावस्य सुलभत्वात् । तथाच, कृष्यादिव्यापारं विनैव सस्यादिसिद्धिः स्यात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां समुदायाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ उपलब्ध्यधिकरणम् ॥

॥ **नाभाव उपलब्धेः** ॥२८॥

एवं बाह्यार्थवादिनौ सौत्रान्तिकवैभाषिकौ निरस्य, इदानीं बाह्यार्थापलापिकेवलविज्ञानवादिनिरासार्थमिदं सूत्रम् । बाह्यार्थस्याभावो न संभवति । कुतः ? उपलब्धेः, घटपटादीनामुपलभ्यमानानां नापह्नवः शक्य इत्यर्थः ।

ननु यथा स्वप्ने रथगजादिज्ञानानां निरालम्बनत्वं, तथा जाग्रद्बोधस्यापि भविष्यतीत्यत्राह—

---

॥ **वैधर्म्याच्च न स्वप्नादिवत्** ॥२९॥

स्वप्नादितुल्यता जाग्रद्बोधस्य नास्ति तयोर्वैधर्म्यात् । स्वप्नादेर्बाध्यत्वात् जाग्रद्बोधस्याबाध्यत्वाद्वैधर्म्यं द्रष्टव्यम् । अभ्युपगम्य च स्वाप्नादेः निरालम्बनत्वमेतदुक्तम् । अनिर्वचनीयालम्बनन्तु तत्राप्यस्त्येवेति मन्तव्यम् ।

---

॥ **न भावोऽनुपलब्धेः** ॥३०॥

यथा वासनावैचित्र्यादेव स्वप्नादिज्ञानवैचित्र्यं, तद्वद्विषयं विनापि वासनावशादेव जाग्रद्बोधवैचित्र्यं भविष्यतीति, यत्परैरुच्यते, तदनेन निरस्यते । न भावो वासनानामुपपद्यते । कुतः ? अनुपलब्धेः । बाह्यार्थोपलब्धेस्त्वया अनङ्गीकारादित्यर्थः । बाह्यार्थोपलब्धिजन्याः संस्काराः तदभावे न स्युः । 'जाग्रदर्थोपलब्धिजन्यत्वात्स्वप्नजनकवासनाना-

मपि नार्थोपलब्धिव्यभिचारः। लोके वासनानां संस्काररूपाणां साश्रयत्वदर्शनात्, तन्नये च आश्रयाभावात्, न वासनानां संभवः।

---

॥ क्षणिकत्वाच्च ॥३१॥

यदपि आलयविज्ञानं वासनाश्रयत्वेन कल्पितं, तदपि क्षणिकत्वाभ्युपगमान्न तद्यो-ग्यमित्यर्थः।

---

शून्यवादनिरासेऽप्येतान्येव सूत्राणि योजनीयानि। तथाहि—

॥ नाभाव उपलब्धेः ॥

नाभावो ज्ञानार्थयोः प्रमाणैरुपलब्धेरिति प्रथमसूत्रार्थः।

॥ वैधर्म्याच्च न स्वप्नादिवत् ॥

स्वप्नवन्न शून्यत्वं जाग्रति संभवति, ततो वैधर्म्यस्योक्तत्वादित्यर्थः। वस्तुतस्तत्रापि अनिर्वचनीयविषयस्य ज्ञानस्य च स्वीकारान्न दृष्टान्तता।

॥ न भावोऽनुपलब्धेः ॥

अतात्विकत्वं प्रपञ्चस्य व्यवस्थापयितुं अबाधितमधिष्ठानं वस्तुभूतं वाच्यम्। तस्य च भावस्तव मते न संभवति। प्रमाणैस्तदनुपलब्धेः। त्वया सर्वशून्यत्वाङ्गीकारादित्यर्थः।

॥ क्षणिकत्वाच्च ॥

अस्मिन् सूत्रे उपदेशादिति पूरणीयम्। तेन क्षणिकपदार्थसत्त्वोपदेशात् सर्व-शून्यत्वोपदेशाच्च, व्याहतवचनस्सुगतो नादेयवचन इत्यर्थः।

---

॥ सर्वथानुपपत्तेश्च ॥३२॥

वैनाशिकमतं न समञ्जसं, सर्वथा शब्दतश्च अर्थतश्चानुपपत्तेरित्यर्थः। ‘ मिह सेचने ’ इत्यस्य निष्ठान्तस्य मीढमिति सिद्ध्यति, मिद्धमित्यपशब्दः। पोषणमशनदानं, धापनं

पानदानं, ततश्च पोषणधापने बौद्धनां धर्मः * । 'मिद्धं' 'पोषधं' इत्यादयोऽपशब्दाः स्वशास्त्रव्यवहृता अनुपपन्नाः । आलयविज्ञानस्य क्षणिकत्वमभ्युपेत्य, वासनाश्रयत्वाङ्गीकारोऽनुपपन्नः, वासनाश्रयत्वे स्थायित्वप्रसङ्गादित्यूह्यम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उपलब्ध्यधिकरणम् ॥

॥ श्रीः ॥

(६) ॥ अथ एकस्मिन्नसंभवाधिकरणम् ॥

## ॥ नैकस्मिन्नसंभवात् ॥३३॥

एवं चतुर्विधं बौद्धमतं निरस्तम् । इदानीं दिगम्बरमतं निरस्यति । ते खल्वेवमाहुः—जीवोऽजीवश्चेति द्वावर्थौ । जीवश्चेतनः शरीरपरिमाणः सावयवः । अजीवः षड्विधः । तत्राद्यः पृथिव्यादिः । अन्ये आस्रवसंवरनिर्जरबन्धमोक्षाः पञ्च पदार्थाः । आस्रवति गच्छत्यनेन विषयान् जीव इत्यास्रवः इन्द्रियाणि । संवृणोति विवेकज्ञानमिति संवरोऽविवेकादिः । निश्शेषेण जीर्यत्यनेन कामादिरिति निर्जरः तप्तशिलारोहणादिकं तपः । कर्मणा सङ्गः बन्धः । कर्मनिर्मुक्तस्य जीवस्य सततोर्ध्वगमनं मोक्षः । एते सप्त पदार्थाः सप्तभङ्गीनयेन व्यवस्थाप्यन्ते । 'स्यादस्ति' 'स्यान्नास्ति' 'स्यादस्ति च नास्ति च' 'स्यादवक्तव्यम्' 'स्यादस्ति चावक्तव्यश्च' 'स्यान्नास्ति चावक्तव्यश्च' 'स्यादस्ति च नास्ति चावक्तव्यं च' इति सप्तभङ्गीनयः ।

अस्यार्थः—स्याच्छब्दः कथंचिदर्थो निपातः । प्रतिवादिनश्चतुर्विधाः—सद्वादिनः, असद्वादिनः, सदसद्वादिनः, अनिर्वचनीयवादिनश्चेति ।

तत्र अनिर्वचनीयवादिनोऽपि पुनश्च सदादिविषयत्वमेलनेन त्रिविधाः । अन्यवादिनः केवलसदादिविषयत्वेन त्रिविधाः । एवं सप्तविधान्वादिनः प्रति,सप्तविधा न्यायाः प्रयोक्तव्याः । तत्र यदा सद्वादी आर्हतं पृच्छति 'तव मते किं मोक्षोऽस्ति' इति, तत्रार्हतः उत्तरं

---

* "पोषधशब्दः उपवासे बौद्धैः प्रयुज्यते—'स्नातः शुचिवस्त्राभरणः पोषधं विदधीत' इति । स च लोकैरप्रयुक्तत्वादपशब्दः, इति प्रतिभाति" इति वेदान्तकल्पतरौ विद्यते ।

ददाति 'स्यादस्ति' इति। कथञ्चिदस्ति ईषदस्तीत्यर्थः। एवमन्यान्वादिनः प्रति 'स्यान्नास्ती'त्याद्युत्तराण्युदाहर्तव्यानि। ततः सर्वे वादिनः तूष्णींभूता नोत्तरं प्रतिपद्यन्ते। ततोऽस्य सप्तभङ्गीनयस्य विद्यमानत्वात् जीवादिसप्तपदार्थसिद्धौ किमाश्चर्यमिति।

अत्र ब्रूमः—सप्तभङ्गीनयोऽयं न युक्तः। कुतः? एकस्मिन्नर्थे सदसत्त्वयोरसंभवात्। एकस्य जीवस्य सद्वादिनं प्रति सद्रूपत्वस्य, असद्वादिनं प्रति असद्रूपत्वस्य च प्रतिपादयितुमशक्यत्वात्।

---

॥ एवं चात्माकात्स्न्यर्म् ॥३४॥

किञ्च— एकस्मिन्धर्मिणि यथा विरुद्धधर्मासम्भवो दोषः, एवमात्मनो जीवस्याकात्स्न्र्यं च प्रसज्येत। शरीरपरिमाणत्वे जीवस्याकात्स्न्र्यं असर्वगतत्वं स्यात्। तथा च, घटादिवदनित्यत्वप्रसङ्गः।

किञ्च—मनुष्यशरीरपरिमाणस्य जीवस्य कर्मविपाकवशाद्धस्तिशरीरप्राप्तौ कृत्स्नं हस्तिशरीरं जीवो न व्याप्नुयात्। पुत्तिकादिशरीरप्राप्तौ च न कृत्स्नपुत्तिकादिशरीरे संमीयेत, अतिसूक्ष्मत्वात्पुत्तिकाशरीरस्येत्यकात्स्न्र्यं दोषः।

---

॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥३५॥

पर्यायात्क्रमादवयवोपचयापचयाङ्गीकारात् स्थूलसूक्ष्मशरीरेषु कात्स्न्र्यस्याविरोध इत्यपि न च। कुतः? विकारादिभ्यः। विकारादिदोषप्रसङ्गादित्यर्थः। अवयवोपचयापचयाङ्गीकारे विक्रियावत्त्वप्रसङ्गः, ततोऽनित्यत्वप्रसङ्गेन बन्धमोक्षादिव्यवस्था न स्यात्।

---

॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥

अपि च—अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमाश्रीयते जैनैः। ततश्च, उभयोराद्यमध्यमकालयोरपि परिमाणस्य नित्यत्वादविशेषः। अवयवोपचयापचयरूपविशेषाभावप्रसङ्गः। अन्त्यपरिमाणस्य नित्यत्वमुत्पत्तिमत्त्वे न संभवति। अतः पूर्वकाले तदेवाङ्गीकार्यम्। न परिमाणान्तरम्। ततश्च यच्छरीरे मोक्षः, तच्छरीरपरिमाण एव सर्वदा आत्मेति निश्चयान्नावयवोपचयादिना कात्स्न्र्योपपादनं युक्तमित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां एकस्मिन्नसंभवाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ पाशुपताधिकरणम् ॥

## ॥ पत्युरसामञ्जस्यात् ॥३७॥

अत्र वैशेषिकादयः ईश्वरस्य केवलनिमित्तकारणत्वमेव मन्यन्ते, तन्निरस्यते। पत्युः ईश्वरस्य प्रधानपरमाण्वाद्यधिष्ठातृत्वेन जगत्कारणत्वं न संभवति। कुतः? असामञ्जस्यात्। अनुपपत्तेरित्यर्थः। स्वतन्त्रेश्वरस्य जगत्कर्तृत्वे वैषम्यनैर्घृण्यप्रसङ्गः। कर्मसापेक्षत्वे त्वदृष्टद्वारा जीवानामेव कर्तृत्वसंभवादीश्वरानुमाने अर्थान्तरता। श्रुत्या उपपादने, तदुपादानत्वमपि तत एव चाङ्गीकार्यमिति केवलनिमित्तत्वानुपपत्तेरिति।

---

## ॥ संबन्धानुपपत्तेश्च ॥३८॥

किञ्च—प्रधानादिना ईश्वरस्य न संयोगः संबन्धः। द्वयोरपि व्यापकत्वान्निरवयवत्वाच्च। समवायश्च अवयवावयव्यादिव्यतिरिक्तत्वान्नास्ति। तस्मात्संबन्धाभावान्नाधिष्ठातृत्वसंभवः। सिद्धान्ते तु तादात्म्यसंबन्धसत्त्वान्नानुपपत्तिः।

---

## ॥ अधिष्ठानानुपपत्तेश्च ॥३९॥

अधिष्ठितिरधिष्ठानम्। प्रधानादेरप्रत्यक्षस्य ईश्वराधिष्ठेयत्वमपि न संभवति। मृदादेः प्रत्यक्षस्यैव कुलालाद्यधिष्ठेयत्वदर्शनात्।

---

## ॥ करणवच्चेन्न भोगादिभ्यः ॥४०॥

ननु यथा इन्द्रियादेः करणस्य अप्रत्यक्षत्वेऽपि चेतनाधिष्ठेयत्वं, तथा प्रधानादेरपि ईश्वराधिष्ठेयत्वमिति चेन्न। कुतः? भोगादिभ्यः, भोगादिप्रसङ्गादित्यर्थः। करणग्रामस्य अधिष्ठातृजीवभोगसाधनत्वात्तदधिष्ठेयत्वमङ्गीक्रियते। तद्वत्प्रधानादेरपि ईश्वराधिष्ठेयत्वे ईश्वरभोगसाधनत्वप्रसङ्गः। आदिशब्देन सर्वसंसारधर्मसंग्रहः।

सूत्रद्वयस्यान्यथा व्याख्या—

अधिष्ठानानुपपत्तेश्च ॥

अधिष्ठानं शरीरं इन्द्रियाधिष्ठानत्वात् । तस्यानुपपत्तेरित्यर्थः । पूर्वमधिष्ठितिरधिष्ठानम् । शरीरिण एव कुलालादेः कर्तृत्वदर्शनादीश्वरस्यापि शरीरमङ्गीकर्तव्यं, तच्च न संभवति । प्राक्सृष्टेः शरीरस्यासंभवादिति ।

॥ करणवच्चेन्न भोगादिभ्यः ॥

किञ्च—करणमिन्द्रियग्रामोऽत्रास्तीति करणवत् शरीरम् । तच्चेदीश्वरस्याङ्गीक्रियते, एवमपि नोपपद्यते । जीववद्भोगादिप्रसङ्गात् । पूर्वमिवार्थे वतिः । इदानीं मतुप् ।

---

॥ अन्तवत्त्वमसर्वज्ञता वा ॥४१॥

किञ्च प्रधानपुरुषेश्वराणां संख्यास्वरूपपरिमाणे ईश्वरेण ज्ञायेते, न वा ? आद्ये, प्रत्यक्षेण इयत्तापरिच्छिन्नत्वात् घटादिवत् त्रयाणामप्यन्तवत्त्वं विनाशित्वं स्यात् । द्वितीये, ईश्वरस्यासर्वज्ञतापत्तिः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पाशुपताधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ उत्पत्त्यसंभवाधिकरणम् ॥

॥ उत्पत्त्यसंभवात् ॥४२॥

भागवता मन्यन्ते—भगवानेवैको वासुदेवः परमात्मा निरञ्जनज्ञानस्वरूपः परमार्थतत्वम् । स चतुर्धा आत्मानं प्रविभज्य प्रतिष्ठितः । वासुदेवव्यूहरूपेण, संकर्षणव्यूहरूपेण, प्रद्युम्नव्यूहरूपेण, अनिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मा । संकर्षणो नाम जीवः । प्रद्युम्नो नाम मनः । अनिरुद्धो नामाहङ्कारः । तेषां वासुदेवः परा प्रकृतिः । संकर्षणादयः कार्यमिति ।

इदं निरस्यते । वासुदेवाज्जीव उत्पद्यत इति न संभवति । तस्योत्पत्त्यसंभवात् । तथात्वे, अनित्यत्वप्रसङ्गेन भगवत्प्राप्तिलक्षणो मोक्षो न स्यात् । 'नात्माऽश्रुतेः' (ब्र०-सू०-२-३-१७) इत्यत्र जीवोत्पत्तेः निरसिष्यमाणत्वाच्च ।

---

॥ न च कर्तुः करणम् ॥४३॥

किञ्च—कर्तुः जीवात् करणं मन उत्पद्यते इत्यसङ्गतम् । देवदत्तादेः कर्तुः परश्वादिकरणस्योत्पत्त्यदर्शनात् । न च अस्मिन्नर्थे श्रुतिरस्ति ।

---

॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥४४॥

यद्येतद्दोषपरिहाराय संकर्षणादयोऽपि सर्वे ईश्वरा एव विज्ञानैश्वर्यबलादिशालिनोऽभ्युपगम्येरन्, तथापि, तदप्रतिषेधः । उत्पत्त्यसंभवदोषस्य अप्रतिषेधः अनिरासः । प्रकारान्तरेण स एव दोषः अत्रापि लगतीत्यर्थः । तथा हि—यदि परस्परभिन्ना एवैते वासुदेवादयः तुल्यधर्माणः अङ्गीक्रियेरन्, तदा अनेकेश्वरकल्पनानर्थक्यम् । यदि च एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तदाप्युत्पत्त्यसंभवः । न हि वासुदेवात्संकर्षणस्य उत्पत्तिस्संभवति । संकर्षणाच्च प्रद्युम्नस्य । प्रद्युम्नाच्चानिरुद्धस्य, अन्योन्यातिशयाभावात् । मृद्घटादेरन्योन्यातिशयवत्त्वात्कार्यकारणभावदर्शनात् । वासुदेवादीनां ज्ञानैश्वर्यादितारतम्यस्य तैरनङ्गीकारात् । अङ्गीकारे तु प्रागुक्त उत्पत्त्यसंभवः इत्यभिप्रायः ।

---

॥ विप्रतिषेधाच्च ॥४५॥

भागवतानां ग्रन्थेषु ज्ञानादीनामात्मगुणत्वं क्वचिदुक्तम् । क्वचिच्च ज्ञानादीनामात्मत्वमिति एको विप्रतिषेधः । वेदविप्रतिषेधाच्च । चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्माच्छ्रुतिविरोधस्य स्वयमेवाङ्गीकृतत्वादिदं भागवतं मतमसङ्गतमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उत्पत्त्यसंभवाधिकरणम् ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंस(महा)महोपाध्याय श्रीमत्तिरुमलार्यवर्यसूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

॥ रचनाष्टौ पञ्चचत्वारिंशत् ॥

अधिकरणसंख्या—८

सूत्रसंख्या—४५

---

॥ श्रीः ॥

॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

(१) ॥ अथ वियदधिकरणम् ॥

इतः परं पादद्वयेन नानाशाखागतोत्पत्तिवाक्यानां ब्रह्मोपादानत्वसमन्वयस्य च विरोधः परिह्रियते । 'न विय'दित्यादिभिः पञ्चभिस्सूत्रैः पूर्वः पक्षः । 'प्रतिज्ञाऽहानि'रित्यारभ्य सिद्धान्तः ।

॥ न वियदश्रुतेः ॥१॥

वियन्नोत्पद्यते, अश्रुतेः । छान्दोग्ये 'सदेव सोम्येदमग्र आसीत्' (छा०-६-२-१) इत्युपक्रम्य, 'तदैक्षत' इत्युक्त्वा, 'तत्तेजोऽसृजत' (छा०-६-२-३) इति तेजोऽबन्नानामेव उत्पत्तिरुक्ता, नाकाशस्येत्यर्थः ।

---

॥ अस्ति तु ॥२॥

तुशब्दः पक्षान्तरपरिग्रहे । छान्दोग्ये आकाशस्य उत्पत्त्यश्रवणेऽपि, तैत्तिरीयके 'आत्मन आकाशस्संभूतः' (तै०-२-१) इति तच्छ्रुतिरस्तीत्यर्थः । अतः क्वचित्तेजसः साक्षाद्ब्रह्मोपादानकत्वं श्रूयते, क्वचिच्च वियत इति, विरोधादप्रामाण्यमिति पूर्वपक्ष्यभिमानः । एवमुत्तरत्र विरोधादप्रामाण्यमुन्नेयम् ।

---

सिद्धान्त्येकदेश्याह—

॥ गौण्यसंभवात् ॥३॥

आकाशो नोत्पद्यते, अश्रुतेरेव । 'आत्मन आकाशः संभूतः' इति श्रुतिः गौणी । कुतः ? असंभवात् । आकाशस्य विभुत्वेनात्मवदजन्यत्वादुत्पत्तिश्रुतिर्गौणीत्यर्थः ।

---

॥ शब्दाच्च ॥४॥

शब्दादपि वियन्नोत्पद्यत इति निश्चीयत इत्यर्थः । 'वायुश्चान्तरिक्षञ्चैतदमृतम्' (बृ०-२-३-३) 'आकाशवत्सर्वगतश्च नित्यः' 'स यथानन्तोऽयमाकाश एवमनन्त

आत्मा वेदितव्यः' इत्यादिभिः आकाशस्य नित्यत्वावगमात् नित्यभावस्यानुत्पत्तिः सिद्धेति ।

---

नन्वेकस्य संभूतशब्दस्य आकाशे गौणत्वं, तेजःप्रभृतिषु च मुख्यत्वमित्येतद्विरुद्धम् । अतः 'आत्मन आकाशस्संभूतः' इत्यत्रापि मुख्यत्वमेवेत्यत आह—

॥ स्याच्चैकस्यापि ब्रह्मशब्दवत् ॥५॥

एकस्यापि संभूतशब्दस्य विषयभेदाद्गौणत्वं मुख्यत्वं च स्यात्, ब्रह्मशब्दवत् यथा 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति' ( तै०-३-२ ) इत्यस्मिन्नधिकारे अन्नादिषु ब्रह्मशब्दो गौणः, आनन्दे च मुख्यः, तथात्रापीति । न चैवमद्वैतश्रुतिव्याघातः, विकारापेक्षया तदुपपत्तेः । अतो न श्रुतीनां विरोध इति ।

---

तदिदमेकदेशिमतं दूषयति—

॥ प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥६॥

'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु०-१-१-३ ) इति, 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' ( छा०-६-१-१ ) इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' ( बृ०-४-५-६) इति चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिरविरोधः, अव्यतिरेकात्, सर्वस्य जगतः ब्रह्मव्यतिरेकाभावात् । सिद्ध्यतीति शेषः । एवञ्च सर्वशब्दसंगृहीतस्याकाशस्य ब्रह्माभेदो ब्रह्मोपादानकत्वमन्तरेण अनुपपन्न इति, तत उत्पत्तिरङ्गीकार्या । 'ऐतदात्म्यमिदं सर्वं' (छा०-६-८-७ ) 'सर्वं खल्विदं ब्रह्म' ( छा०-३-१४-१ ) 'ब्रह्मैवेदममृतं पुरस्तात्' ( मु०-२-२-११ ) इत्यादिशब्दान्तरेभ्यश्च सर्वस्य ब्रह्मात्मकत्वेन प्रतिज्ञैषोपपाद्यते ।

यद्याकाशं ब्रह्मकार्यं न स्यात्, सर्वविज्ञानप्रतिज्ञाहानिः स्यात् । न च श्रुतिद्वयविरोधः । छान्दोग्यवाक्ये तैत्तिरीयकश्रुताकाशोत्पत्तेरुपसंहारात्, आकाशं वायुं च सृष्ट्वा तेजोऽसृजतेति । विभुत्वादिकञ्च आकाशस्यासिद्धमिति ।

---

यदुक्तं 'गौण्यसंभवात्' इति। तन्निराचष्टे—

**॥ यावद्विकारं तु विभागो लोकवत् ॥७॥**

तुशब्देन उत्पत्त्यसंभवशङ्का निरस्यते। यावद्विकारं, विकारमभिव्याप्य विभागो वर्तत इत्यर्थः। लोक्यत इति लोकः प्रत्यक्षो घटादिः, तद्वत्। आकाशमुत्पद्यते, विभक्तत्वात् घटादिवदिति। न च ब्रह्मणि व्यभिचारः, आश्रयसमानसत्ताकविभागस्य हेतुत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वियदधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ मातरिश्वाधिकरणम् ॥

**॥ एतेन मातरिश्वा व्याख्यातः ॥८॥**

वियदुत्पत्तिव्याख्यानेनैव वायुरुत्पन्नो व्याख्यात इत्यर्थः। तद्वदेव पूर्वोत्तरपक्षौ योज्यौ। 'सैषानस्तमिता देवता यद्वायुः' (बृ०-१-५-२२) इत्यस्तमयप्रतिषेधदर्शनान्मन्दधियोऽनुत्पत्तिशङ्कां निरसितुमधिकरणान्तरम्। अग्न्याद्यपेक्षया अधिककालावस्थत्वं अनस्तमितत्वमिति तन्निरासः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां मातरिश्वाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ असंभवाधिकरणम् ॥

**॥ असंभवस्तु सतोऽनुपपत्तेः ॥९॥**

वियदादिवद्ब्रह्मणोऽप्युत्पत्तिरस्तीति शङ्कायामिदम्। तुशब्देन ब्रह्मण उत्पत्तिपूर्वपक्षो निराक्रियते। सतो ब्रह्मण उत्पत्तेरसंभवः। कुतः? अनुपपत्तेः। सर्वस्याप्युत्पत्तिमत्त्वेऽप्रामाणिकानवस्थाप्रसङ्गात्। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे०-६-९) इति जनिनिषेधाच्च।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां असंभवाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ तेजोऽधिकरणम् ॥

॥ तेजोऽतस्तथा ह्याह ॥१०॥

तेजसः साक्षाद्ब्रह्मयोनिकत्वं, वायुयोनिकत्वं वेति विशये, साक्षाद्ब्रह्मयोनिकत्वमेव तेजसः, छान्दोग्ये तथा श्रवणात्। तैत्तिरीयके च 'वायोरग्निः' (तै०-२-१) इति वाय्वनन्तरं अग्निः संभूत इति क्रमपरं द्रष्टव्यमिति प्राप्ते, ब्रूमः—अतः मातरिश्वनः सकाशात्तेजो जायते। कुतः? तथा ह्याह तैत्तिरीयकश्रुतिः 'वायोरग्निः' इति। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति नानन्तरपदापेक्षेयं पञ्चमी क्रमपरा। किन्तु, 'जनिकर्तुः प्रकृतिः' (पा०-सू०-१-४-३०) इत्यपादानपञ्चम्येव। न च साक्षाद्ब्रह्मजत्वाभावेन सर्वविज्ञानप्रतिज्ञाविरोधः। वायुभावापन्नब्रह्मजत्वेऽपि तज्जत्वानपायात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तेजोऽधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ अबधिकरणम् ॥

॥ आपः ॥११॥

अतस्तथा ह्याहेत्यनुवर्तते। अतस्तेजसः आपो जायन्ते। कुतः? तथा ह्याह—'अग्नेरापः' (तै०-२-१) इति। पूर्वेणैव सिद्धे सुखप्रतिपत्त्यर्थमिदम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अबधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ पृथिव्यधिकरणम् ॥

॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥१२॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' (छा०-६-२-४) इत्यत्र अन्नशब्देन व्रीह्याद्यन्नमुच्यते, पृथिवी वेति संशये, प्रसिद्धेर्व्रीह्यादिकमिति प्राप्ते, उच्यते—अन्नशब्देन पृथिवी विवक्षिता। कुतः? अधिकारात्, रूपात्,

शब्दान्तराच्च । अधिकारस्तावत् 'तत्तेजोऽसृजत' 'तदपोऽसृजत' (छा०-६-२-३) इति महाभूतसृष्टेरेव प्रकृतत्वात् । रूपमपि, 'यत्कृष्णं तदन्नस्य' (छा०-६-४-२) इति । प्रायशः पृथिव्याः कृष्णरूपत्वात् । शब्दान्तरमपि, समानाधिकारे 'अद्भ्यः पृथिवी' (तै०-२-१) इति महाभूतस्यैव अद्भ्यः उत्पत्तिः श्रूयते । तस्मात्पृथिव्येव अन्नशब्दितेति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पृथिव्यधिकरणम् ॥

---

॥ श्रीः ॥

(७) अथ तदभिध्यानाधिकरणम् ॥

## ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥१३॥

किं वियदादीनि इहेश्वरानधिष्ठितान्येव स्वस्वविकारान्सृजन्ति, किं वा तदधिष्ठितानीति संशये, स्वातन्त्र्येणैव सृजन्तीति प्राप्ते, ब्रूमः—तुशब्देन पक्षव्यावृत्तिः । सः ईश्वर एव भूतान्यधिष्ठाय विकारान् जनयति । कुतः ? तल्लिङ्गात्, ईश्वराधिष्ठितत्वलिङ्गादित्यर्थः । तथा च श्रुतिः 'यः पृथिव्यां तिष्ठन्' (बृ०-३-७-३) इत्यादि ।

ननु 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' (छा०-६-२-३-४) इत्यप्तेजसोः स्वातन्त्र्येण ईक्षितृत्वश्रुतेः का गतिरित्यत आह—तदभिध्यानादेवेति । परमेश्वरावेशवशादेव तदीक्षितृत्वं न स्वतः, जडस्य तदनुपपत्तेरित्यर्थः । 'नान्योऽतोऽस्ति द्रष्टा' (बृ०-३-७-२३) इति द्रष्ट्रन्तरप्रतिषेधात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तदभिध्यानाधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ विपर्ययाधिकरणम् ॥

## ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥१४॥

इदानीं भूतानां प्रलयक्रमश्चिन्त्यते । उत्पत्तिक्रमेणैव प्रलय इति शङ्कानिरासार्थः तुशब्दः । अतः उत्पत्तिक्रमाद्विपर्ययेण प्रलयस्य क्रम उपपद्यते । येन क्रमेण

सोपानमारूढः, तद्विपरीतेनैवावरोहदर्शनात्। सत्यां मृदि घटविलयदर्शनाच्च। चकारात्—'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते' (वि०-पु०) इत्यादिस्मृतिसंग्रहः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां विपर्ययाधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ अन्तराविज्ञानाधिकरणम् ॥

## ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥१५॥

विज्ञायते अनेनेति विज्ञानमिन्द्रियम्। विज्ञानमनसी अन्तरा कस्मिंश्चिदन्तराले क्रमेण उत्पद्येते इति वक्तव्यम्। कुतः? तल्लिङ्गात्—

'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्॥' (का०-३-३-४) इति श्रुतौ तयोर्विज्ञानमनसोरपि दर्शनात्, तयोः क्वचिदुत्पत्तेर्वक्तव्यत्वात्। यद्वा—

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु०-२-१-३) इति श्रुतौ तयोरुत्पत्तिश्रवणं लिङ्गमभिमतम्। तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गो भूतानामिति चेन्न। अविशेषात्। इन्द्रियाणां भौतिकत्वेन तत्क्रमेणैव इन्द्रियोत्पत्त्यादिक्रमोऽपि इति, न भूतोत्पत्तिक्रमस्य विरोध इत्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्तराविज्ञानाधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ चराचरव्यपाश्रयाधिकरणम् ॥

## ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥१६॥

'देवदत्तो जातो मृतः' इत्यादिव्यपदेशात् जीवस्य जन्ममरणशङ्कानिरासार्थमिदमधिकरणम्। तुशब्देन शङ्कानिरासः। चराचरव्यपाश्रयः स्थावरजङ्गमशरीरविषयो

मुख्यो जन्ममरणव्यपदेशः तत्स्थे जीवात्मनि भाक्तस्स्यात् । कुतः ? तद्भावभावित्वात् । शरीरजन्ममरणयोर्भावे जीवे तद्व्यपदेशः, अन्यथा नेति भाक्तत्वनिश्चय इत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चराचरव्यपाश्रयाधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ अत्माधिकरणम् ॥

**॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥१७॥**

जीवस्याप्युत्पत्तिरस्तु, तथा च तद्व्यपदेशो न भाक्त इति शङ्कानिरासार्थं इदम् । आत्मा जीवो नोत्पद्यते । कुतः ? अश्रुतेः । जीवोत्पत्तेः क्वचिदप्यश्रवणात् ।

ननु 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' (बृ०-२-१-२०) इति प्राणादेरुत्पत्तिमुक्त्वा, 'सर्व एते आत्मानो व्युच्चरन्ति' इति जीवानामपि उत्पत्तिः श्रूयते, इत्यत आह—नित्यत्वाच्चेति । चस्त्वर्थः उक्तशङ्कानिरासकः । नित्यत्वान्नोत्पत्तिसंभव इत्यर्थः । अजत्वादिसमुच्चयार्थो वा । कुतो नित्यत्वमत आह—ताभ्य इति । 'न जीवो म्रियते' (छा०-६-११-३) 'स वा एष महानज आत्माऽजरोऽमरः' (बृ०-४-४-२५) 'तत्त्वमसि' (छा०-६-८-७) 'अहं ब्रह्मास्मि' (बृ०-१-४-१०) 'अयमात्मा ब्रह्म' (बृ०-२-५-१९) इत्यादिश्रुतिषु जीवस्य नित्यत्वं प्रतिपाद्यत इति, अग्निविस्फुलिङ्गादिदृष्टान्तेन क्वचित् उत्पत्ति श्रवणं उपाधिसम्बन्धनिमित्तात् भाक्तं नेतव्यमिति । [ताभ्यः नित्यत्वादिप्रतिपादकश्रुतिभ्यः निमित्ताद्भाक्तं उत्पत्तिश्रवणं नेतव्यमिति ।]

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आत्माधिकरणम् ॥

---

॥ श्रीः ॥

(१२) ॥ अथ ज्ञाधिकरणम् ॥

**॥ ज्ञोऽत एव ॥१८॥**

जीवस्य तार्किकादिसिद्धं स्वतोऽचेतनत्वे सत्यागन्तुकचैतन्यवत्त्वरूपं यत् जीवत्वं तन्निरासार्थमिदम् । जीवः ज्ञः स्वयंप्रकाशः । कुतः ? अत एव, स्वप्रकाशब्रह्माभेदादेव ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ज्ञाधिकरणम् ॥

॥ श्रीः ॥

(१३) ॥ अथ उत्क्रान्त्यधिकरणम् ॥

## ॥ उत्क्रान्तिगत्यागतीनाम् ॥१९॥

नित्यत्वेन जीवस्य मध्यमपरिमाणासंभवे, अणुर्महान्वेति संशये, अणुरिति पूर्वः पक्षः। 'नाणुः' इत्युत्तरसूत्रात् अणुः श्रुतेः इति च पदद्वयमत्राकृष्यते। ततश्च, जीवः अणुर्भवितुमर्हति, कुतः ? उत्क्रान्त्यादीनां श्रुतेरिति सूत्रार्थः। 'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' (कौ०-३-३) इत्युत्क्रान्तिः। 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ०-१-२) इति गतिः। 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय' (बृ०-४-४-६) इत्यागतिः। उत्क्रान्त्यादिभिः परिच्छिन्नत्वे सिद्धे, नित्यत्वेन मध्यमपरिमाणनिरासादणुत्वसिद्धिः।

---

## ॥ स्वात्मना चोत्तरयोः ॥२०॥

चो हेत्वर्थः। उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्याप्युपकल्पेत। उत्तरे तु गत्यागती नाचलतः संभवतः। स्वात्मना कर्त्रा हि उत्तरयोर्गत्यागत्योः संबन्धो भवति, गमेः कर्तृस्थक्रियात्वात्। तत्साहचर्यादुत्क्रान्तिरपि शरीरात्सृतिरेवेति निश्चीयते।

---

## ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

ननु जीवो नाणुः। कुतः ? अतच्छ्रुतेः, अणुत्वविपरीतश्रुतेः महत्त्वश्रुतेः 'स वा एष महानज आत्मा' (बृ०-४-४-२२) इत्यादाविति चेन्न। इतराधिकारात्, परमात्मप्रक्रियायामेषा परिमाणान्तरश्रुतिः, न जीवाधिकार इत्यर्थः।

---

## ॥ स्वशब्दोन्मानाभ्यां च ॥२२॥

उद्धृत्य पृथक्कृत्य मानमुन्मानम्। इतश्च अणुर्जीवः। यतः साक्षादणुत्ववाचकः शब्दः श्रूयते—'एषोऽणुरात्मा चेतसा वेदितव्यः' (मु०-३-१-९) इति। तथा,

उन्मानमपि 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयः' ( श्वे०-५-९ ) इति ।

---

ननु जीवस्याणुत्वे सर्वाङ्गीणशैत्याद्युपलब्धिर्न स्यात् । अत आह—

॥ अविरोधश्चन्दनवत् ॥२३॥

यथा हरिचन्दनबिन्दुरेकदेशस्थोऽपि सर्वाङ्गीणसुखं जनयति, तद्वदविरोध इति ।

---

॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥२४॥

ननु चन्दनस्य एकदेशावस्थितत्वं प्रत्यक्षमिति तथाविधस्यैव सर्वाङ्गीणसुखजनकत्वमङ्गीक्रियते । जीवस्य तु न मानसिद्धमेकदेशस्थत्वमिति, सर्वाङ्गीणसुखानुपपत्त्या व्यापकत्वमेव कल्प्यतामिति चेन्न । जीवस्यापि हृदि अवस्थितिविशेषस्याभ्युपगमात् । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृ०-४-३-७ ) इत्यादिश्रुतेः । अतो दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् ।

यद्यपि 'स्वशब्दोन्मान'सूत्रेण अणुत्वसाधनात्साध्यं सिद्धमेव, तथापि श्रुत्यन्तरोदाहरणार्थमिदं सूत्रम् ।

---

ननु चन्दनस्य सावयवत्वात्सूक्ष्मावयवानां सकलदेहविसर्पणेन सर्वाङ्गीणसुखजनकत्वं भविष्यति, अणोस्तु जीवस्य निरवयवत्वात् न चन्दनसाम्यमित्यपरितोषात्प्रकारान्तरमाह—

॥ गुणाद्वा लोकवत् ॥२५॥

चैतन्यगुणव्याप्तेर्वा अणोरपि जीवस्य देहव्यापिकार्यं न विरुध्यते । यथा लोके मण्यादेरेकदेशस्थस्यापि प्रभा गृहव्यापिनी व्यापककार्यं करोति, तद्वत् ।

---

ज्ञानस्य गुणत्वाद्गुणिव्यतिरेकेण कथमवस्थानम्? प्रभा तु द्रव्यमिति वैषम्यमत आह—

॥ व्यतिरेको गन्धवत् ॥२६॥

यथा कर्पूरादिगन्धस्य गुणस्य गुणिव्यतिरेकेण अन्यत्रोपलम्भः, तद्वत् ज्ञानस्यापि न विरोध इत्यर्थः ।

---

॥ तथा च दर्शयति ॥२७॥

हृदयायतनत्वं अणुपरिमाणत्वं च आत्मनोऽभिधाय, तस्यैव [ 'आ लोमभ्यः' ] 'आ नखाग्रेभ्यः' (बृ०-१-४-७) इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं च दर्शयति ।

---

॥ पृथगुपदेशात् ॥२८॥

'प्रज्ञया शरीरं समारुह्य' (कौ०-३-६) इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात्, चैतन्यगुणेनैवास्य शरीरव्यापित्वं गम्यते । तस्मादणुरेव जीव इति

---

एवं प्राप्ते, ब्रूमः—

॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥

तुर्नार्थे । नाणुर्जीवः । परब्रह्मण एवानुप्रवेशश्रवणादभेदोपदेशाच्च परमेव ब्रह्म जीवो नान्यः । परस्य च विभुत्वात् ज्ञानस्वरूपत्वाच्च जीवोऽपि विभुः ज्ञानस्वरूपश्च, नाणुः न ज्ञानगुणकः । कथं तर्हि अणुत्वादिव्यपदेश, इत्यत आह—तद्गुणसारत्वात्तद्व्यपदेशः, इति । तस्याः बुद्धेः गुणाः तद्गुणाः इच्छाद्वेषादयः । तद्गुणाः सारः प्रधानं यस्य आत्मनः संसारित्वे, स तद्गुणसारः । न हि नित्यशुद्धबुद्धमुक्तस्वभावस्य आत्मनः तद्गुणसंबन्धं विना संसारः । तस्मात्तद्गुणसारत्वात् बुद्धिगताणुत्वोत्क्रान्त्यादिभिः जीवस्य तद्व्यपदेशो न स्वत इत्यर्थः । प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणोपासनेषु उपाधिसंबन्धात अणीयस्त्वादिव्यपदेशः 'अणीयान्व्रीहेर्वा यवाद्वा' (छा०-३-१४-३)

'मनोमयः प्राणशरीरः' (छा०-३-१४-२) इत्येवंप्रकारस्तद्वत्। पूर्वपक्षोदाहृतश्रुतियुक्तिप्रत्याख्यानप्रपञ्चो भाष्येऽनुसन्धेयः।

---

ननु बुद्धिसंबन्धात्संसारे कदाचित् बुद्धिवियोगादसंसारित्वमपि स्यादत आह—

॥ **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** ॥३०॥

नायं दोषः। मुक्तेः पूर्वमप्यसंसारित्वप्रसङ्ग इत्येष दोषो न। कुतः? यावदात्मभावित्वाद्बुद्धिसंबन्धस्य। यावज्जीवस्य जीवत्वं तावद्बुद्धिसंबन्धो न निवर्तते। कथं? तद्दर्शनात्। 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषस्स समानस्सन्नुभौ लोकावनुसञ्चरति' (बृ०-४-३-७) इति लोकान्तरगमनेऽपि बुद्धिसंबन्धं दर्शयति। मिथ्याज्ञाननिमित्तस्य संसारस्य तत्वज्ञानमन्तरेण न निवृत्तिरिति, चशब्देन समुच्चितम्।

---

ननु 'सता सोम्य तदा संपन्नो भवति' (छा०-६-८-१) इति वचनात् सुषुप्तौ कृत्स्नविकारप्रलयाभ्युपगमात्कथं बुद्धिसंबन्धस्य यावदात्मभावित्वम्? अत आह—

॥ **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** ॥३१॥

यथा बाल्यादौ विद्यमानान्येव पुंस्त्वादीनि यौवनादावभिव्यज्यन्ते, तद्वत्सुषुप्त्यादौ संस्कारात्मना सत एव अस्य बुद्धियोगस्य जाग्रदादावभिव्यक्तियोगात्, अभिव्यक्तेः युक्तत्वादित्यर्थः।

---

ननु अन्तःकरणस्यैवाभावात् कथं तद्गुणसारत्वमित्याशङ्क्य, श्रुतिसिद्धमप्यन्तःकरणं युक्त्या साधयति—

॥ **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा** ॥ ३२ ॥

अन्यथा, अन्तःकरणानङ्गीकारे, आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां समवधाने सति नित्यमुपलब्धिः प्रसज्येत। यदि सत्यपि हेतौ फलाभावः, ततो नित्यमेवानुपलब्धिः प्रसज्येत। नेचैवं दृश्यते। यद्वा, अन्यतरस्य आत्मनः इन्द्रियस्य वा, नियमः शक्तिप्रतिबन्धः कल्प्येत। न च आत्मनः शक्तिप्रतिरोधः शक्यः, अविक्रियत्वात्।

नापीन्द्रियस्य । तस्य पूर्वोत्तरक्षणयोरप्रतिबद्धशक्तिकस्य मध्ये अकस्मात् शक्तिप्रतिबन्धायोगात् । तस्माद्यस्यावधानानवधानाभ्यां उपलब्ध्यनुपलब्धी भवतः, तन्मनः । तथा च श्रुतिः—'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' (बृ०-१-५-३) इति । तस्माद्युक्तं तद्गुणसारत्वात्तद्व्यपदेशः, इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उत्क्रान्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(१४) ॥ अथ कर्त्रधिकरणम् ॥

॥ **कर्ता शास्त्रार्थवत्त्वात्** ॥३३॥

जीवस्य कर्तृत्वप्रतिपादनार्थमिदमधिकरणम् । जीवः कर्ता भवितुमर्हति । कुतः ? शास्त्रार्थवत्त्वात् । 'स्वर्गकामो यजेत' इत्यादिशास्त्रस्य, कर्तुः फलप्रतिपादकस्य अर्थवत्त्वात् । अन्यथा तस्य निरर्थकत्वप्रसङ्गादित्यर्थः ।

---

॥ **विहारोपदेशात्** ॥३४॥

इतश्च जीवस्य कर्तृत्वं, जीवप्रक्रियायां 'स्वे शरीरे यथाकामं परिवर्तते' (बृ०-२-१-१८) इति विहारोपदेशात् ।

---

॥ **उपादानात्** ॥३५॥

'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ०-२-१-१७) इति उपादानकर्तृत्वश्रवणादपि जीवस्य कर्तृत्वम् ।

---

॥ **व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ॥३६॥

'विज्ञानं यज्ञं तनुते' (तै०-२-५) इत्यादौ क्रियायां यागादिक्रियायां, कर्तृत्वव्यपदेशादपि जीवस्य कर्तृत्वम् । यदि 'विज्ञान'मिति जीवनिर्देशो न स्यात्, करणनिर्देशो

भवेत्, तदा निर्देशविपर्ययस्स्यात्, विज्ञानेनेति करणविभक्तिनिर्देशस्स्यात्। कर्तृविभक्तिश्च श्रूयत इति जीवस्य कर्तृत्वम्।

---

यदि जीवः स्वतन्त्रः कर्ता स्यात्तदा नियमेन स्वहितमेव संपादयेन्नाहितमत आह—

॥ उपलब्धिवदनियमः ॥३७॥

यथा उपलब्धिं प्रति स्वतन्त्रोऽपि सहकारिविशेषवशादिष्टमनिष्टं चानियमेनोपलभते, तथा इष्टमनिष्टं चानियमेन करिष्यतीत्यदोषः।

---

॥ शक्तिविपर्ययात् ॥३८॥

इतश्च बुद्धिव्यतिरिक्तस्य जीवस्य कर्तृत्वम्। यदि बुद्धिरेव कर्त्री स्यात्, ततश्च बुद्धेः करणशक्तिविपर्ययः स्यात्, कर्तृशक्तिश्चापद्येत। बुद्धेश्च कर्तृत्वे कर्मणः करणसापेक्षत्वात् करणान्तरमभ्युपेयम्। ततश्च नाममात्रे विवादः, करणव्यतिरिक्तस्य कर्तृत्वाङ्गीकारात्। पूर्वं विभक्तिव्यत्यय उक्तः, इदानीं शक्तिव्यत्यय इति अपौनरुक्त्यम्।

---

॥ समाध्यभावाच्च ॥३९॥

यदि जीवस्याकर्तृत्वं, तदा ध्यानधारणादावप्यकर्तृत्वं स्यादिति, ध्यानाभावे मोक्षोऽपि न स्यादित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कर्त्रधिकरणम् ॥

---

॥ श्रीः ॥

(१५) ॥ अथ तक्षाधिकरणम् ॥

॥ यथा च तक्षोभयथा ॥४०॥

जीवस्योक्तं कर्तृत्वं न स्वाभाविकं, किन्त्वौपाधिकमिति दृष्टान्तेनोपपादयति। चस्त्वर्थे। जीवस्य स्वाभाविकं कर्तृत्वमिति न भ्रमितव्यम्। यथा लोके तक्षा वास्यादिकरणहस्तः कर्ता दुःखी भवति। स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो

निर्वृतो निर्व्यापारः सुखी भवति । एवं अविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा कर्ता दुःखी भवति, मुक्तावस्थायां विद्याप्रदीपेनाविद्याध्वान्तं विधूयात्मैव केवलो निर्वृतः सुखी भवति । यथा करणसापेक्षः तक्षा कर्ता, तन्निरपेक्षश्चाकर्ता, तथा आत्माऽपि मन-आदीन्यपेक्ष्य कर्ता तन्निरपेक्षश्चाकर्तेत्येतावता तक्षदृष्टान्तः । आत्मनो निरवयवत्वेन तक्ष्णस्सावयवत्वेन सर्वथा साम्यासंभवात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तक्षाधिकरणम् ॥

---

॥ श्रीः ॥

(१६) ॥ अथ परायत्ताधिकरणम् ॥

**॥ परात्तु तच्छ्रुतेः ॥४१॥**

यदुक्तं अविद्याकल्पितं कर्तृत्वं जीवस्य, तत्किमीश्वरनिरपेक्षस्य, तत्सापेक्षस्य वेति संशये, 'स्वतन्त्रः कर्ता' इति स्मृत्यनुसारान्निरपेक्षत्वं प्राप्तं तुशब्देन निरस्य, प्रतिजानीते परादिति । जीवस्य कर्तृत्वभोक्तृत्वादिकं परात्, परस्मादीश्वरादेव भवितुमर्हति । तदधीनमेव कर्तृत्वादिकमित्यर्थः । कुतः ? तच्छ्रुतेः । 'एष ह्येव साधु कर्म कारयति' (कौ०-३-८) इत्यादिश्रुतेरित्यर्थः ।

---

नन्वेवमीश्वरस्य कारयितृत्वे, वैषम्यनैर्घृण्यप्रसङ्ग इत्यत आह—

**॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥**

तुशब्देनोक्तशङ्कानिरासः । कृतो यः प्रयत्नः जीवस्य धर्माधर्मलक्षणः, तदपेक्ष एव ईश्वरः कारयतीति न वैषम्यादिप्रसङ्गः । कुतः कृतप्रयत्नापेक्षावगतिरित्यत आह— विहितेति । एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इति विहितप्रतिषिद्धयोरवैयर्थ्यम् । अन्यथा तत् अनर्थकं स्यात् । [यदि च] विधिप्रतिषेधकार्यं स्वतन्त्र ईश्वर एव कुर्यात । ततश्च विहितकरणेनानर्थं निषिद्धकरणेन चार्थं सृजेत् । तथा च वेदप्रामाण्यं भज्येत ।

किञ्च पुरुषकारस्य वैयर्थ्यं, देशकालनिमित्तादिवैयर्थ्यं, कृतहानाकृताभ्यागमप्रसङ्गश्चेत्यादिशब्दसंगृहीतम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां परायत्ताधिकरणम् ॥

---

॥ श्रीः ॥

(१७) ॥ अथ अंशाधिकरणम् ॥

**॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥४३॥**

जीवस्येश्वराधीनं कर्तृत्वमित्युक्तम् । ईशित्रीशितव्यभावश्च भेदे सति भवति । स किमात्यन्तिकः, किं वौपाधिक इति जिज्ञासायामौपाधिक इत्याह—अंश इति । जीवः ईश्वरस्यांशो भवितुमर्हति । अंश इवांशः अविद्याकल्पितभेदः । निरवयवस्य मुख्यांशासंभवात् ।

नन्वेवं भेदकल्पना व्यर्थेत्यत आह—नानेति । 'सोऽन्वेष्टव्यः' (छा०-८-७-१) 'यो विज्ञाने तिष्ठन्' (बृ०-३-७-२२) इत्यादौ जीवेशयोर्भेदव्यपदेशादित्यर्थः ।

नन्वेवं अत्यन्तभेद एवास्तु, किमित्यंशत्वकल्पना? अत आह—अन्यथा चापीति । अन्यथा चापि अभेदेनापि, जीवेशयोः व्यपदेशादित्यनुषङ्गः । तथा हि—ब्रह्मणः दाशकितवादिभावमेके शाखिनः अधीयते आमनन्ति आथर्वणिकाः ब्रह्मसूक्ते—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना । ये दाशाः कैवर्ताः, कितवाः द्यूतकृतः, दासाः प्रसिद्धाः, ते सर्वे ब्रह्मैवेति हीनोदाहरणेन सर्वेषां ब्रह्मभावमामनन्ति । अतो भेदाभेदाम्नानादंशत्वावगम इत्यर्थः ।

---

**॥ मन्त्रवर्णाच्च ॥४४॥**

'पादोऽस्य (विश्वा)सर्वा भूतानि' (छा०-३-१२-६) इति मन्त्रवर्णादपि जीवस्य अंशत्वनिश्चयः । 'न हिंस्यात्सर्वा भूतानि' इत्यादौ भूतशब्दस्य चेतने प्रयोगात्, पादशब्दस्य अंशपर्यायत्वात् ।

---

॥ अपि च स्मर्यते ॥४५॥

'ममैवांशो जीवलोके जीवभूतस्सनातनः' (गी०-१५-७) इति ईश्वरगीतास्वपि जीवस्यांशत्वं स्मर्यते। तस्माज्जीवेश्वरयोर्भेदः न स्वाभाविकः। किन्तु औपाधिक इति तात्पर्यम्।

---

नन्वत्यन्ताभेदे जीवदुःखेन ईश्वरस्यापि दुःखित्वं स्यादत आह—

॥ प्रकाशादिवन्नैवं परः ॥४६॥

एवं जीववत् पर ईश्वरः न दुःखादिभाक्। आविद्यकदेहाद्यभिमानवतो जीवस्य तन्निबन्धनदुःखादिसंभवेऽपि, तद्रहितस्येश्वरस्य तदसंभवात्।

प्रकाशादिवदिति दृष्टान्तः। यथा सवितृप्रकाशो व्यापकोऽङ्गुल्याद्युपाधिसंबन्धात् तेष्वृजुवक्रादिभावमापन्नेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि, न परमार्थतस्तद्भावं प्रतिपद्यते। यथा च, आकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि, परमार्थतो न गच्छति। एवं अविद्याप्रत्युपस्थापितबुद्ध्याद्युपहिते जीवाख्ये अंशे दुःखायमानेऽपि, न तद्वानीश्वरो दुःखायते।

---

॥ स्मरन्ति च ॥४७॥

स्मरन्ति च व्यासादयः, यथा जैवेन दुःखेन न परमात्मा दुःखायत इति—

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा॥' इति।

चकारात् 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (श्वे०-४-६) इति श्रुतिसंग्रहः।

---

ननु जीवेश्वरयोरत्यन्ताभेदे विधिप्रतिषेधयोः साङ्कर्यप्रसङ्ग इत्यत आह—

॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥४८॥

अनुज्ञा विधिः। परिहारो निषेधः। तौ देहसंबन्धादसंकीर्णौ स्याताम्। देहसंबन्धश्चाहमभिमानः। तस्यैव सर्वसंसारनिदानत्वात्। ज्योतिरादिवत्। यथा ज्योतिष

एकत्वेऽपि, अग्निः क्रव्यात्परिह्रियते, नेतरः। यथा चैकस्यैव सवितुः प्रकाशः अमेध्यसंबद्धः परिह्रियते, नेतरः शुचिभूमिष्ठस्तद्वत्। 'ऋतौ भार्यामुपेयात्' 'परदारान्न गच्छेत्' इत्यादिविधिप्रतिषेधावसंकीर्णावित्यर्थः।

---

स्यातामनुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात्। कर्मफलं तु कर्त्रैक्यात्संकीर्येतेत्यत आह—

॥ असन्ततेश्चाव्यतिकरः ॥४९॥

सन्ततिः संबन्धः। व्यतिकरस्संकरः। सोपाधिको हि जीवः। औपाधिकञ्च कर्तृत्वम्। तथा च तत्तत्स्थूलसूक्ष्मशरीररूपोपाधीनां असंबन्धात्कर्मफलयोरप्यसाङ्कर्यसिद्धिः।

---

॥ आभास एव च ॥५०॥

किञ्च—परस्यात्मनः आभास एव जीवः जलसूर्यकादिवत्। ततश्चाव्यतिकरः। जीवैक्येऽपि उपाधिभेदादसाङ्कर्यं पूर्वमुक्तम्। इदानीं जीवभेदमङ्गीकृत्य तदुक्तमिति ध्येयम्।

एवं स्वमते कर्मफलासाङ्कर्यमुक्त्वा, परमते साङ्कर्यमाह—

---

॥ अदृष्टानियमात् ॥५१॥

परमते आत्मनां विभुत्वात्सर्वशरीरेन्द्रियमनस्सम्बन्धाविशेषात्साङ्कर्यप्रसङ्गः। न चादृष्टनियमान्नियमः, अदृष्टजनकात्ममनस्संयोगस्यापि सर्वात्मसाधारण्येनादृष्टस्यापि सर्वत्रोत्पत्तिप्रसङ्गेनानियामकत्वादित्यर्थः।

---

ननु 'अहं इदं फलं प्राप्नवानि, इदं परिहराणि, इत्थं प्रयतै, इत्थं करवाणि' इत्येवंविधा अभिसन्ध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टं नियंस्यन्तीत्यत आह—

॥ अभिसन्ध्यादिष्वपि चैवम् ॥५२॥

अभिसन्ध्यादीनामपि सर्वात्मसन्निधौ क्रियमाणानां नियमहेतुत्वं न संभवतीत्यर्थः।

---

**॥ प्रदेशादिति चेन्नान्तर्भावात् ॥५३॥**

ननु विभुत्वेऽप्यात्मनः शरीरावच्छिन्नप्रदेशे मनस्संयोगो नान्यत्रेति, प्रदेशकृता अदृष्टादिव्यवस्था भविष्यतीति चेत्, न अन्तर्भावात्। विभुत्वाविशेषात्सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्तीति, न प्रदेशकृतोऽपि विशेष इत्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अंशाधिकरणम् ॥

॥ इति श्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंस(महा)महोपाध्यायश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां द्वितीयाध्यायस्य

तृतीयः पादः ॥

॥ न वियत् सप्तदश त्रिपञ्चाशत् ॥

अधिकरणसंख्या—(१७)

सूत्रसंख्या—(५३)

———

॥ श्रीः ॥

॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

(१) ॥ अथ प्राणोत्पत्त्यधिकरणम् ॥

**॥ तथा प्राणाः ॥१॥**

वियदादिविषयः श्रुतिविप्रतिषेधः तृतीयपादे परिहृतः। चतुर्थे तु प्राणविषयः परिह्रियते। छान्दोग्ये तेजःप्रभृतीनामुत्पत्त्यधिकारे प्राणानामुत्पत्त्यनाम्नानादनुत्पत्तिः गम्यते। क्वचिदनुत्पत्तिरपि श्रूयते—'असद्वा इदमग्र आसीत्। तदाहुः किं तदसदासीत्? इति। ऋषयो वाव ते अग्रेऽसदासीत्। तदाहुः के ते ऋषयः? इति। प्राणा वाव ऋषयः' इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। क्वचिदुत्पत्तिः श्रूयते। 'एतस्माज्जायते प्राणः' (मु०-२-१-३) इत्यादौ। तत्र निर्णयमाह—तथा प्राणाः। प्राणाः इन्द्रियाणि। प्राणाः उत्पद्यन्ते, तथा, वियदादिवत्। व्यवहितस्यापि वियदादेः तच्छब्देन परामर्शो नानुपपन्नः। उत्पत्तिश्रुत्यविशेषात्।

———

नन्नु उत्पत्तिश्रुतिर्गौणी स्यान्नेत्याह—

॥ गौण्यसंभवात् ॥२॥

गौण्या असंभवो गौण्यसंभवः, तस्मात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधान्नोत्पत्तिश्रुतिर्गौणीत्यर्थः ; प्रागुत्पत्तेः प्राणसद्भावश्रुतिश्च स्वविकारापेक्षयेति द्रष्टव्यम्।

---

॥ तत्प्राक् श्रुतेश्च ॥३॥

इतश्च न प्राणजन्मश्रुतिर्गौणी। कुतः ? तत्प्राक्श्रुतेः। तदिति लुप्तषष्ठीकम्। तस्य जायत इति पदस्य प्राणेषु प्राक्श्रुतेः, यद्वा, तस्मात् प्राणात् प्राक् जायते इत्यस्य श्रुतेः, तस्य [अविशेषोक्तस्य] तत्र गौणत्वं, 'खं वायुः' (मु०-२-१-३) इत्यत्र अनुवृत्तस्य मुख्यत्वमिति वैरूप्यं स्यात्। अवैरूप्याय प्राणेष्वपि मुख्यैवोत्पत्तिश्रुतिरिति।

---

॥ तत्पूर्वकत्वाद्वाचः ॥४॥

वाच इत्युपलक्षणं वाक्प्राणमनसाम्। तेषां तेजोऽबन्नपूर्वकत्वाम्नानादपि प्राणानामुत्पत्तिरवगम्यते। 'तत्तेजोऽसृजत' ( छा०-६-२-३ ) इत्यस्मिन्नेव प्रकरणे 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' ( छा०-६-५-४ ) इति विकारार्थमयटा तेजोऽबन्नविकारत्वावगतेः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्राणोत्पत्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ सप्तगत्यधिकरणम् ॥

॥ सप्त गतेर्विशेषितत्वाच्च ॥५॥

प्राणानामुत्पत्तिविषयः श्रुतिविरोधः परिहृतः। संख्याविषयः परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति। संप्रति तु कतीतरे प्राणा इति संप्रधारयति। तत्र क्वचित् सप्त प्राणाः संकीर्त्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मु०-२-१-८ ) इति। क्वचिच्चाष्टौ—'अष्टौ ग्रहाः अष्टावतिग्रहाः' (बृ०-३-२-१) इति। ग्रहाः प्राणाः। क्वचिन्नव—'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' ( तै०-सं०-५-१-७-१ ) इति। क्वचिद्दश—

'नव वै पुरुषे प्राणा नाभिर्दशमी' इति । क्वचित् एकादश—'दशेमे पुरुषे प्राणाः आत्मैकादशः' (बृ०-३-९-४) इति । एवं क्वचित् द्वादश—'सर्वेषां स्पर्शानां त्वगेकायनम्' (बृ०२-४-११) इत्यत्र । क्वचित् त्रयोदश—'चक्षुश्च द्रष्टव्यं च' (प्र०-४-८) इत्यत्र । एवं श्रुतिविप्रतिपत्तेः संशये, प्राप्तं तावत्सप्त प्राणा इति । कुतः ? गतेः, 'सप्त प्राणाः' इत्यादौ सप्तत्वावगतेरित्यर्थः । 'सप्त वै शीर्षण्याः प्राणाः' इति विशेषितत्वाच्च । विरुद्धानेकसंख्याश्रवणे प्रथमोपस्थितसप्तसङ्ख्याग्रहणमिति ।

---

एवं प्राप्ते अभिधीयते—

**॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥६॥**

तुशब्दः पूर्वपक्षनिरासार्थः । सप्तैवेति न नियन्तुं शक्यम् । यतः सप्तभ्योऽतिरिक्ताः हस्तादयः प्राणाः श्रूयन्ते—'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति' (बृ०-३-२-८) इत्येवमादौ । स्थिते च सप्तत्वातिरेकेऽधिकसंख्यायां न्यूनसंख्यान्तर्भावादनुवादसंभवादधिकसंख्यैव ग्राह्या । अतोऽस्मिन्सति, सार्वविभक्तिकस्तसिः । नैवं मन्तव्यं श्रुतसंख्यासु प्राथम्यात् लाघवाच्च सप्तत्वमेव ग्राह्यमिति । किन्तु कार्यवशादेकादश प्राणाः । शब्दस्पर्शरूपरसगन्धविषयबुद्धिसाधनानि पञ्च बुद्धीन्द्रियाणि । वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदाः, तदर्थानि पञ्च कर्मेन्द्रियाणि । सर्वविषयं मनः एकं वृत्तिभेदान्मनोबुद्ध्यहङ्कारचित्तरूपं, इत्येकादश प्राणाः । न्यूनसंख्या तु अवयुत्यानुवादः । अधिकसंख्या वृत्तिभेदाभिप्राया । कार्यभेदात्त्वेकादशत्वनिर्णयः ।

सूत्रद्वयस्य अपरा व्याख्या—सप्तैव प्राणाः स्युः । कुतः ? यतः सप्तानामेव गतिः श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ०-४-४-२) इत्यत्र ।

ननु सर्वशब्दश्रुतेः कथं सप्तानामेव गतिरित्यत आह—विशेषितत्वादिति । सप्तैव प्राणाश्चक्षुरादयस्त्वक्पर्यन्ता इह विशेषिताः, प्रकृताः । 'सर्वे ब्राह्मणा भोज्यन्ताम्' इत्यत्र प्रकृतपरत्ववदत्रापि प्रकृतपरत्वात्सर्वशब्दस्य सप्तैव प्राणाः इति प्राप्ते, अभिधीयते— ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ अक्षरार्थस्तु प्राग्वत् । 'दशेमे पुरुषे प्राणा आत्मैकादशः ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति' (बृ०-३-९-४) इत्येकादशानां

प्राणानामुत्क्रान्तिश्रवणात्सर्वशब्द एकादशप्राणपर एवेति । उदाहृतवाक्ये आत्मा अन्तःकरणं, करणाधिकारात् । तस्मादेकादश प्राणा इति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सप्तगत्यधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ प्राणाणुत्वाधिकरणम् ॥

॥ **अणवश्च** ॥७॥

उक्ताः प्राणाः सूक्ष्माः परिच्छिन्नाश्चेति । स्थूलत्वे प्रत्यक्षत्वप्रसङ्गात् । व्यापकत्वे तु उत्क्रान्तिर्न स्यात् । न मुख्याणुत्वमत्राभिमतं, शरीरव्यापित्वात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्राणाणुत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ श्रेष्ठप्राणाधिकरणम् ॥

॥ **श्रेष्ठश्च** ॥८॥

मुख्योऽपि प्राण इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति, ‘ आनीदवातं स्वधया तदेकम् ’ ( ऋ०-सं०-८-७-१७ ) इति सृष्टेः प्रागानीदिति प्राणव्यापारश्रवणात्प्राणस्य अनुत्पत्तिशङ्कां वारयितुम् । ‘ अप्राणो ह्यमनाश्शुभ्रः ’ ( मु०-२-१-२ ) इति मूलप्रकृतेः प्राणादिसमस्तविशेषराहित्यश्रवणादानीदिति केवलसन्मात्रसत्तापरं, न प्राणानुत्पत्तिपरमिति । श्रेष्ठ इति मुख्यः प्राण उच्यते । ‘ प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च ’ ( छा०-५-१-१ ) इति श्रुतेः । ज्येष्ठश्च प्राणः । शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । चक्षुरादीनां तु स्थानविशेषोत्पत्त्यनन्तरं वृत्तिलाभादज्यैष्ठ्यम् । श्रेष्ठश्च प्राणः, गुणाधिक्यात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां श्रेष्ठप्राणाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ न वायुक्रियाधिकरणम् ॥

## ॥ न वायुक्रिये पृथगुपदेशात् ॥९॥

अयञ्च मुख्यप्राणः किंस्वरूप इति चिन्त्यते । 'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानस्समानः' इति श्रुतेः वायुः प्राणः । अथ वा 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' (सां०-का०-२९) इति तंत्रान्तर-प्रसिद्ध्या समस्तकरणव्यापारः प्राण इति प्राप्ते, अभिधीयते—न वायुः प्राणो, नापि क्रिया, करणव्यापारः । पृथगुपदेशात्—'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः' (मु०-२-१-३) इत्यादौ वायुकरणाभ्यां प्राणस्य पृथगुपदेशात् ।

ननु कथं 'यः प्राणस्स वायु'रिति श्रुतिः ? वायुरेवाध्यात्ममापन्नः पञ्चवृत्तिः प्राणो न तत्वान्तरं, नापि वायुमात्रमित्युभयश्रुत्युपपत्तिः ।

---

प्राणस्य श्रेष्ठत्वाभिधानाज्जीवस्यास्वातन्त्र्यप्रसङ्गं वारयति—

## ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥१०॥

तुशब्दः स्वातन्त्र्यनिरासार्थः । यथा चक्षुरादीनि जीवस्योपकरणानि न स्वतन्त्राणि, तद्वन्मुख्योऽपि प्राणः उपकरणभूतः न स्वतन्त्रः । कुतः ? तत्सहशिष्ट्यादिभ्यः । तैश्चक्षुरा-दिभिः सह प्राणः शिष्यते प्राणसंवादादिषु । समानधर्मणां च सह शासनं युक्तं बृह-द्रथन्तरादिवत् । आदिपदेन संहतत्वाचेतनत्वादीनां अस्वातन्त्र्यहेतूनां संग्रहः ।

---

ननु प्राणस्य करणेषु द्वादशत्वे कार्यान्तरं कल्पनीयं स्यात्, न च तदस्ति । चक्षुरादीनां तु रूपाद्युपलब्धिरूपपृथक्कार्यसंभवादेकादशत्वसिद्धिः । तस्मात्प्राणस्य कथं करणेषु द्वादशत्वमत आह—

## ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥११॥

मुख्यप्राणस्य चक्षुरादिवदकरणत्वात्तत्तुल्यकार्याभावेऽपि न दोषः । न चैतावता कार्यशून्यत्वं,सर्वेन्द्रियधारणस्य असाधारणकार्यस्य विद्यमानत्वात् । तथाहि दर्शयति श्रुतिः—

'यस्मात्कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति' (बृ०-१-३-१९) इति। 'तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति।

---

॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥१२॥

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु—'प्राणोऽपानो व्यान उदानस्समानः' (बृ०-१-५-३) इति। कार्यभेदापेक्षश्च वृत्तिभेद इति। मनोवदिति दृष्टान्तः। यथा मनसः पञ्च वृत्तयः शब्दादिविषयाः, तद्वत्। योगशास्त्रप्रसिद्धप्रमाणविपर्ययविकल्पनिद्रास्मृतयो वा मनसः पञ्च वृत्तयः। बहुवृत्तित्वमात्रेण वा मनसो दृष्टान्तता। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजनीयम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां न वायुक्रियाधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ श्रेष्ठाणुत्वाधिकरणम् ॥

॥ अणुश्च ॥१३॥

अयं मुख्यप्राणः सूक्ष्मः परिच्छिन्नश्च, अप्रत्यक्षत्वात् उत्क्रान्त्यादिश्रुतेश्च। न मुख्यमणुत्वं, वृत्तिभिः कृत्स्नशरीरव्यापित्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां श्रेष्ठाणुत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥

॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥१४॥

किं वागादयः प्राणाः स्वतन्त्रा एव प्रवर्तन्ते, किं वा अग्न्याद्यधिष्ठिताः, इति विशये, तुशब्देन स्वातन्त्र्यं निषिध्य, ज्योतिराद्यधिष्ठानमिति प्रतिज्ञायते। ज्योतिरग्निः। अधिष्ठीयत इत्यधिष्ठानं, कर्मणि ल्युट्। अग्न्याद्यधिष्ठितमेव वागादिकं प्रवर्तते। कुतः? तदामननात्। तस्य ज्योतिराद्यधिष्ठितत्वस्य आमननात्। तथेति पाठे, ज्योतिराद्यधिष्ठितत्वा-

म्नानादित्यर्थः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत् वायुः प्राणो भूत्वा नासिके प्राविशत्' (ए०-उ०-१-२-४) इत्यादिश्रुतिभ्यः ।

---

नन्वग्न्यादीनामधिष्ठातृत्वे तेषामेव भोक्तृत्वप्रसङ्गो, न शारीरस्येत्यत आह—

**॥ प्राणवता शब्दात् ॥१५॥**

प्राणशब्देनेन्द्रियाण्युच्यन्ते । स्वस्वामिभावसम्बन्धे च मतुप् । प्राणवता कार्यकरण-संघातस्वामिना शारीरेणैव प्राणानां संबन्धः । शब्दात्—'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा०-८-१२-४) इत्यादिश्रुतेः अवगम्यते । देवताधिष्ठितं घ्राणं गन्धज्ञानमात्रार्थं, शारीरस्यैव तु तन्निमित्तो भोग इत्यर्थः । अधिष्ठा-तृणामेव भोक्तृत्वे विरुद्धक्रियत्वप्रसङ्गादपि शारीरक एव भोक्ता ।

---

**॥ तस्य च नित्यत्वात् ॥१६॥**

तस्य शारीरस्य अस्मिन् शरीरे नित्यत्वात् नित्यसन्निहितत्वाच्च तस्यैव भोक्तृत्वं, न देवतानाम् । पुण्यपापसंबन्धस्य वा नित्यत्वात् । 'न ह वै देवान्पापं गच्छति' (बृ०-१-५-३) इति श्रुतेः । तस्मात्करणनियन्तृदेवतानां करणकोटित्वमेव, न भोक्तृत्वमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ज्योतिराद्यधिष्ठानाधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ इन्द्रियाधिकरणम् ॥

**॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१७॥**

उक्ता ह्येकादश प्राणाः किं मुख्यप्राणस्यैव प्राणापानादिवत् वृत्तिभेदाः, किं वा तत्वान्तराणीति संदेहे, तत्रापि (इन्द्रियेषु) 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ०-४-४-२) इत्यादौ प्राणशब्दप्रयोगाद्वृत्तिभेदत्वप्राप्तावभिधीयते—श्रेष्ठात् मुख्य-

प्राणात् अन्यत्र मुख्यप्राणं वर्जयित्वा अवशिष्टाः ते एकादश प्राणाः इन्द्रियाण्युच्यन्ते कुतः ? तद्व्यपदेशात् । श्रुतौ तेषामिन्द्रियत्वव्यपदेशात् ।

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु०-२-१-३) इति श्रुतौ प्राणस्य च इन्द्रियाणां च पृथग्व्यपदेशात् प्राणादिन्द्रियाणां तत्वान्तरत्वम् । इन्द्रियेषु प्राणशब्दो भाक्तः 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादौ ।

ननु उदाहृतश्रुतौ मनसोऽपि पृथङ्निर्देशादिन्द्रियात्तत्वान्तरत्वं स्यात् । न स्यात् । तत्र तु 'मनःषष्ठानीन्द्रियाणि' (गी०-१५-७) इत्यादौ मनसः इन्द्रियत्वप्रसिद्धेः ब्राह्मण-परिव्राजकन्यायेन मनोग्रहणं नेयम् । प्राणे तु श्रुतिस्मृत्योः क्वापि इन्द्रियत्वव्यपदेशाभावात्त-त्वान्तरत्वमेवेति ।

---

॥ भेदश्रुतेः ॥१८॥

इतश्च तत्वान्तराणि । कुतः ? ॥ भेदश्रुतेः ॥ वागादिभ्यो भेदेन प्राणः श्रूयते— 'ते ह वाचमूचुः' (बृ०-१-३-२) इत्युपक्रम्य, वागादीनसुरपाप्मविध्वस्तानुपन्यस्य, उपसंहृत्य वागादिप्रकरणं, 'अथ हेममासन्यं प्राणमूचुः' (बृ०-१-३-७) इति असुरवि-ध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमात् ।

---

॥ वैलक्षण्याच्च ॥१९॥

सुप्तेषु वागादिषु मुख्य एको जागर्ति । स एव चैको मृत्युना अनाप्तः । इतरे आप्ताः । तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं, नेन्द्रियाणामिति वैलक्षण्या-दपि तत्वान्तरत्वम् । वागादिव्यापारस्य प्राणायत्तत्वादिन्द्रियेषु प्राणशब्दो लाक्षणिकः । तथा च श्रुतिः—'त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणा इति' (बृ०-१-५-२१) इति । एतस्येति मुख्यप्राणस्य इत्यर्थः । तद्रूपभवनं तदायत्तव्या-पारत्वम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इन्द्रियाधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

## ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥

'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' (छा०-६-३-२-३) इति श्रुतं नामरूपव्याकरणं जीवकर्तृकमीश्वरकर्तृकं वेति विशये, तुशब्देन जीवकर्तृकत्वं व्यावर्त्य ईश्वरकर्तृकत्वं प्रतिज्ञायते—संज्ञामूर्तीति। संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणम्। तत् त्रिवृत्कुर्वतः परमेश्वरादेव भवितुमर्हति। त्रिवृत्कुर्वत इति ईश्वरोपलक्षणात्। कुतः ? उपदेशात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता' (छा०-८-१४-१) इत्येवमादिश्रुतिषु।

ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं नामरूपव्याकरणस्य प्रतीयते। नैवं, जीवेनेत्येतदनुप्रविश्येत्यनेन सम्बध्यते आनन्तर्यात्, न व्याकरवाणीत्यनेन। गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य कर्तृत्वासंभवाच्च।

---

बहिस्त्रिवृत्कृतानामपि भूम्यादीनां अध्यात्मं कार्यान्तरं आचार्यः सुहृद्भावेन दर्शयति—

## ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥२१॥

भूमेस्त्रिवृत्कृताया व्रीह्यादिरूपायाः पुरुषेणोपभुज्यमानाया मांसादिकार्यं यथाशब्दं निष्पद्यते। तथा हि श्रुतिः—'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' (छा०-६-५-१) इति। एवमितरयोरपतेजसोर्यथाशब्दं कार्यं ज्ञेयम्। मूत्रं लोहितं प्राणश्च अपां कार्यम्। अस्थि मज्जा वाक् च तेजसः, इति।

---

ननु त्रयाणामपि त्रिवृत्कृतत्वाविशेषे कथं 'इयं पृथिवी' 'इमा आपः' 'इदं तेजः' इति विशेषव्यपदेशः ? अत आह—

॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥२२॥

तुशब्देन उक्तशङ्कानिरासः । विशेषस्य भावो वैशेष्यं, भूयस्त्वमिति यावत् । पृथिव्यादिभूयस्त्वात् तद्वादस्तद्व्यपदेश इत्यर्थः । पदाभ्यासोऽध्यायसमाप्तिद्योतकः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

इति श्रीमद्राघवसोमयाजिकुलावतंसश्रीमदद्वैतविद्याचार्यश्री(महा)महोपाध्यायश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

॥ इति द्वितीयोऽध्यायः ॥

॥ तथा प्राणा नव द्वाविंशतिः ॥

अधिकरणसंख्या—(९)

सूत्रसंख्या— (२२)

---

॥ श्रीः ॥

# ॥ अथ तृतीयोऽध्यायः ॥

॥ अथ तृतीयाध्यायस्य प्रथमः पादः ॥

(१) ॥ अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥

॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥१॥

एवं मानान्तरविरोधपरिहारेण सर्ववेदान्तवेद्यं ब्रह्म निरूपितम् । तत्प्राप्तिसाधनविचाराय तृतीयाध्याय आरभ्यते । तत्र वैराग्यजननार्थं जीवस्य देहान्तरगतिर्विचार्यते । तत्र किं देहाद्देहान्तरं गच्छन् जीवः शरीरारम्भकैः भूतसूक्ष्मैरवेष्टितो गच्छति, वेष्टितो वेति संशये, अवेष्टित इत्याह । कुतः ? भूतसूक्ष्माणां सर्वत्र सुलभत्वेन सह नयनस्य अनुपयोगादिति । एवं प्राप्ते, अभिधीयते—तदन्तरप्रतिपत्तौ शरीरान्तरप्रतिपत्तौ, भूतसूक्ष्मैः संपरिष्वक्त एव जीवो रंहति गच्छति । कुतः ? प्रश्ननिरूपणाभ्याम् । प्रश्नस्तावत्—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ( छा०-५-३-३ ) इति । निरूपणं प्रतिवचनम् । तदपि—द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोम-

वृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा०-५-९-१) इति। तस्मादद्भिः संवेष्टितो जीवो रंहतीति गम्यते।

---

ननु प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः परिवेष्टितो रंहतीति गम्यते, न भूतान्तरयोगोऽस्त आह—

॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥२॥

तुशब्देन चोद्यनिरासः। अब्योगाङ्गीकारे, अपां त्र्यात्मकत्वात् त्रिवृत्करणेन तेजोऽबन्नात्मकत्वात् तेजोऽबन्नयोगस्सिद्ध इत्यर्थः।

नन्वेवं 'आपः पुरुषवचस' इति कथमत आह—भूयस्त्वात्। देहे लोहितादिद्रवद्रव्यभूयस्त्वादपां भूयस्त्वम्। अतः अब्ग्रहणं कृतं न कैवल्याभिप्रायेण। तस्मात् अब्ग्रहणं भूतसूक्ष्ममात्रोपलक्षणम्।

---

॥ प्राणगतेश्च ॥३॥

किञ्च—देहान्तरप्रतिपत्तौ प्राणानां गतिः श्रूयते 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ०-४-४-२) इति। प्राणानां निराश्रयाणां गमनासंभवात्तदाश्रयत्वेन भूतसूक्ष्मगमनमावश्यकमित्यर्थः।

---

॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

ननु प्राणानां न जीवेन सह देहान्तरगमनं, अग्न्यादिदेवताप्राप्तिश्रुतेः—'यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति' (बृ०-३-२-१३) इत्यादिश्रुत्या अग्न्यादिगतिप्रतीतेरिति चेत् न। भाक्तत्वादग्न्यादिगतिश्रवणस्य, गौणत्वादित्यर्थः। प्राणगमनव्यतिरेकेण जीवस्य देहान्तरे भोगासंभवात्। 'प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ०-४-४-२) इति श्रुत्यन्तरसिद्धत्वाच्च। तदधिष्ठातृदेवानां मरणकाले अनुपकारकत्वमात्रेण अग्न्यादीन्वागादयो गच्छन्तीत्युक्तमित्यर्थः।

---

॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

ननु प्रथमेऽग्नावपामश्रवणादनुपपन्नमिदम् । तथाहि—'असौ वाव लोको गौतमाग्निः' 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा०-५-४-१-२) इति श्रद्धाया होम्यत्वेनोपक्रमात् पञ्चम्यामपि श्रद्धैव होम्या वक्तव्या, तथाच, अपां पुरुषवचस्त्ववचनमनुपपन्नमिति चेन्न । हि यस्मात् प्रथमेऽपि श्रद्धाशब्देन ता एवापोऽभिप्रेयन्ते। कुतः ? उपपत्तेः । एवं हि प्रश्नप्रतिवचनयोः एकवाक्यत्वमुपपद्यते । अन्यथा अपां पुरुषवचस्त्वे पृष्टे अन्यविषयस्य उत्तरस्य वैयधिकरण्यं स्यात् । तस्मात् 'श्रद्धा वा आपः' इत्यादौ श्रद्धाशब्दस्याप्सु प्रयोगदर्शनात् ता एवात्राभिप्रेता इति ।

---

॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥

नन्वेवं अपां पुरुषवचस्त्वेऽपि तद्युक्तो जीवो रंहतीत्ययुक्तं, अस्मिन्वाक्ये अपामिव जीवानामश्रुतत्वादिति चेन्न । इष्टादिकारिणां प्रतीतेः ।

'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्युपक्रम्य, इष्टादिकारिणां धूमादिमार्गेण चन्द्रप्राप्तिं कथयति—'आकाशाच्चन्द्रमसमेष सोमो राजा' (छा०-५-१०-३-४) इति। त एवेहापि प्रतीयन्ते—'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' (छा०-५-३-२) इति, श्रुतिसाम्यात् । तेषां च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात् प्रत्यक्षमेवापस्सन्ति । ता आहवनीये हुताः सूक्ष्मा आहुत्यः अपूर्वरूपास्सत्यस्तानिष्टादिकारिण आश्रयन्ते । तेषां मरणे सति शरीरमन्त्येऽग्नौ ऋत्विजः 'असौ स्वर्गाय लोकाय स्वाहा' इति जुह्वति । ततः ता आहुतिरूपा आपः इष्टादिकारिणो जीवान्परिवेष्ट्यामुं लोकं फलभोगाय नयन्ति । ता एव श्रद्धां जुह्वतीत्यभिप्रेताः ।

अत एव[वाजसनेयके]अग्निहोत्रप्रकरणे 'ते वा एते आहुती हुते उत्क्रामतः' इति श्रुत्यन्तरममुमेवार्थं संवदति ।

---

ननु फलभोगाय द्युलोकगमनमित्यसङ्गतं, 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छा०-५-१०-४) इति, 'ते चन्द्रं प्राप्य अन्नं भवन्ति' (बृ०-६-२-१६) इति च अन्नत्वश्रवणात् । देवैर्भक्षितानां फलभोगासंभवात् । अत आह—

॥ भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥७॥

वाशब्दश्चोद्यनिरासार्थः। इष्टादिकारिणां अन्नत्वं भाक्तं गौणम्। अन्यथा, 'स्वर्गकामो यजेत' इत्यादिश्रुतिविरोधात्, कर्मणि प्रवृत्त्यभावप्रसङ्गाच्च। 'न ह वै देवा अश्नन्ति न पिबन्ति' (छा०-३-६-१) इत्यादिश्रुतेश्च। इष्टादिकरणेन देवानां प्रीतिं कुर्वन्तीत्यतस्तेषु अन्नत्वमुपचर्यते।

किञ्च—अनात्मवित्त्वादपि इष्टादिकारिणां, देवानां भोग्यत्वमुपपद्यते। तथा हि श्रुतिर्दर्शयति—'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृ०-१-४-१०) इति। पशुवत्तदनुकूलाचरणेन प्रीतिसाधनत्वाद्भोग्यत्वम्। भोग्यत्वाच्चान्नत्वोपचारः। तस्माद्रंहति संपरिष्वक्त इति सिद्धम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तदन्तरप्रतिपत्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ कृतात्ययाधिकरणम् ॥

॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥८॥

फलभोगानन्तरं स्वर्गादिहावरोहवान् जीवः किं निरनुशयः, सानुशयो वेति संदेहः। जीवमनु शेते इत्यनुशयः। कर्मरहित एव जीवोऽवरोहति। कुतः? 'तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' (छा०-५-१०-५) इति श्रुतेः। संपतन्त्यनेनामुं लोकं फलभोगाय इति संपातः कर्म। 'यावत्संपातमुषित्वे'ति च यावत्किञ्चित्कर्म परलोकगमनकाले स्थितं तस्य सर्वस्यापि भुक्ततां दर्शयति। तस्मात्कर्मरहित एवावरोहतीति प्राप्ते, ब्रूमः—

कृतात्यये, स्वर्गार्थं कृतस्य कर्मणः फलभोगेन अत्यये क्षये सति, अनुशयवान् कर्मान्तरयुक्त एव जीवोऽवतरति। कुतः? दृष्टस्मृतिभ्याम्। दृष्टं प्रत्यक्षा श्रुतिः 'तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' (छा०-५-१०-७) इति। रमणीय-

चरणा रमणीयां योनिमापद्येरन् इति यत्तदभ्याशोऽवश्यमित्यर्थः। हीति प्रसिद्धौ। चरण-शब्देन कर्म सूच्यत इति वक्ष्यति।

स्मृतिरपि—'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' (गौ०-ध०-सू०-११-३१) इति। तस्मात्कर्मान्तरसहित एवावरोहति।

अवरोहणसमये यथेतमनेवं च अवरोहति। गमनसमये येन पथा गतं तथेति यथेतमित्यस्यार्थः। अनेवमिति, तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणमार्गोक्तयोः अवरोहे संकीर्तनाद्यथागतत्वं, रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययः।

---

## ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥

ननु उदाहृतश्रुतौ चरणाद्योन्यापत्तिः प्रतीयते, न तु कर्मणः, चरणकर्मणोः भेद-श्रुतेः—'यथाकारी यथाचारी तथा भवति' (छा०-४-४-५) इति। 'यान्यनव-द्यानि कर्माणि' 'यान्यस्माकँ सुचरितानि' (तै०-१-११-२) इति च। तस्माच्छ्रु-तिबलात्सानुशयोऽवरोहतीत्यसङ्गतमिति चेन्न। यतोऽनुशयोपलक्षणार्था चरणश्रुतिरिति कार्ष्णाजिनिर्मन्यते।

---

## ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥१०॥

ननु चरणस्य न कर्मोपलक्षणत्वं, मुख्यस्य चरणस्यैव योन्यापत्तिहेतुत्वसंभवात्। अन्यथा चरणस्यानर्थक्यं स्यादिति चेन्न। कुतः? तदपेक्षत्वात्, इष्टादिकर्मणां चरण-सापेक्षत्वात्। न हि आचारहीनः कर्मण्यधिकृतः, 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतेः। तस्माच्चरणस्य स्वतन्त्रत्वाभावात् कर्मोपलक्षणत्वं युक्तमिति कार्ष्णाजि-नेर्मतम्।

---

## ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥११॥

बादरिस्त्वाचार्यः चरणशब्देन सुकृतदुष्कृते एव प्रत्याख्येते इति मन्यते।

चरणमनुष्ठानं कर्मेति पर्यायाः । इष्टादिकारिणि 'धर्मं चरती'ति लोके व्यवहारदर्शनात् । क्वचिच्चरणकर्मणोः भेदव्यपदेशस्य गोबलीवर्दन्यायेनोपपत्तेरिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कृतात्ययाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ अनिष्टादिकार्यधिकरणम् ॥

## ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥१२॥

इष्टादिकारिणां चन्द्रलोकप्राप्तिः सिद्धा । किमन्येषामपि तत्र गमनमस्ति, उत नास्तीति संशये, अस्तीत्याह । कुतः ? ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ चो हेतौ । यतोऽनिष्टादिकारिणां, इष्टादिकारिभिन्नानामपि चन्द्रलोकगमनं श्रुतमित्यर्थः । तथा ह्यविशेषेण कौषीतकिनः समामनन्ति—' ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ' ( कौ०-१-२ ) इति ।

---

## ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

तुर्नार्थे । नेतरेषां चन्द्रगमनम् । भोगार्थं हि तत्र गमनम् । इष्टादिकारिणामेव तत्र भोगो नान्येषाम् । क्व तर्हि तेषां भोगोऽत आह—इतरेषां, अनिष्टादिकारिणां संयमने, यमालयं गत्वा तत्तत्कर्मानुरूपं दुःखमनुभूय, पुनरवरोहः । एतादृशौ तेषामारोहावरौहौ । कुतः ? तद्गतिदर्शनात् । श्रुतौ यमालयगतिदर्शनात् । ' न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥' (का०-२-६ ) इति । सम्यगवश्यंभावेन परः परस्ताद्देहपातादूर्ध्वमय्यते गम्यते इति संपरायः परलोकः । तत्प्राप्त्यर्थसाधनविशेषः सांपरायः । बालमविवेकिनं विशेषतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिमतीव प्रमादं कुर्वन्तं प्रति न भाति । न केवलमज्ञः । किन्तु विपरीतबुद्धिरपि । यतोऽयमेवेह लोकः अस्ति, नास्ति परलोक इति मानी मननशीलः, अतस्तदनुरूपमाचरन्, जन्ममरणप्राप्त्या मे मम वशमापद्यते, इति मृत्योर्नचिकेतसं प्रति वचनम् ।

---

॥ स्मरन्ति च ॥१४॥

अपि च यमालये यमायत्तं पापविपाकं स्मरन्ति व्यासादयः ।

---

॥ अपि च सप्त ॥१५॥

स्मरन्तीत्यनुषज्यते । रौरवादिनरकाः सप्त पापफलभोगभूमित्वेन बहुभिः स्मर्यन्ते । तत्रानिष्टादिकारिणां गमनं, न चन्द्रलोक इत्यर्थः ।

---

ननु रौरवादिषु चित्रगुप्तादयोऽधिकारिणः स्मर्यन्ते । ततश्च यमवश्यताश्रुतिविरोधोऽत आह—

॥ तत्रापि च तद्व्यापारादविरोधः ॥१६॥

चश्चोद्यनिरासे । तत्रापि, रौरवादिष्वपि । तद्व्यापारात्, यमव्यापारान्नोक्तविरोध इत्यर्थः । यमाधीना एव चित्रगुप्तादयो न स्वतन्त्रा इत्यपि स्मर्यत इति भावः ।

---

॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥

इतोऽपि नानिष्टादिकारिणां चन्द्रलोकप्राप्तिः । तथा हि—पञ्चाग्निविद्यायां 'वेत्थ यथाऽसौ लोको न संपूर्यते' (छा०-५-३-३) इति प्रश्नस्य प्रतिवचनावसरे श्रूयते—'अथैतयोः पथोः न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा०-५-१०-८) इति । क्षुद्रजन्तवः पुनः पुनर्जायन्ते म्रियन्ते चेति तृतीयो मार्गः, तेनासौ लोको न संपूर्यत इति प्रतिवचनार्थः ।

तत्र 'एतयोः पथो'रित्यस्यार्थकथनं 'विद्याकर्मणोः' इत्यनेन । एतयोः पथोरिति विद्याकर्मणोरिति विवक्षितमित्यर्थः । कुतः? प्रकृतत्वात् । 'तद्य इत्थं विदुः' (छा०-५-१०-१) इति विद्या, तया प्रतिपत्तव्यो देवयानः पन्था उक्तः । 'इष्टापूर्ते दत्तम्' (छा०-५-१०-३) इति कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः कथितः । तत्र 'एतयोः पथोर्न कतरेण चन' इति श्रुतम् ।

अयमर्थः—ये न विद्यया देवयाने पथि अधिकृताः, न कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुतालक्षणः असकृदावर्ती तृतीयः पन्था भवतीति। विद्याकर्ममार्गद्वयव्यतिरेकेण क्षुद्रजन्तुभावलक्षणमार्गकथनादपि नानिष्टादिकारिणां चन्द्रलोकप्राप्तिरित्यर्थः। तुशब्देन 'चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ०-१-२) इति वाक्योत्थशङ्कानिरासः। सर्वशब्दः इष्टादिकारिपर इत्यभिप्रायः।

---

ननु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा०-५-३-३) इति आहुतिसंख्यानियमाद्देहावाप्तये सर्वेषां चन्द्रलोकगमनमावश्यकमत आह—

## ॥ न तृतीये तथोपलब्धेः ॥१८॥

न तृतीये स्थाने देहलाभाय आहुतिसंख्यानियमः। कुतः? तथोपलब्धेः। 'जायस्व म्रियस्व' (छा०-५-१०-८) इत्यनेनाहुतिसंख्यानियमव्यतिरेकेणैव देहजननोपलब्धेरित्यर्थः।

अपि च 'पञ्चम्या'मित्यनेन अपां पञ्चम्यां पुरुषवचस्त्वं विधीयते। नापञ्चम्यां निराक्रियते, वाक्यभेदप्रसङ्गात्। तथा च यथासंभवं पञ्चम्यामपञ्चम्यां च अविरुद्धं पुरुषवचस्त्वमिति।

---

## ॥ स्मर्यतेऽपि च लोके ॥१९॥

अपि च सीताद्रौपद्यादीनामयोनिजत्वं स्मर्यते लोके। तत्र च न संख्यानियमः, योषित्पुरुषाहुतिद्वयाभावात्। एवमनिष्टादिकारिणामपि भविष्यतीत्यभिप्रायः।

---

## ॥ दर्शनाच्च ॥२०॥

अपि च—जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे चतुर्विधे भूतग्रामे स्वेदजोद्भिज्जयोरन्तरेण ग्राम्यधर्ममुत्पत्तिदर्शनान्न संख्यानियमः। एवमन्यत्रापि न संख्यानियमः इति।

---

ननु 'आण्डजं जीवजं उद्भिज्जम्' (छा०-६-३-१) इति त्रैविध्यमेव श्रूयते, कथं चातुर्विध्यमत आह—

॥ तृतीयशब्दावरोधः संशोकजस्य ॥२१॥

'आण्डजं जीवजमुद्भिज्ज'मिति श्रुतौ तृतीयशब्देन उद्भिज्जशब्देन अवरोधस्संग्रहः संशोकजस्य स्वेदजस्य प्रत्येतव्य इत्यर्थः। स्वेदजोद्भिज्जयोर्जलभूम्युद्भेदप्रभवत्वस्य तुल्यत्वात्। स्वेदजस्योद्भिज्जत्वेऽपि जङ्गमत्वेन पृथक्कृत्य, स्थावरमुद्भिज्जशब्देन अभिधाय, चातुर्विध्यनिर्देशे न विरोध इति भावः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अनिष्टादिकार्यधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ साभाव्यापत्त्यधिकरणम् ॥

॥ साभाव्यापत्तिरुपपत्तेः ॥२२॥

चन्द्रलोकं गतानां अवरोहणप्रकार आम्नायते—'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशं आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति। अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा०-५-१०-५-६) इति। तत्र संशयः—किमवरोहन्त आकाशादिस्वरूपा भवन्ति, किं वा तत्सदृशा भवन्ति, इति। 'वायुर्भूत्वे'त्यादौ भवतिशब्दात्तत्स्वरूपत्वं गम्यत इति, 'आकाश'मित्यत्रापि स्वरूपत्वमेवाभिमतमिति प्राप्ते, अभिधीयते—साभाव्यापत्तिः। समानो भावो येषां ते सभावाः, तेषां भावः साभाव्यं तस्यापत्तिः प्राप्तिः सादृश्यापत्तिरित्यर्थः। कुतः? उपपत्तेः। अन्यस्य अन्यसादृश्यमुपपद्यते, न तु तादात्म्यमित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां साभाव्यापत्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ नातिचिराधिकरणम् ॥

॥ नातिचिरेण विशेषात् ॥२३॥

प्राग्व्रीह्यादिप्रतिपत्तेराकाशादिप्राप्तौ संशयः—किमेकैकसादृश्येन दीर्घकालमवस्थानं, किं वा अल्पकालमिति। अविशेषादनियमप्राप्तौ, उच्यते—नातिचिरेण, अल्पकालमेव

तत्सादृश्येनावस्थानम् । कुतः ? विशेषात् । व्रीह्यादिभ्यो निस्सरणे विलम्बरूपविशेष-श्रवणादित्यर्थः । व्रीह्यादिभावापत्त्यनन्तरं श्रूयते—'अतो वै खलु दुर्निष्प्रपतरम्' (छा०-५-१०-६) इति । अत्र एकतकारलोपश्छान्दसो द्रष्टव्यः । दुर्निष्प्रपतरमिति न दुःखमुच्यते. स्थूलशरीराभावेन तदानीं दुःखाभावात् । किन्तु विलम्ब एव । अतः पूर्वत्र अविलम्बावगतिरिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां नातिचिराधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ अन्याधिष्ठिताधिकरणम् ॥

## ॥ अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥२४॥

अवरोहतां अनुशयिनां व्रीह्यादिभावः श्रूयते—'त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते' (छा०-५-१०-६) इति । तत्र संशयः—किं व्रीह्यादि-भावेन जन्मात्र विवक्षितं, उत तत्संश्लेषमात्रमिति । 'जायन्त' इति श्रवणाज्जन्मेति प्राप्ते, उच्यते—पूर्ववत्, यथा पूर्वत्राकाशादौ संश्लेषमात्रमनुशयिनां, एवं व्रीह्यादिष्वपि अन्या-धिष्ठितेषु, तज्जन्मप्रापकपापवशात् चेतनान्तराधिष्ठितेषु संश्लेषमात्रमनुशयिनाम् । कुतः ? पूर्ववदभिलापात् । यथा पूर्वत्र कर्मव्यापारमन्तरेण आकाशादिभाव आम्नायते, एवं व्रीह्यादिष्वपि । यत्र च सुखदुःखभोक्तृत्वं अभिप्रैति, तत्र व्यापारान्तरं ब्रवीति—'रमणी-यचरणाः' 'कपूयचरणाः' इति । अत्र तदकीर्तनान्न व्रीह्यादिकमनुशयिनां भोगसाधनमिति । किञ्च—पुण्यकृतां चन्द्रलोकादवरोहतां न हि फलं व्रीह्यादिजन्म युक्तम् ।

---

## ॥ अशुद्धमिति चेन्न शब्दात् ॥२५॥

ननु ज्योतिष्टोमादीनां पशुहिंसावत्त्वेन पापयुक्तत्वादशुद्धं यज्ञादिकर्म, तस्य दुःखा-करव्रीह्यादिजन्मापि फलं संभवतीति चेन्न । शब्दात्, हिंसाविधायकशब्दात् । नाशुद्धं कर्म, वैधत्वेन निषेधाविषयत्वादिति भावः ।

---

॥ रेतस्सिग्योगोऽथ ॥२६॥

व्रीह्यादिभावानन्तरं रेतस्सिग्भाव आम्नायते— ‘ यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ’ (छा०-५-१०-६ ) इति । यो यो ह्यनुशयिनाश्लिष्टमन्नमत्ति, स एव यो यो रेतः सिञ्चति, तद्भूयः तत्समानाकार एव अनुशयी भवति, इति सिद्धान्तरीत्या श्रुत्यर्थः । यथा अस्मिन्वाक्ये अनुशयिनां व्रीह्यादिभावानन्तरं रेतस्सिग्योग एव रेतस्सिक्त्वं, न तु मुख्यम् , असंभवात् । एवं व्रीह्यादिभावोऽपि तत्संयोग एवेत्यर्थः ।

---

नन्वेवं ‘ रमणीयां योनिम् ’ ( छा०-५-१०-७ ) इत्यादावपि अनुशयिनां संश्लेषमात्रमेव व्रीह्यादिवदभिप्रेतं स्यादत आह—

॥ योनेश्शरीरम् ॥२७॥

योनेस्सकाशाज्जायमानं शरीरमनुशयिनां भोगार्थमेव, ‘ रमणीयचरणाः ’ इत्यादि-कीर्तनादित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्याधिष्ठिताधिकरणम् ॥

इति श्रीमद्राघवसोमयाजिकुलावतंसश्रीमदद्वैतविद्याचार्यश्री [ महा ] महोपाध्याय-श्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तृतीयाध्यायस्य प्रथमः पादः ॥

तदन्तरप्रतिपत्तौ षट् सप्तविंशतिः ॥
अधिकरणसंख्या—(६)
सूत्रसंख्या—२७)

---

॥ श्रीः ॥

॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

(१) अथ संध्याधिकरणम् ॥

॥ सन्ध्ये सृष्टिराह हि ॥१॥

पूर्वस्मिन्पादे कर्मफलस्य यातायातरूपत्वाज्जन्मप्राप्तेश्च दुःखाकरत्वाद्वैराग्यं निरूप्य, विरक्तस्य तत्त्वंपदार्थविवेकाय द्वितीयः पादः आरभ्यते । तत्र ‘न स्थानतोऽपि’ ( ब्र०-सू०-३-२-११ ) इत्यतः प्राक् त्वंपदार्थस्य विवेकः । ततःप्रभृति तत्पदार्थस्य ।

तत्र आद्याधिकरणे जीवस्य स्वप्रकाशत्वसिद्ध्यर्थं स्वप्नसृष्टेर्मिथ्यात्वं प्रतिपाद्यते। जाग्रदवस्थायां आदित्यादिप्रकाशसङ्कराद्दुर्विज्ञेयमात्मनः स्वप्रकाशत्वम्। यदि स्वप्नस्यापि सत्यत्वं तर्हि, तदवस्थं दुर्विज्ञेयत्वमात्मनः स्वप्रकाशत्वस्येति, तदर्थं स्वप्नमिथ्यात्वविचारः। आरम्भणाधिकरणे प्रपञ्चमात्रस्य मिथ्यात्वोपपादनेऽपि, स्वप्नदृष्टस्य शुक्तिरजतादितुल्यत्वोपपादनात् अपुनरुक्तिः।

सन्ध्ये सृष्टिः पारमार्थिकी। सन्ध्यमिति स्वप्नस्थानम्। जाग्रत्सुषुप्तयोः सन्धौ भवतीति व्युत्पत्तेः। 'सन्ध्यं तृतीयं स्वप्नस्थानम्' (बृ०-४-३-९) इति वेदे दर्शनाच्च। कुतः? आह हि। यतः स्वप्नं प्रकृत्य, 'अथ रथान् रथयोगान्पथः सृजते' (बृ०-४-३-१०) इति श्रुतिरेवं सृष्टिमाह 'आत्मन आकाशस्संभूतः' (तै०-२-१) इति सृष्टितुल्येयमिति।

---

## ॥ निर्मातारं चैके पुत्रादयश्च ॥२॥

किञ्च—एके शाखिनः अस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति—'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क०-५-८) इति। तत्र काम्यन्त इति व्युत्पत्त्या कामाः पुत्रादयोऽभिप्रेताः। तस्मान्निर्मातृश्रवणादपि सत्यत्वम्।

किञ्च—ईश्वरकर्तृकत्वादपि सत्यत्वं, जाग्रद्वत्। न च तदसिद्धिः, 'अन्यत्र धर्मादन्यत्राधर्मात्' (का०-२-१४) इत्यादिवाक्यबलेन ईश्वरप्रकरणत्वावगतेः। तस्मात्सन्ध्ये सृष्टिः पारमार्थिकी।

---

एवं प्राप्ते, ब्रूमः—

## ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

तुशब्दः पक्षं व्यावर्तयति। न सत्या स्वाप्नसृष्टिः, किन्तु मायामात्रं, मिथ्यैव। कुतः? कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात्। कृत्स्नमेव कार्त्स्न्यम्। कृत्स्नेन देशकालादिधर्मेण असम्बद्धत्वादित्यर्थः। न हि रथादेः शरीरान्तर्वर्तिहृदयदेशः सञ्चारयोग्यः। न च जीवः शरीरान्निर्गत्य बहिरेव रथादिना सञ्चरतीति वाच्यम्। क्षणमात्रेण शतयोजनपर्यन्तगमनागमनयोरसंभावितत्वात्। सुप्तशरीरस्य तत्रैव स्थितत्वादित्यादिबहुविसवादो

भाष्ये दर्शितः। किञ्च 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' (बृ०-४-३-१०) इति श्रुत्यैव बाधो दर्शितः। तस्मान्मायामात्रं स्वप्नदर्शनम्।

---

॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥४॥

ननु स्वप्नस्य मिथ्यात्वे तत्सूचितस्य सत्यत्वं न स्यादिति शङ्कानिरासायेदं सूत्रम्। सूचकश्च हि स्वप्नः। यतस्सूचको, न तु सूच्यः, येन सत्यत्वमापद्येत। सूच्यस्य सत्यत्वेऽपि, सूचकस्य असत्यत्वमविरुद्धमित्यर्थः।

यद्वा—तत्तद्वस्तुज्ञानं सूचकम्। तच्च चित्स्वरूपं सत्यम्। यत् दृश्यं तत् मिथ्येति न कश्चिद्विरोधः। ननु कथं ज्ञानस्य सूचकत्वमत आह—'श्रुतेः' इति।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन्स्वप्ननिदर्शने॥' (छा०-५-२-९)

इत्यादिश्रुतेः। तद्विदश्च, स्वप्नाध्यायविदश्च एवमाचक्षते—कुञ्जरारोहणादीनि स्वप्ने शुभसूचकानि, खरयानादीनि अशुभसूचकानीति। स्वप्नलब्धमन्त्रादावपि तज्जातीयसूचकत्वमेवेति न कश्चिद्विरोधः। रथादिस्रष्टृत्वश्रुतिर्निमित्तत्वमात्रपरा, न जाग्रत्तुल्यस्रष्टृत्वप्रतिपादनपरेति मन्तव्यम्।

यदपि ईश्वरकर्तृकत्वात्सत्यत्वमुक्तं, तदप्यसत्। श्रुत्यन्तरे 'स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' (बृ०-४-३-९) इति जीवव्यापारकीर्तनात्। इहापि 'य एष सुप्तेषु जागर्ति' (का०-५-८) इति प्रसिद्धानुवादात् जीव एवायं कामानां निर्माता संकीर्त्यते। 'तदेव शुक्रं तद्ब्रह्म' (का०-५-८) इति प्रकृतं स्वप्नद्रष्टारं जीवमनूद्य, तस्य ब्रह्माभेदप्रतिपादनात् तत्त्वमस्यादिवन्नेश्वरप्रकरणविरोधः।

---

॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥

नन्वीश्वरांशस्य जीवस्य अग्निविस्फुलिङ्गवत् तत्समानशक्तिकत्वात्सांकल्पिकी स्वप्नसृष्टिर्भविष्यतीति शङ्कानिरासायेदम्। तुशब्देन शङ्काव्युदासः। जीवस्य ईश्वरसमानशक्तिकत्वेऽपि तदिदानीं तिरोहितम्।

नन्वेवं तत् कदापि नाविर्भवेदत आह—पराभिध्यानादिति । परस्येश्वरस्याभिध्यानात् अविद्यानिवृत्तावाविर्भवतीत्यर्थः । तत्कुतः ? ततो हि, तत ईश्वरादस्य जीवस्य बन्धविपर्ययौ । विपर्ययः मोक्षः । ईश्वरस्वरूपाज्ञानाद्बन्धः । तज्ज्ञानान्मोक्षः । तथा च श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः' (श्वे०-१-११) इत्यादिः ।

---

तिरोहितमित्युक्तं, तिरोधायकमाह—

॥ **देहयोगाद्वा सोऽपि** ॥६॥

सोऽपि जीवस्य ईश्वरसाम्यतिरोभावोऽपि, देहयोगात्, अविद्यादेहादिसम्बन्धादित्यर्थः । वाकारो जीवेश्वरभेदशङ्कानिरासार्थः । ततश्च न सांकल्पिकी स्वप्नसृष्टिः ।

किञ्च—साङ्कल्पिकत्वे अनिष्टं न सृजेत् । न हि संकल्पपूर्वकमनिष्टं कश्चित्सृजति । तस्मान्मायामात्रं स्वप्नदर्शनमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सन्ध्याधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ तदभावाधिकरणम् ॥

॥ **तदभावो नाडीषु तच्छ्रुतेरात्मनि च** ॥७॥

एवं जीवस्य स्वप्रकाशत्वसिद्ध्ये स्वप्नमिथ्यात्वमभिधाय, ब्रह्मात्मत्वसिद्ध्ये सुषुप्तिरिदानीं परीक्ष्यते । नाडीपुरीततपरमात्मनां विकल्पेन सुषुप्तिस्थानत्वं, समुच्चयेन वेति संशये, विकल्प इति प्राप्तम् ।

तथा हि—'तद्यत्रैतत्सुप्तः समस्तस्संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' (छा०-८-६-३) इति क्वचिच्छ्रूयते । अन्यत्र च 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ०-२-१-१९) इति । क्वचिच्च 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ०-२-१-१७) इति । त्रयाणामपि एकसुषुप्तिस्थानत्वात् व्रीहियववद्विकल्पप्राप्तौ उच्यते—तदभावः, तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः सुषुप्तिरित्यर्थः । नाडीष्वात्मनि चकारात्पुरीतति च समुच्चयेन भवति । कुतः ? तच्छ्रुतेः । उदाहृतश्रुतिषु

सर्वेषामाधारत्वश्रुतेरित्यर्थः। न चैकार्थत्वाद्विकल्पः, असिद्धेः। नाडीनां मार्गत्वात्। पुरीततश्च प्राकारवत् हृदयवेष्टनत्वात्। तथा च नाडीद्वारा पुरीतति प्रविश्य ब्रह्मणि शेते इति भिन्नकार्यत्वात्समुच्चयोपपत्तिः।

एवं संप्रसन्नस्य परमात्मैकीभावकथनेनाविद्यानिवृत्तावत्यन्ताभेद उपपन्नतर इत्युक्तं भवति।

---

॥ अतः प्रबोधोऽस्मात् ॥८॥

यतः कारणादात्मन्येव सुषुप्तिः, अतः कारणादस्मादात्मनः सकाशात्प्रबोधः स्वापाधिकारे श्रूयते—'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' ( बृ०-२-१-२० ) इत्यादि। यदि नाड्यादीनामपि सुषुप्तिस्थानत्वं, तदा ततोऽपि प्रबोधः श्रूयेत। तस्मादप्यात्मन्येव सुषुप्तिः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तदभावाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥

नन्वस्मात्प्रबोधो नात्मनि सुषुप्तिं गमयितुमलं, असुप्तस्यापि प्रबोधसंभवादिति शङ्का-समाधानाय इदमधिकरणम्। यः पूर्वं सुप्तः, स वा अन्यो वा प्रबुध्यते, उत स एवेति संशये, स वान्यो वेति प्राप्तम्। यथा हि जलराशौ जलबिन्दुं निक्षिप्य पुनरुद्धरणे, स वा अन्यो वा उद्ध्रियते, न तु स एवेति नियमः, तद्वत्प्रकृतेऽपीति प्राप्ते, ब्रूमः—तुर्नार्थः। यस्सुप्तः स एव प्रबुध्यते। कुतः? कर्मादिभ्यः। कर्मणश्च—पूर्वेद्युरारब्धं कर्म परेद्युरनुतिष्ठन् नान्यो भवितुमर्हति। अनुस्मृतेश्च—'पूर्वेद्युर्योऽहमद्राक्षं सोऽहमिदानीं स्मरामि' इति। अन्यानुभूते अन्यस्य स्मृतिर्न स्यात्। शब्दाच्च—'त इह व्याघ्रो वा सिंहो वा—यद्यद्भवन्ति तदाभवन्ति' ( छा०-६-९-३ ) इति स्वापप्रबोधाधिकारे श्रूयते। तत्रात्मान्तरोत्थाने न सामञ्जस्यं स्यात्। विधेश्च—ज्योतिष्टोमादिविधिरन्योत्थानपक्षेऽनर्थकः स्यात्। सुप्तमात्रस्यैव मुक्तत्वात्।

न च जलबिन्दुन्यायः । तत्र बिन्दोर्जलेनात्यन्ताभेदात् । इह भेदोपाधेरविद्यायास्सत्त्वेन अत्यन्ताभेदाभावात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ मुग्धाधिकरणम् ॥

॥ **मुग्धेऽर्धसंपत्तिः परिशेषात्** ॥१०॥

मुग्धावस्था जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयान्तर्गता, भिन्ना वेति संशये, अन्तर्गतेत्याह । कुतः ? श्रुतावस्थात्रयव्यतिरिक्तावस्थाया अप्रसिद्धत्वादिति प्राप्ते, ब्रूमः—परिशेषादवस्थान्तरं मूर्च्छा । तथा हि—न जाग्रत्स्वप्नयोः अन्तर्भावः, विशेषविज्ञानाभावात् । न सुषुप्तौ । मुग्धे मूर्च्छिते अर्धसंपत्तिः, यतः सुषुप्तावस्थाया अर्धसंपत्तिरेकदेशानुवृत्तिर्विशेषविज्ञानाभावरूपा मूर्च्छिते दृश्यते । न तु मुखप्रसादनियतकालोच्छ्वसितनिश्वासाद्यंशान्तरानुवृत्तिः । तस्मात्परिशेषादवस्थान्तरमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां मुग्धाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ उभयलिङ्गाधिकरणम् ॥

॥ **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** ॥११॥

तच्च ब्रह्म सरूपं नीरूपञ्च, उत नीरूपमेवेति संशये, उभयरूपमिति प्राप्तम् । 'सत्यकामः सत्यसंकल्पः' (छा०-८-७-१) इत्यादेः, 'अशब्दमस्पर्शमरूपम्' (का०-३-१५) इत्यादेश्च, रूपारूपत्वप्रतिपादकस्य बहुलमुपलब्धेरिति प्राप्ते, अभिधीयते—स्थानतः उपाधितोऽपि, परस्य परमात्मनः, नोभयलिङ्गं नोभयरूपत्वं पारमार्थिकं एकस्य विरुद्धोभयरूपत्वासंभवात् । तत्रापि नीरूपत्वमेव सत्यम् । सरूपत्वन्तु उपासनाद्यर्थमारोपितम् । कुतः ? सर्वत्र हि, यस्मात्सर्ववेदान्तेषु ब्रह्मप्रकरणे 'अशब्दमस्पर्शमरूपमव्ययम्' (का०-३-१५) इत्यादिना निर्गुणस्वरूपमेव तात्पर्येण प्रतिपाद्यते ।

---

॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

ननु ' चतुष्पाद्ब्रह्म ' ' षोडशकलं ब्रह्म ' इत्याद्याकारभेदश्रवणात्सविशेषत्वमपि ब्रह्मणः किन्न स्यादिति चेन्न। प्रत्येकमतद्वचनात् , प्रत्युपाधिभेदमतद्रूपस्यानुपाधिकस्य प्रतिपादनादित्यर्थः ।

' यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा ' ( बृ०-२-५-१ ) इत्याद्येकरूपत्वश्रवणान्न भिन्नाकारत्वं ब्रह्मणः ।

---

॥ अपि चैवमेके ॥१३॥

अपि च एवं भेददर्शननिन्दापूर्वकं अभेदमेके शाखिनस्समामनन्ति—

' मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ' ( का०-४-११ )

इत्यादि ।

---

ननु साकारनिराकारप्रतिपादकसाम्ये, कथं निराकारावधारणमत आह—

॥ अरूपवदेव हि तत्प्रधानत्वात् ॥१४॥

अरूपवदेव हि, रूपरहितमेव ब्रह्म । कुतः ? तत्प्रधानत्वात् , 'अशब्दमस्पर्शमरूपमव्ययम् ' ( का०-३-१५ ) इत्यादीनामरूपब्रह्मप्रतिपादनपरत्वादित्यर्थः । सगुणप्रतिपादकानां च उपासनाविधिपरत्वान्न स्वरूपनिष्ठत्वम् । तत्राविरुद्धेषु न बाधः । विरुद्धेषु तु धर्मेषु निर्गुणश्रुतिप्राबल्याद्दूरादेव उपासनाविधिरित्याश्रीयते ।

---

नन्वाकारप्रतिपादकवाक्यानां निरालम्बनत्वं स्यादत आह—

॥ प्रकाशवच्चावैयर्थ्यात् ॥१५॥

चस्त्वर्थः । यथा सूर्यचन्द्रादिप्रकाशः अङ्गुल्याद्युपाधिसम्बन्धात्तद्गतं ऋजुवक्रादिभावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव प्रतिपद्यत इति, साकारप्रतिपादकानामपि न वैयर्थ्यम् , विगतार्थत्वं निरालम्बनत्वमित्यर्थः ।

---

नन्वाकारो वास्तव एवास्तु, किमर्थमारोपवर्णनमत आह—

॥ आह च तन्मात्रम् ॥१६॥

चस्त्वर्थः । तन्मात्रं, चैतन्यमात्रं विलक्षणरूपान्तररहितं ब्रह्म श्रुतिराह—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव (बृ०-४-५-१३) इति । यथा सैन्धवघनस्य सर्वं एकरसात्मकमेव स्वरूपं न रसान्तरं, एवमात्मापि चैतन्यैकरस एवेत्यर्थः ।

---

रूपान्तरनिषेधादपि चैतन्यैकरसमित्याह—

॥ दर्शयति चाथो अपि स्मर्यते ॥१७॥

दर्शयति च श्रुतिः परप्रतिषेधेन ब्रह्म निर्विशेषस्वरूपं—'स एष नेति नेति' (बृ०-३-९-२६) 'अन्यदेव तद्विदितादथो अविदितादधि' (केन०-१-३) इत्याद्या । अथो अपि स्मर्यते । स्मृतिष्वपि रूपान्तरनिषेधः स्मर्यते—

'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥' (गी०-१३-१२)

इत्याद्यासु ।

---

॥ अत एव चोपमा सूर्यकादिवत् ॥१८॥

यत एव चायमात्मा चैतन्यस्वरूपः निर्विशेषोऽभिन्नः, अत एव श्रुतिषु जलसूर्यकादिवदित्युपमा श्रूयते । सूर्य एव सूर्यकः । 'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥' इत्यादिषु ।

---

अत्र शङ्कते—

॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥१९॥

तुशब्द आशङ्काद्योतनार्थः । तथात्वं, जलसूर्यादितुल्यत्वं ब्रह्मणो नोपपद्यते । कुतः ? अम्बुवदग्रहणात् । अम्बुनीव अम्बुवत् । यथा मूर्तस्सूर्यो देशान्तरस्थः देशान्त-

रस्थमूर्तजले प्रतिबिम्बितः, नैवमात्मा अमूर्तः सर्वव्यापकः समानदेशेषु उपाधिषु प्रतिबिम्बितुमर्हतीति, न सूर्यदृष्टान्तोपपत्तिरिति ।

---

समाधत्ते—

**॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥२०॥**

सर्वसाम्ये दृष्टान्तदार्ष्टान्तिकभाव एव नास्तीति, विवक्षितकिञ्चित्साम्येन दृष्टान्तत्वं सर्वत्र अविवादम् । एवञ्च प्रकृते वृद्धिह्रासभाक्त्वं उभयसाधारणो धर्मः । यथा जलप्रतिबिम्बितस्य जलेऽन्तर्भावात्तद्वृद्धिह्रासचलनादियुक्तत्वम्, एवं निर्विशेषस्यापि व्यापकस्य ब्रह्मणो देहाद्युपाध्यन्तर्भावात्तद्वृद्धिह्रासादिकमुपपन्नम् । एवमुक्तप्रकारेण उभयोर्दृष्टान्तदार्ष्टान्तिकयोस्सामञ्जस्यादविरोध इति शेषः ।

---

ननु परस्य न देहादिप्रवेशो, येन तदुपाधिकं वृद्ध्यादिकमत आह—

**॥ दर्शनाच्च ॥२१॥**

परस्यापि ब्रह्मणः 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा०-६-३-२) इत्यादिश्रुतिषु उपाधिप्रवेशदर्शनादित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उभयलिङ्गाधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ प्रकृतैतावत्त्वाधिकरणम् ॥

**॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥**

निषेधवाक्यपर्यालोचनया निर्विशेषं ब्रह्मावधारितम् । अत्र ब्रह्मापि किं निषेधविषयो, न वेति विचारः । 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च' (बृ०-२-३-१) इत्युपक्रम्य, रूपद्वयं प्रपञ्च्य, 'अथात आदेशो नेति नेति' (बृ०-२-३-६) इति श्रूयते । तत्र किं रूपि ब्रह्मापि निषेधविषयः, किं वा रूपद्वयमेवेति संशये, प्रकृतत्वा-

विशेषाद्रूपब्रह्मणोर्द्वयोरपि प्रतिषेधे प्राप्ते, उच्यते—न ब्रह्मणो निषेधः। सर्वनिषेधे शून्यवादप्रसङ्गात्। न चेष्टापत्तिः। निरधिष्ठानभ्रमासम्भवात्। तस्मान्न रूपद्वयनिषेधोऽयम्। तदाह—प्रकृतैतावत्त्वं हि प्रतिषेधति। प्रकृतं यदेतावत् इयत्तापरिच्छिन्नं, भावप्रत्ययो न विवक्षितः, मूर्तञ्चामूर्तञ्च, आद्यं भूतत्रयं मूर्तम्, अन्त्यद्वयममूर्तम्, तदुभयमितिशब्देन सन्निहितावलम्बिना परामृश्य, नकारो निषेधति। नञ्द्वयं रूपद्वयनिषेधाय।

यद्वा वीप्सेयं सर्वदृश्यप्रतिषेधार्था। किञ्च—यतः, ततः प्रतिषेधानन्तरं भूयो ब्रवीति—'अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ०-२-३-६) इति। अभावभावशेषे प्रतिषेधे सति, नेतिवाक्यप्रकृतस्य सत्यशब्देनाभिधानमनुपपन्नम्। तस्माद्ब्रह्मावसानः प्रतिषेधः।

---

ननु यदि सद्रूपं ब्रह्म, कुतो न गृह्यते? अत आह—

॥ **तदव्यक्तमाह हि** ॥२३॥

तत् ब्रह्माव्यक्तमनिन्द्रियग्राह्यम्। कुतः? आह हि। हिर्हेतौ। 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' (मु०-३-१-८) इत्यादिश्रुतिरग्राह्यत्वमाह। अन्यैर्देवैरिन्द्रियान्तरैः। तपसा, कृच्छ्रादिना। कर्मणा, अग्निहोत्रादिनेति श्रुत्यर्थः।

---

॥ **अपि च संराधने प्रत्यक्षानुमानाभ्याम्** ॥२४॥

अपि चैनमात्मानं निष्प्रपञ्चमव्यक्तं योगिनः संराधने पश्यन्ति। संराधनं भक्तिश्रद्धापूर्वकं ध्यानम्। कुतः? प्रत्यक्षानुमानाभ्याम्। श्रुतिस्मृतिभ्यामित्यर्थः। तथाहि श्रुतिः—'पराञ्चि खानि व्यतृणत्स्वयंभूः तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥' (का०-४-१) इति। स्वयंभूः ईश्वरः, खं श्रोत्रं, तदुपलक्षितानि सर्वेन्द्रियाणि खानि, पराञ्चि बहिर्विषयाणि यथा भवन्ति, तथा व्यतृणत् हिंसितवान्। तस्माद्धेतोः पराङ् पश्यति सर्वलोकः, नान्तरात्मन् अन्तरात्मनि विषये न पश्यति। आत्मानं न पश्यतीत्यर्थः। कश्चिद्धीरो विवेकी, प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरुपरतेन्द्रियः। किमर्थम्? अमृतत्वमिच्छन्निति श्रुत्यर्थः।

स्मृतिरपि—'यं विनिद्रा जितश्वासास्संतुष्टास्संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥' इत्यादिः।

---

ननु आराध्याराधकभावाभ्युपगमे भेदस्स्यादत आह—

॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥२५॥

यथा सवितृप्रकाशस्यावैशेष्यमभेदः, तथा जीवपरमात्मनोरपि। प्रकाशस्य भेद-प्रसक्तिं दर्शयति—प्रकाशश्च कर्मणीति। कर्म कार्यम्। सामान्येन एकवचनम्। कर्मसु कार्येषु अङ्गुल्याद्युपाधिषु, प्रकाशः तत्तदवच्छिन्नतया भेदेन भासमानोऽपि, वस्तुतो यथा न भिद्यते, तथा अविद्यया भिन्नतया भासमानयोरपि जीवपरमात्मनोरभेद एव मन्तव्यः। कुतः? अभ्यासात्। सर्ववेदान्तेषु पौनःपुन्येन जीवपरमात्माभेदप्रतिपादनादित्यर्थः।

---

॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥२६॥

यतो जीवस्य परमात्मना अभेदस्तात्त्विकः, अविद्याकृतस्तु भेदः, अतः अनन्तेन परमात्मना एकतां गच्छति अविद्यानिवृत्तौ। तथाहि श्रुतिः लिङ्गं दर्शयति—'ब्रह्म वेद ब्रह्मैव भवति' (मु०-३-२-९) 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ०-४-४-६) इति च।

---

आशंकते—

॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥२७॥

यद्यभेद एव ऐकान्तिकः, अविद्याकृतस्तु भेदः, तदा 'यो विज्ञाने तिष्ठन्' (बृ०-३-७-२२) इत्यादिभेदव्यपदेशो निरालम्बनस्स्यात्। अतः उभयोर्भेदाभेदयोः श्रुतौ व्यपदेशादभिधानात्, द्वयमपि वास्तवमभ्युपेयम्। अहिकुण्डलवत्। अहिरित्यभेदः। कुण्डलाभोगप्रांशुत्वादिसंस्थानविशेषैर्भेदः। एवं जीवपरमात्मनोरपि भेदाभेदाविति।

---

॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥२८॥

अथ वा, यथा प्रकाशस्तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात्, भिन्नतयापि व्यपदिश्येते, तद्वदिहापीति ।

---

समाधत्ते—

॥ पूर्ववद्वा ॥२९॥

वाकारो नार्थे । 'प्रकाशादिवच्चावैशेष्यम्' इत्यत्र यथा आविद्यको भेदो न पारमार्थिक इत्युक्तं, तथैवाङ्गीकर्तव्यम् । भेदाभेदयोरेकत्र विरोधात् । बन्धस्य पारमार्थिकत्वे, मुक्तत्वाभावप्रसङ्गाच्चेत्यर्थः ।

---

॥ प्रतिषेधाच्च ॥३०॥

किञ्च—'नान्योऽतोऽस्ति द्रष्टा' (बृ०-३-७-२३) 'नेति नेति' (बृ०-२-३-६) इत्यादिनिषेधान्नात्मभेदः पारमर्थिकः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रकृतैतावत्त्वाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ पराधिकरणम् ॥

॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥

ब्रह्मणोऽन्यद्वस्त्वन्तरमस्ति, न वेति संदेहः । किं प्राप्तम्? अत उक्तान्निर्विशेषब्रह्मणः परमन्यद्वस्तु अस्ति । कुतः? सेत्वादिव्यपदेशेभ्यः । 'अथ य आत्मा स सेतुर्विधृतिः' (छा०-८-४-१) इति सेतुव्यपदेशः । उन्मानं परिमाणम् । 'तदेतद्ब्रह्म चतुष्पादष्टाशफम्' इत्याद्युन्मानव्यपदेशः । 'सता सोम्य तदा संपन्नो भवति' (छा०-६-८-१) इति सम्बन्धव्यपदेशः । 'आत्मा वा अरे द्रष्टव्यः' (बृ०-२-४-५) इति भेदव्यपदेशः । एतेषां व्यपदेशानां भेदव्यतिरिक्तेणासम्भवाद्भिन्नं वस्त्वस्ति ।

---

एवं प्राप्ते, ब्रूमः—

**॥ सामान्यात्तु ॥३२॥**

तुशब्दः पक्षव्यावृत्त्यर्थः । विधारकत्वसामान्यात्सेतुशब्दप्रयोगः । जलविधारकप्रसिद्धसेतुवद्ब्रह्मणो जगन्मर्यादाविधारकत्वात् । अतो न सेतुव्यपदेशाद्वस्त्वन्तरसिद्धिः ।

---

नाप्युन्मानव्यपदेशादित्याह—

**॥ बुद्ध्यर्थः पादवत् ॥३३॥**

उन्मानव्यपदेशो बुद्ध्यर्थः । उपासनार्थ इत्यर्थः । पादवत् । यथा कार्षापणे व्यवहारसौकर्याय पादविभागः कल्प्यते, सर्वदा सर्वैः सकलेन कार्षापणेन व्यवहाराभावात् । एवं निर्विशेषे ब्रह्मणि सर्वेषां बुद्धिसमाधानाभावान्मन्दबुद्ध्यनुग्रहाय सगुणोपासना उक्तेत्यर्थः ।

---

अवशिष्टव्यपदेशद्वयस्योत्तरमाह—

**॥ स्थानविशेषात्प्रकाशादिवत् ॥३४॥**

स्थानविशेषादुपाधिविशेषाद्व्यपदेशद्वयोपपत्तिः । बुद्ध्याद्युपाधिकृत्य जीवचैतन्यस्य तदुपशमे परमात्मना सम्बन्ध उपपद्यत इति चौपाधिकस्सम्बन्धव्यपदेशः । एवं भेदव्यपदेशोऽप्यौपाधिकः । प्रकाशादिवत् , यथा प्रकाशादेरौपाधिको भेदस्तद्वत् ।

---

**॥ उपपत्तेश्च ॥३५॥**

सम्बन्धभेदव्यपदेशौ उक्तप्रकारेणैव उपपद्येते, नान्यथा । 'स्वमपीतो भवति' (छा०-६-८-१) इति हि स्वरूपसंबन्धमेनमामनन्ति । स्वरूपस्य चानपायित्वात् न नरनगरन्यायेन संबन्धो घटते । उपाधिकृतस्वरूपतिरोधानात्तु स्वाप्यय उपपन्नतरः । अभेदश्रुतिविरोधाच्च भेदोऽप्यौपाधिक एव उपपन्नतरः । व्यपदेशचतुष्टयस्याप्युपपन्नत्वं वानेन उच्यते ।

---

एवं सेत्वादिव्यपदेशान्यथासिद्धिमुक्त्वा, स्वपक्षसाधकं हेत्वन्तरमाह—

॥ **तथान्यप्रतिषेधात्** ॥३६॥

'नेह नानास्ति किञ्चन' ( बृ०-४-४-१९ ) इत्यादिना अन्यमात्रप्रतिषेधादपि वस्त्वन्तरं नास्तीति प्रतिपत्तव्यमित्यर्थः ।

---

॥ **अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥३७॥

अनेन सेत्वादिव्यपदेशनिरासेन सर्वगतत्वमात्मनः सिद्धम् । अन्यथा परिच्छिन्नत्वान्न सिद्ध्येत् । सर्वगतत्वं चायामशब्दादिभ्योऽवगम्यते । आयामो व्याप्तिः । 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' ( छा०-८-१-३ ) 'आकाशवत्सर्वगतश्च नित्यः' 'ज्यायान्दिवः' ( छा०-३-१४-३ ) 'ज्यायानाकाशात्' इत्यादिशब्देभ्यः ।

यद्यपि 'तदनन्यत्वम्' (ब्र०-सू०-२-१-१४ ) इत्यत्र सर्वप्रपञ्चस्य मिथ्यात्वमुक्तं, तथापि सेत्वादिव्यपदेशनिमित्तशङ्कानिरासायेदमधिकरणम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पराधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ फलाधिकरणम् ॥

॥ **फलमत उपपत्तेः** ॥३८॥

इदानीमीश्वरस्य व्यवहारदशायां फलदातृत्वं प्रतिपाद्यते । ईश्वरनिरपेक्षं कर्मैव फलदं, तत्सापेक्ष ईश्वरो वेति संशये, सिद्धान्तेनोपक्रमते—अतः ईश्वरादेव स्वर्गादिफलं भवितुमर्हति । कुतः ? उपपत्तेः । सर्वज्ञस्येश्वरस्य कर्मानुरूपफलदानसामर्थ्यमुपपद्यते, न त्वचेतनस्य आशुनाशिनः कर्मण इत्यर्थः ।

---

॥ **श्रुतत्वाच्च** ॥३९॥

'अन्नादो वसुदानः' ( बृ०-४-४-२४ ) इत्यादिना ईश्वरस्य फलदातृत्वस्य श्रुतत्वाच्चेत्यर्थः ।

---

## ॥ धर्मं जैमिनिरत एव ॥४०॥

पूर्वपक्ष उच्यते—जैमिनिर्धर्मं ईश्वरनिरपेक्षं फलहेतुं मन्यते। कुतः ? उपपत्तेः, श्रुतत्वाच्च। 'स्वर्गकामो यजेत' इति यागस्य फलसाधनत्वं श्रुतम्। अपूर्वद्वारा च तदुपपन्नमित्यर्थः।

---

## ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४१॥

तुर्नार्थे। बादरायणस्तु पूर्वं पूर्वोक्तमीश्वरं हेतुं मन्यते। कुतः ? हेतुव्यपदेशात्। धर्माधर्मयोरपि कारयितृत्वेन ईश्वरस्य हेतोर्व्यपदेशादित्यर्थः। 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। एवञ्च धर्मसहित ईश्वर एव फलहेतुः, न धर्ममात्रम्। ईश्वरप्रीतिव्यतिरेकेण कर्मजन्यापूर्वान्तरानङ्गीकारात्। तस्मादीश्वर एव कर्माराधितस्तदनुरूपं फलं ददाति।

इदं पुनरवधेयम्। स्वप्नसृष्टिमिथ्यात्वेन कर्तृत्वादेराध्यासिकत्वादसङ्गित्वं जीवस्योक्तम्। सुषुप्तौ ब्रह्मैक्येन तदेवासङ्गित्वं दृढीकृतम्। तस्यैव पुनः प्रबोधेन अनित्यत्वशङ्कानिरास.। मूर्च्छाविचारेण श्वासादिसर्वव्यवहारलोपेऽपि मरणे जीवनाशशङ्कानिरास, इति अधिकरणचतुष्टयेन त्वंपदार्थः शोधितः। अनन्तराधिकरणचतुष्टयेन तत्पदार्थः। तत्रापि प्रथमेन ब्रह्मणो नीरूपत्वं, द्वितीयेन निषेधाविषयत्वं, तृतीयेन अद्वितीयत्वं, चतुर्थेन व्यवहारदशायां फलदातृत्वं स्वरूपानन्तर्गतमपि शाखाचन्द्रन्यायेन उपलक्षणत्वात्प्रतिपादितमिति तत्त्वंपदार्थौ शोधिताविति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां फलाधिकरणम् ॥

इति श्री(महा)महोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंसश्रीमत्तिरुममलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तृतीयाध्यायस्य द्वितीयः पादः ॥

संख्येऽष्टावेकचत्वारिंशत्।

अधिकरणसंख्या—(८)

सूत्रसंख्या—(४१)

---

॥ श्रीः ॥

॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥

(१) ॥ अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥

## ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥

द्वितीयपादे तत्त्वंपदार्थौ शोधितौ । इदानीं सगुणनिर्गुणब्रह्मवाक्यानां अपेक्षितार्थोपसंहारेण अर्थो विचार्यते । सगुणोपासनायाश्चित्तशुद्ध्यादिद्वारा निर्गुणविद्योपयोगात् तद्वाक्यविचारोऽर्थवान् । तत्प्रसङ्गाद्विद्यान्तराणामपि भेदाभेदविचारः । निर्गुणविद्यायां वेद्याभेदान्न विद्याभेदः । गुणोपसंहारस्तु 'आनन्दादयः' (ब्र०-३-३-११) इत्याद्यधिकरणैः लक्ष्याखण्डवाक्यार्थसिद्ध्यर्थं वाच्यार्थोपसंहाररूपो वर्ण्यते ।

तत्राद्याधिकरणे सगुणविद्यानां प्रतिवेदान्तं भेदः, उत अभेदः, इति संशये, वाजसनेयकं तैत्तिरीयकमित्यादिनामभेदाद्विज्ञानभेदे प्राप्ते, ब्रूमः—सर्ववेदान्तप्रत्ययम् । सामान्याभिप्रायमेकवचनम् । सर्वेषु वेदान्तेषु प्रतीयत इति प्रत्ययम् । प्रतीयमानानि विज्ञानानि, न भिन्नानि । कुतः ? चोदनाद्यविशेषात् । यथा 'अग्निहोत्रं जुहोति' इति चोदनैक्याच्छाखाभेदेऽपि कर्मैक्यं, एवं 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' (बृ०-६-१-१) (छा०-५-१-१) इति वाजसनेयिनां छन्दोगानां चैकरूपैव चोदना । तस्या अविशेषान्न भेदः । आदिशब्देन फलाविशेष उक्तः । 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृ०-६-१-१) इत्युभयत्र श्रवणात् । नाम च पौरुषेयं न श्रुत्युक्तमिति, न भेदकम् ।

---

## ॥ भेदान्नेति चेन्नैकस्यामपि ॥२॥

ननु बृहदारण्यके पञ्चाग्निविद्यायां अग्निरधिक आम्नायते, न छान्दोग्ये । तथा च वेद्यभेदाद्विद्याभेदावश्यकत्वान्न सर्ववेदान्तप्रत्ययत्वमिति चेन्न । यतः एकस्यामपि विद्यायां गुणभेद उपपन्नः । षोडशिग्रहणाग्रहणवत् । वस्तुतो वाजसनेय्याम्नातस्य षष्ठस्याग्नेः छान्दोग्ये उपसंहारसम्भवान्न भेदशङ्का ।

---

ननु 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मु०-३-२-१०) इत्याथर्वणिकानां विद्यायां शिरोव्रतापेक्षणादन्येषामनपेक्षणाद्धर्मभेदेन विद्याभेद इत्यत आह—

**॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥**

स्वाध्यायस्यायं धर्मो, न विद्यायाः। कुतः? तथात्वेन हि समाचारे। हि यस्मात्समाचारे वेदव्रतोपदेशपरे ग्रन्थविशेषे, तथात्वेन, वेदव्रतत्वेन, शिरोव्रतं व्याख्यातमित्याथर्वणिका आमनन्ति।

किञ्च—अधिकाराच्च। 'नैतदचीर्णव्रतोऽधीते' (मु०-३-२-११) इत्यधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च अध्ययनधर्मत्वम्। 'एतां ब्रह्मविद्याम्' (मु०-३-२-१०) इत्यत्रापि एतच्छब्दस्य प्रकृतग्रन्थसम्बन्धनिमित्तत्वेन ग्रन्थाध्ययन एव धर्मान्वयात्। सववच्च तन्नियमः। यथा सवाः सप्त सौर्यादयः शतौदनपर्यन्ताः वेदान्तरोदिततेताग्न्यसम्बन्धादाथर्वणोदितैकाग्न्यभिसंबन्धाच्चाथर्वणिकानामेव नियम्यन्ते, तथा अयमपि धर्मः स्वाध्यायविशेषसम्बन्धात्तत्रैव नियम्यत इति न विद्याभेदकः।

---

**॥ दर्शयति च ॥५॥**

श्रुतिरपि (सर्ववेदान्तेषु वेद्यैक्योपदेशात्) विद्यैक्यं दर्शयति 'सर्वे वेदा यत्पदमामनन्ति' (का०-२-१५) 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इत्यादिः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्ववेदान्तप्रत्ययाधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ उपसंहाराधिकरणम् ॥

**॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥५॥**

वाजसनेयके प्राणविद्यायां रेतआख्यगुण आम्नातः 'रेतो होच्चक्राम' (बृ०-६-१-१२) इति। छान्दोग्ये नाम्नातः। स किं तत्रोपसंहर्तव्यो, न वेति संशये, अश्रुत-

त्वान्नोपसंहर्तव्य इति प्राप्ते, ब्रूमः—अन्यत्र श्रुतस्य गुणस्य तत्समाने विज्ञाने उपसंहारः कर्तव्यः। कुतः? अर्थाभेदाद्विज्ञानैकत्वात्। विधिशेषवत्। यथा अग्निहोत्रादिविधिशेषस्याङ्गस्य शाखान्तरीयस्य शाखान्तरे उपसंहारस्तद्वत्। पूर्वाधिकरणस्य प्रयोजनाधिकरणमिदम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां उपसंहाराधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ अन्यथात्वाधिकरणम् ॥

**॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥**

चोदनाद्यविशेषादित्यस्यापवादार्थमिदम्। वाजसनेयके श्रूयते—'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति। ते ह वाचमूचुस्त्वं न उद्गायेति' (बृ०-१-३-१-२) इत्युपक्रम्य, वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा, 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' (बृ०-१-३-७) इति। छान्दोग्येऽपि 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति' (छा०-१-२-१) इत्युपक्रम्य, इतरान्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा, 'अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासांचक्रिरे' (छा०-१-२-७) इति। उभयत्र प्राणप्रशंसया प्राणविद्या विधीयते। सा किमेका, नाना वेति संशये, पूर्वेण न्यायेन एकेत्याह।

ननु नैकत्वं युक्तं, किन्तु अन्यथात्वं, भेद इत्यर्थः। कुतः? शब्दात्। 'त्वं न उद्गाय' (बृ०-१-३-२) इत्युद्गीथकर्तृत्वप्रतिपादकः शब्दः। 'तमुद्गीथम्' (छा०-१-२-७) इत्युद्गीथत्वप्रतिपादकः शब्दः। एवं शब्दभेदादर्थभेदप्रतीतेः कथं विद्यैकत्वमिति चेन्न। कुतः? अविशेषात्। देवासुरसंग्रामोपक्रमः, असुरवधायोद्गीथोपन्यासो, वागादिसंकीर्तनं, तन्निन्देत्यादिबहुतरार्थस्याविशेषात्, समानत्वादित्यर्थः।

---

बहुसाम्येनेषद्भेदस्याप्रयोजकत्वाद्विद्यैक्यमिति प्राप्ते, ब्रूमः—

**॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥**

न वैकत्वं, विद्याभेद एव। कुतः? प्रकरणभेदात्, प्रक्रमभेदादित्यर्थः। छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा०-१-१-१) इति उद्गीथावयवस्य

ओङ्कारस्य उपास्यत्वं प्रक्रम्य, आख्यायिकाद्वारेण 'प्राणमुद्गीथमुपासांचक्रिरे' ( छा०-१-२-२ ) इत्याह । तत्र यद्युद्गीथशब्देन सकला सामभक्तिर्विवक्ष्येत, तत्कर्ता वा उद्गाता ऋत्विक्प्राणो विवक्ष्येत, तदा उपक्रमविरोधो लक्षणा च स्यात् । तस्मादत्र उद्गीथावयवे ओङ्कारे प्राणदृष्टिरुपदिश्यते । वाजसनेयके तु सकलोद्गीथभक्तिरुच्यते । 'त्वं न उद्गाय' ( बृ०-१-३-२ ) इत्यपि तद्गातुः ऋत्विजः प्राणत्वेन उपासनमित्युपक्रमभेदः । उपक्रमानुसारी चोपसंहार इत्युपास्यभेदादुपासनाभेदः । परोवरीयस्त्वादिवत् ।

यथा परमात्मस्वरूपोपासनासाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् । स एष परोवरीयानुद्गीथः' ( छा०-१-९-१-२ ) इति परोवरीयस्त्वगुणविशिष्टमुद्गीथोपासनमक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नं,एवमिहापि । श्रुतावाकाशः परमात्मा । परस्मात्प्राणात् वरः वराच्च वरीयानुद्गीथः । सुगागमः छान्दसः ।

---

## ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥८॥

ननु उद्गीथविद्येत्युभयत्र संज्ञाया एकत्वाद्विद्यैकत्वमिति चेत् । तुर्नार्थे । तदुक्तम् । 'न वा प्रकरणभेदात्' ( ब्र०-सू०-३-३-७ ) इति भेदकारणमुक्तमित्यर्थः । संज्ञाया व्यभिचारमाह—अस्तीति । तदपि संज्ञैकत्वमुपासनाभेदे कर्मभेदे चास्ति । परोवरीयस्त्वाद्युपासनेषु उद्गीथादिसंज्ञा, अग्निहोत्रदर्शपूर्णमासादिषु काठकादिसंज्ञा चैका ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्यथात्वाधिकरणम् ॥

---

॥ श्रीः ॥

### (४) ॥ अथ व्याप्त्यधिकरणम् ॥

## ॥ व्याप्तेश्च समञ्जसम् ॥९॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा०-१-१-१ ) इत्यत्र उद्गीथस्य अक्षरविशेषणत्वं सिद्धं कृत्वा विद्याभेदो निरूपितः । इदानीं विशेषणत्वसमर्थनायेदमधिकरणम् । तत्र 'अक्षरमुद्गीथम्' इति सामानाधिकरण्ये पक्षचतुष्टयं प्रतिभाति । 'नाम ब्रह्म' (छा०-७-१-५) इत्यादिवदध्यासः, 'चोरः स्थाणुः' इत्यादिवदपवादः

'तत्त्वमसि' (छा०-६-८-७) 'सत्यं ज्ञानम्' (तै० २-१) इत्यादिवदेकार्थत्वं, 'नीलमुत्पलम्' इत्यादिवद्विशेषणविशेष्यत्वं वेति। निर्णयकारणाभावादनिर्णयप्राप्तावाह—व्याप्तेश्चेति। चो नार्थे, पक्षत्रयव्यावर्तनप्रयोजनः। ओङ्कारस्य व्याप्तेः, वेदत्रयसाधारणत्वात्, सामवेदगतोद्गीथावयवत्वेन विशेषणत्वसंभवात्, विशेषणत्वमेव समञ्जसं युक्तमित्यर्थः। अध्यासो न संभवति, नाम्नि ब्रह्मबुद्धिवत् उद्गीथाक्षरयोरन्यतरस्मिन्नन्यतरबुद्ध्यध्यासे लक्षणाप्रसङ्गात्, फलकल्पनाप्रसङ्गाच्च। नाप्यपवादः, स्थाणुत्वबुद्ध्या चोर(त्व) बुद्धिनिवृत्तिवदुद्गीथबुद्ध्या ओङ्कारबुद्धेरनिवर्तनात्। पुरुषार्थाभावाच्च। नाप्येकार्थत्वपक्षः, प्रयोजनाभावात्। अनतिरिक्तार्थत्वे, अन्यतरशब्दवैयर्थ्यात्। भक्तिवाचकस्य उद्गीथशब्दस्य ओङ्कारसमानार्थत्वाभावाच्च।

न च विशेषणत्वपक्षेऽपि उद्गीथशब्दस्य अवयवलक्षणादोषः, विप्रकृष्टोद्गीथबुद्धिलक्षणापेक्षया सन्निकृष्टावयवलक्षणादोषस्य निकृष्टत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां व्याप्त्यधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ सर्वाभेदाधिकरणम् ॥

## ॥ सर्वाभेदादन्यत्रेमे ॥१०॥

छन्दोगानां काण्वानां च प्राणविद्यायां वसिष्ठत्वादिगुणा आम्नाताः। न कौषीतकिप्रभृतीनाम्। ते किं तत्र उपसंहर्तव्या, न वेति संशये, नोपसंहर्तव्याः। कुतः? 'अथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' (कौ०-२-१४) इत्यादिना तत्रैवंशब्दश्रवणात्। एवंशब्दस्य सन्निहितप्रकारपरामर्शकत्वेन शाखान्तरीयापरामर्शात्, इत्यधिकाशङ्कायामुच्यते—अन्यत्र कौषीतक्यादिप्राणविद्यायामपि, इमे वसिष्ठत्वदयः गुणाः उपसंहर्तव्याः। कुतः? सर्वाभेदात्। सर्वत्र प्राणविद्याया अभेदात्। उपास्यफलैकत्वादिना विद्यैक्यस्य दृढत्वात्। उपास्यद्वारा सन्निहितशाखान्तरीयप्रकारस्य एवं शब्देन परामर्शसम्भवात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वाभेदाधिकरणम् ॥

---

|| श्रीः ||

(११) || अथ आनन्दाद्यधिकरणम् ||

## || आनन्दादयः प्रधानस्य ||११||

'आनन्दो ब्रह्म' (तै०-३-६) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०-२-१) इति आनन्दादयः तैत्तिरीयके श्रुताः परब्रह्मविद्यायां गुणाः । 'प्रज्ञानं ब्रह्म' (ऐ०-उ०-३-५-३) इत्यैतरेयके ते उपसंहार्या, न वेति संशये, नोपसंहार्या इति प्राप्ते, उच्यते—प्रधानस्य ब्रह्मणो धर्माः आनन्दादयः सर्वत्र उपसंहार्याः । कुतः ? सर्वाभेदादेव ।

---

नन्विह प्रियशिरस्त्वादीनामुपसंहारः स्यादत आह—

## || प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ||१२||

'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः ।' (तै०-२-५) इत्यादीनामुपसंहाराप्राप्तिः । कुतः ? उपचयापचयौ हि भेदे । हि यस्माद्भेदे सत्युपचयापचयौ भवतः । प्रियमोदप्रमोदानन्दानां तारतम्याद्भेदावश्यकतया नाद्वितीयब्रह्मणि उपसंहारः संभवतीत्यर्थः ।

ननु आनन्दमयाधिकरणे प्रियशिरस्त्वादीनां कोशधर्मत्वं उक्तम् । किञ्च परस्मिन्ब्रह्मणि चितावतारोपायमात्रत्वेन एते परिकल्प्यन्ते, न द्रष्टव्यत्वेन, तथा च कथं प्रियशिरस्त्वादीनामुपसंहाराशङ्का ? एवं तर्हि न ब्रह्मधर्मत्वं प्रियशिरस्त्वादेः । ब्रह्मधर्मास्त्वेतान् कृत्वा, सूत्रकारेण न्यायमात्रं उक्तम् । विषयान्तरं तु उदाह्रियते । उपकोसलविद्यायां संयद्वामत्वादयः, दहरविद्यायां सत्यकामत्वादयश्च श्रूयन्ते । तत्रान्योन्यगुणोपसंहारः अनेन निराक्रियते, उपास्यब्रह्मैक्येऽपि प्रक्रमभेदेनोपासनाभेदात् ।

---

ननु तद्वदेवानन्दादयोऽपि नोपसंह्रियेरन्नत आह—

## || इतरे त्वर्थसामान्यात् ||१३||

तुर्नार्थे । इतरे आनन्दादयो ब्रह्मस्वरूपप्रतिपत्त्यर्थाः, नानुपसंहार्याः, किन्तु उपसंहार्या एव, अर्थसामान्यात् । अर्थस्य प्रतिपाद्यस्य ब्रह्मणस्सामान्यादेकत्वात् सर्वे सर्वत्र प्रतीये-

रन्नित्यर्थः । उपासनाविधिपरे वाक्ये विधेयगुणानां व्यवस्था नोपसंहारः । वस्तुनिष्ठवाक्यानां वस्तुनस्सर्वत्र ताद्रूप्यात् सर्वत्र सर्वोपसंहार इति विवेकार्थमिदमधिकरणम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आनन्दाद्यधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ आध्यानाधिकरणम् ॥

**॥ आध्यानाय प्रयोजनाभावात् ॥१४॥**

विद्याभेदाभेदचिन्ताप्रसङ्गाद्वाक्यभेदाभेदचिन्ता, तन्निबन्धनविद्याभेदाभेदचिन्ता वा। कठवल्लीषु श्रूयते—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥'

(का०-३-१०-११) इति ।

अस्यार्थः—मनसा अर्थानभिलष्य पश्चादिन्द्रियैर्विषयेषु प्रवर्तते, अतः इन्द्रियेभ्योऽर्थाः आन्तराभिलाषविषयत्वेन आन्तराः पराः । तेभ्योऽभिलाषात्मिका मनोवृत्तिः । ततो वृत्तिमती बुद्धिरभ्यन्तरा । ततस्तदुपादानभूतः महच्छब्दवाच्यो हिरण्यगर्भात्मा आन्तरः। ततोऽपि तदुपादानमव्यक्तमज्ञानम् । तस्मादधिष्ठानभूतश्चिद्रूपः पुरुषोऽभ्यन्तरः । पुरुषादभ्यन्तरं न किञ्चित् । सा काष्ठा आभ्यन्तरतारतम्यस्य विश्रान्तिभूमिः। परा गतिः, पुरुषार्थकामानां परमो गन्तव्यदेशश्चेति ।

अत्र किं सर्वे परत्वेन प्रतिपाद्याः, उत पुरुष एवैकः, इति विशये, सर्वे इति प्राप्तम् । वाक्येन सर्वेषां तत्तत्परत्वस्य प्रतीतेः । तथा च तत्तत्परत्वज्ञानस्य प्रयोजनान्तरं कल्पनीयम् । वाक्यभेदश्च अङ्गीकार्यः, इति प्राप्ते, ब्रूमः—आध्यानाय, ध्यानपूर्वकसम्यग्ज्ञानाय, पुरुष एवैकः सर्वेभ्यः परत्वेन प्रतिपाद्यते, न त्वर्थादयोऽपि । कुतः ? प्रयोजनाभावात् । पुरुषज्ञानस्य अविद्यानिवृत्तिः प्रयोजनं दृष्टं, तदनुसारितया इतरेषामपि परत्वप्रतिपादनस्य साफल्येनैकवाक्यत्वे संभवति, नादृष्टफलकल्पनेन वाक्यभेदाङ्गीकारो युक्तः ।

---

## ॥ आत्मशब्दाच्च ॥१५॥

इतोऽपि पुरुषप्रतिपत्त्यर्थमेव इन्द्रियाद्यनुक्रमणमिति गम्यते । यत् कारणं प्रकृतं पुरुषमात्मेत्याह—

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' (का०-३-१२) इति ।

अग्र्यया योगाभ्यासेन ऐकाग्र्यमापन्नया । सूक्ष्मदर्शिभिः योगिभिः । अत्र प्रकृतं पुरुषं आत्मशब्देन गृहीत्वा, दुर्विज्ञेयत्वं प्रतिपाद्य, तज्ज्ञानाय 'यच्छेद्वाङ्मनसी प्राज्ञः' (का०-३-१३) इत्यादियोगप्रतिपादनात्पुरुषज्ञानायैव अयं श्रुतिप्रयास इति निश्चीयत इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आध्यानाधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ आत्मगृहीत्यधिकरणम् ॥

## ॥ आत्मगृहीतिरितरवदुत्तरात् ॥१६॥

ऐतरेयके श्रूयते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्स ईक्षत लोकान्नु सृजा इति । स इमांल्लोकानसृजत' (ऐ०-१-१-२) इत्यादि । तत्र आत्मशब्देन हिरण्यगर्भो विवक्षितः, परमात्मा वेति संशये, हिरण्यगर्भ इति प्राप्ते, प्राह—अत्र आत्मशब्देन आत्मनः परमात्मनो गृहीतिः ग्रहणमिति युक्तम् । इतरवत्, यथा इतरेषु 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' (तै०-२-१) इत्यादिसृष्टिप्रतिपादकवाक्येषु आत्मशब्देन परमात्मा गृह्यते, तद्वत् । कुतः? उत्तरात्सन्दर्भात् । 'स ईक्षत' (ऐ०-१-१) इति ईक्षणपूर्वकस्रष्टृत्वस्य ईश्वरधर्मस्य उत्तरत्र प्रतिपादनादित्यर्थः ।

---

## ॥ अन्वयादिति चेत्स्यादवधारणात् ॥१७॥

ननु हिरण्यगर्भग्रहणमेव युक्तम् । कुतः? अन्वयात् । वाक्यान्वयस्य हिरण्यगर्भविषयत्वदर्शनात् । तथा हि—अत्र लोकसृष्टिः उक्ता, न भूतसृष्टिः । यत्र परमा-

त्माभिप्रेतस्तत्र भूतसृष्टिरुच्यते, 'आत्मन आकाशस्संभूतः' ( तै०-२-१ ) इत्यादिषु । लोकाश्च भूतसन्निवेशविशेषाः, तत्र ईश्वरनियुक्तस्यान्यस्य हेतुत्वं संभवतीति चेत् । अत्रोच्यते—स्यादवधारणात् । परमात्मग्रहणमेवात्र युक्तं स्यात् । कुतः ? अवधारणात् । 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐ०-१-१) इति प्रागुत्पत्तेरात्मैकत्वावधारणात् । तच्च परमात्मपरिग्रहे समञ्जसं नान्यथा । लोकसृष्टावपि भूतसृष्टिरुपसंहरिष्यते । यथा 'तत्तेजोऽसृजत' ( छा०-६-२-३ ) इत्यादौ वियद्वायुसृष्ट्यनन्तरमिति योजितं, तद्वदत्रापि शास्त्रान्तरसिद्धमहाभूतसृष्ट्यनन्तरमेव लोकसृष्टिरिति व्याख्येयम् ।

एवं वा—

॥ आत्मगृहीतिरितरवदुत्तरात् ॥

बृहदारण्यके 'कतम आत्मा' ( बृ०-४-३-७ ) इत्युपक्रम्य आत्मा प्रपञ्चितः । छान्दोग्ये 'सदेव सोम्येदमग्र आसीत्' ( छा०-६-२-१ ) इत्युपक्रम्य सत् प्रपञ्चितम् । किमुभयत्र भिन्नार्थत्वं, एकार्थत्वं वेति संशये, सदात्मशब्दयोः भिन्नार्थत्वाद्भेदे प्राप्ते, आह—इतरवद्वाजसनेयकवत् छान्दोग्येऽपि आत्मगृहीतिर्युक्ता । कुतः ? उत्तरात् । 'स आत्मा तत्त्वमसि' ( छा०-६-८-७ ) इति सच्छब्दवाच्यस्य आत्मत्वोपसंहारात् ।

॥ अन्वयादिति चेत्स्यादवधारणात् ॥

ननु उपक्रमप्राबल्यात्सदुपक्रमानुरोधेन आत्मशब्दनयनं युक्तमिति चेत्, उच्यते—सच्छब्दस्यैव आत्मपरत्वं स्यात् । कुतः ? अवधारणात् । सच्छब्दस्य सामान्यप्रतिपादकत्वेन वाक्यशेषेण विशेषावधारणस्य अविरोधात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आत्मगृहीत्यधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ कार्याख्यानाधिकरणम् ॥

## ॥ कार्याख्यानादपूर्वम् ॥१८॥

बृहदारण्यके श्रूयते—'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' ( बृ०-६-१-१४ ) 'तस्मादेवंविदशिष्य-

न्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति। अन्नं प्राणम्। छन्दोगा आमनन्ति—'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' (छा०-५-२-२) इति। अत्र किमाचमनं विधीयते, उत प्राणविद्याङ्गत्वेन आचमनीयास्वप्सु प्राणस्य अनग्नताकरणचिन्तनमपूर्वं विधीयते, इति संशये, आचमनमेव विधीयते, आचामेदिति विधिश्रवणात्।

न च स्मृतिप्राप्तत्वादाचमनं न विधेयम्। अस्याः श्रुतेस्तन्मूलत्वसंभवादिति प्राप्ते, अभिधीयते—अपूर्वमनग्नताचिन्तनमेव विधीयते, नत्वाचमनम्। कुतः? कार्याख्यानात्। स्मृत्या कार्यत्वेनाख्यानात्। स्मृतिप्राप्तत्वादित्यर्थः। यद्वा, स्मृत्या कार्यत्वेन प्राप्तस्यात्रानग्नताचिन्तनविधानार्थमाख्यानादनुवादादित्यर्थः।

न चेयं श्रुतिस्तस्या मूलम्। अस्या उपासनाप्रकरणस्थत्वेन (पुरुष) सामान्य-(विषय)स्मृतिमूलत्वासम्भवात्। तस्मादनग्नताचिन्तनमात्रमत्र विधीयते।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कार्याख्यानाधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ समानाधिकरणम् ॥

## ॥ समान एवञ्चाभेदात् ॥१९॥

वाजसनेयिनामग्निरहस्ये शाण्डिल्यविद्यायां श्रूयते—'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा दिशोऽनुप्रभूतं सर्वमिदमभ्यात्तमवाक्यनादरम्' इत्यादि। तस्यामेव शाखायां बृहदारण्यकेऽपि पुनः श्रूयते—'मनोमयोऽयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च' (बृ०-५-६) इति।

अत्र किं द्वे विद्ये, उत विद्यैक्यमिति संशये, द्वे विद्ये, एकस्यां शाखायां प्रतिपत्तृभेदाभावेन पौनरुक्त्ये प्रामाण्यासंभवादभ्यासन्यायेन (जै०-सू०-२-२-२) विद्याभेदावश्यकत्वादिति प्राप्ते, ब्रूमः—चस्त्वर्थः। यथा भिन्नशाखासु क्वचिदुत्पत्तिः क्वचिद्गुणविधिः इत्यैकत्वं संभवति, एवं समाने एकस्यामपि शाखायां अत्र विद्यैक्यमेव

कुतः ? अभेदात् । उपास्याभेदादित्यर्थः । मनोमयत्वादिगुणं ब्रह्म उभयत्रोपास्यम् । उपास्यञ्च विद्यारूपं, यथा द्रव्यदेवते कर्मणः ।

न च उभयोर्विद्याविध्योरगृह्यमाणविशेषत्वं, तत्राग्निरहस्ये अनेकगुणश्रवणाद्भूयस्त्वन्यायेन ( जै०-सू०-३-३-१० ) उत्पत्तिविधिः, बृहदारण्यके गुणविधिः ।

न च तत्र मनोमयत्वादिश्रवणवैयर्थ्यं, प्रत्यभिज्ञया विद्यैक्यसंपादकत्वात् । नित्यानुवादो वा ।

ननु बृहदारण्यकेऽपि सत्यत्वसर्ववशित्वाद्यनेकगुणोपादानात् प्राप्तोपासनानुवादेन अनेकगुणविधौ वाक्यभेदापाताद्विद्याभेद आवश्यक इति चेत् ।

अत्राहुः—बलवत्प्रत्यभिज्ञया विद्यैक्ये सिद्धे, वाक्यभेदो वा, अभ्युदयेष्टिन्यायेन ( जै०-सू०-६-५-१ ) भावनान्तरविधिर्वा, [ तावद्गुणविशिष्टस्य विततिलक्षणक्रमस्यैकस्यैव विधिरूपः] प्रयोगविधिर्वेति । तस्मादत्र विद्यैक्यं गुणोपसंहारश्चेति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां समानाधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ संबन्धाधिकरणम् ॥

## ॥ सम्बन्धादेवमन्यत्रापि ॥२०॥

बृहदारण्यके सत्यविद्यायां 'सत्यं ब्रह्म' (बृ०-५-५-१) इत्युपक्रम्य, 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' (बृ०-५-५-२) इति सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं च स्थानद्वयमभिधाय, व्याहृतिशरीरत्वं च संपाद्य, उपनिषद्द्वयमाम्नातम्—'तस्योपनिषदहरिति' इत्याधिदैवतम्, 'तस्योपनिषदहमिति' इत्यध्यात्मम् । तदुपनिषद्द्वयं किमक्ष्यादित्यस्थानद्वयेऽप्यनुसन्धेयं, उत व्यवस्थयेति संशये, यथात्रैव शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहारः, एवमन्यत्रापि, सत्यविद्यायामपि अहरहमिति नामद्वयोपसंहारः । कुतः ? सम्बन्धात्, एकविद्याभिसंबन्धात् । इति ।

---

एवं प्राप्ते, अभिधीयते—

॥ न वा विशेषात् ॥२१॥

न वेति पक्षव्यावृत्तिः। नोपसंहारः। कुतः? विशेषात्, स्थानविशेषात्। तस्येति सर्वनाम्ना प्रकृतं मण्डलस्थं अक्षिस्थञ्च परामृश्य, व्यवस्थया 'अहरह'मिति नामद्वयविधानादुपास्यैक्येऽपि स्थानभेदेन व्यवस्थया उपनिषद्द्वयचिन्तनं कर्तव्यम्। यथा एकस्यैव गुरोरासीनस्य उक्त उपचारो न तिष्ठतः, तिष्ठतश्चोक्तो नासीनस्य, एवमिहापि।

---

॥ दर्शयति च ॥२२॥

लिङ्गञ्च स्थानविशेषेण धर्मव्यवस्थां दर्शयति—'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' (छा०-१-७-५) इति। यद्यादित्यपुरुषधर्मा अक्षिपुरुषे प्राप्येरन्, तदा, अतिदेशेन आदित्यपुरुषरूपादिकमक्षिपुरुषे न प्रापयेदिति लिङ्गत्वम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां संबन्धाधिकरणम् ॥

---

॥श्रीः॥

(१२) ॥ अथ संभृत्यधिकरणम् ॥

॥ संभृतिद्युव्याप्त्यपि चातः ॥२३॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति राणायनीयानां खिलेषु पठ्यते। लोकपालप्रसिद्धानि वीर्याणि ब्रह्मपुरस्सराण्येव संभृतानि। न हि सगुणब्रह्मानपेक्ष्य वीर्याणि संभवन्ति। तत् ज्येष्ठं ब्रह्म प्रथमं दिवं व्याप्य स्थितमिति श्रुत्यर्थः। अत्र वीर्यसंभृत्यादयः ब्रह्मणो विभूतयः उपास्यत्वेन श्रूयन्ते। तत्रैवोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते। तासु ब्रह्मविद्यासु ताः वीर्यसंभृत्यादयः उपसंहार्या, न वेति संशये, ब्रह्मसम्बन्धाविशेषादुपसंहारे प्राप्ते, उच्यते—॥ संभृतिद्युव्याप्त्यपि चातः ॥ सभृतिश्च द्युव्याप्तिश्च तयोस्समाहारः संभृतिद्युव्याप्ति। चकाराद्वीर्यपरिग्रहः। संभृत्यादयोऽपि नोपसंहार्याः। कुतः? अत एव, आयतनविशेषात्। शाण्डिल्यविद्यायां 'एष आत्मान्तर्हृदये' (छा०-३-१४-३) इति, दहरविद्यायां 'दहरं पुण्डरीकं वेश्म

दहरोऽस्मिन्नन्तराकाशः' ( छा०-८-१-१ ) इति, उपकोसलविद्यायां 'य एषोऽक्षिणि पुरुषो दृश्यते' ( छा०-४-१५-१ ) इति, आध्यात्मिकमायतनमेतासूपलभ्यते। आधिदैविक्यस्संभृत्यादय इत्यायतनभेदः।

न च संभृत्यादीनामेको गुणः शाण्डिल्यविद्यादिषु उपलभ्यते, येन प्रत्यभिज्ञया विद्यैक्यं स्यात्। ब्रह्मैक्यमात्रमतिप्रसञ्जकमिति अनुपसंहारः। एवं च, अत इति सौत्रपदस्य अप्रत्यभिज्ञानादित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां संभृत्यधिकरणम् ॥

---

॥ श्रीः ॥

(१३) ॥ अथ पुरुषविद्याधिकरणम् ॥

**॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥**

छान्दोग्ये, शाखाविशेषे पैङ्गिरहस्यब्राह्मणे च, पुरुषविद्याम्नायते—'पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनम्' ( छा०-३-१६-१ ) 'अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्' ( छा०-३-१६-३ ) 'अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्' ( छा०-३-१६-५ ) 'स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः' 'अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति' ( छा०-३-१७-१-३ ) इत्यादि। तैत्तिरीयकेऽपि—'तस्यैवं विदुषो यज्ञस्यात्मा ( नारा०-८० ) इत्यादिना पुरुषविद्याम्नाता। तत्र ये इतरत्रोक्ताः पुरुषविद्यागुणास्ते तैत्तिरीयके उपसंहार्या, न वेति संशये, पुरुषविद्यात्वादुपसंहार्या इति प्राप्ते, ब्रूमः—चस्त्वर्थे। नोपसंहारः। अप्रत्यभिज्ञानात्। तदेव कुतः ? इतरेषां मरणावभृथव्यतिरिक्तगुणानां छान्दोग्यपैङ्गिरहस्यगतपुरुषविद्यायामुक्तानां तैत्तिरीयके अनाम्नानाद्यत्किञ्चित्साम्येऽपि बहुतरवैषम्यान्न प्रत्यभिज्ञानम्। वस्तुतस्तु 'तस्यैवं विदुष' इत्यस्य पूर्वानुवाके प्रकृतब्रह्मविद्याप्रशंसार्थत्वेन तैत्तिरीयाणां उपासनाविधित्वाभावात् नोपसंहारशङ्का। विधित्वेऽपि अङ्गभूता, न स्वतन्त्रफलसाधनम्, इति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पुरुषविद्याधिकरणम् ॥

---

॥ श्रीः ॥

(१४) ॥ अथ वेधाद्यधिकरणम् ॥

## ॥ वेधाद्यर्थभेदात् ॥२५॥

आथर्वणिकानां अन्येषां च उपनिषदारम्भे 'सर्वं प्रविध्य हृदयं प्रविध्य' इत्यादयो मन्त्रा आम्नाताः। वाजसनेयिनां कौषीतकिनां च प्रवर्ग्यादिब्राह्मणम्। तत्र 'सर्वं प्रविध्ये'त्यादयो मन्त्राः प्रवर्ग्यादिकं च कर्म किमुपासनाङ्गं, न वेति संशये, सन्निधानादङ्गत्वे प्राप्ते, ब्रूमः—नाङ्गम्। कुतः? वेधाद्यर्थभेदात्। मन्त्राणां तावद्धृदयवेधादिप्रतिपादकानामाभिचारिककर्माङ्गत्वं लिङ्गात्। सन्निधिमात्रेण नोपासनाङ्गत्वम्। प्रवर्ग्यस्यापि 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति वाक्याज्ज्योतिष्टोमाङ्गत्वम्। लिङ्गवाक्याभ्यां च सन्निधिर्दुर्बल इति नोपासनासु मन्त्रप्रवर्ग्योपसंहारः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वेधाद्यधिकरणम् ॥

---

॥ श्रीः ॥

(१५) ॥ अथ हान्यधिकरणम् ॥

## ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥२६॥

आथर्वणे श्रूयते—'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु०-३-१-३) इति। शाट्यायनिनां तु 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। कौषीतकिनां तु 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्' (कौ०-१-४) इति। अत्र क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते, क्वचित्तयोः प्रियाप्रियैरुपायनं, क्वचिच्च उभयम्। यत्रोभयं श्रूयते, तत्र न विचारः। यत्राप्युपायनमेव श्रूयते न हानं, तत्रापि त्यागव्यतिरेकेण स्वीकारासम्भवात् हानमावश्यकमिति न तत्र विचारः।

यत्र तु पुण्यपापयोर्हानमात्रं श्रुतं, तत्रोपायनसम्बन्धो भवति, न वेति संशये, अश्रवणान्नेति प्राप्ते, उच्यते—तुरर्थे। हानौ, हानिमात्रश्रुतावपि उपायनमुपसंहर्तव्यम्। कुतः? उपायनशब्दशेषत्वात्। उपायनशब्दस्य हानशब्दशेषत्वादित्यर्थः। यत्रोभयं श्रुतं तत्रोपायनशब्दो हानशब्दशेषतयावगतः। अतोऽन्यतरश्रुतावपि इतरसम्बन्धोऽङ्गीक्रियते।

हानोपायनकीर्तनं विद्यास्तुत्यर्थं, इत्थं महाभागा विद्या, यत्सामर्थ्यात्सुकृतदुष्कृत-हानं, ते च सुहृद्दुर्हृत्सु निविशेते, इति। एवञ्च सर्वत्र विद्याप्रशंसार्थमुपायनार्थवा-दोपसंहारः। प्रशंसाप्रयोजनञ्च, विदुष्यप्रियं न कर्तव्यमिति। गुणोपसंहारप्रसङ्गात्स्तुत्युप-संहारविचार इति सङ्गतिः।

शाखान्तरीयवाक्येन शाखान्तरीयवाक्यस्यैकवाक्यतायां दृष्टान्तः कुशेत्यादि। तद्यथा भाल्लविनां—'कुशा वानस्पत्याः स्थ ता मा पात' इति कुशानामविशेषेण वनस्पतियोनित्वश्रवणेऽपि, शाट्यायनिनां 'औदुम्बराः कुशाः' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च क्वचित् देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे, 'देवच्छ-न्दांसि पूर्वाणि' इति पैङ्ग्याम्नानाद्विशेषावगतिः, यथा च षोडशिस्तोत्रे केषाञ्चित्काल-विशेषाप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः। यथा च 'ऋत्विज उपगायन्ति' इत्यविशेषेण उपगानं श्रुतम्, भाल्लविनां तु 'नाध्वर्युरुपगायति' इत्यध्व-र्युव्यतिरिक्तर्त्विजां उपगानमिति विशेषश्रुतिः। श्रुत्यन्तरगतं विशेषं श्रुत्यन्तरे अनभ्यु-पगच्छतः सर्वत्रैव विकल्पस्स्यात्। स चान्याय्यः सत्यां गतौ। तदुक्तं जैमिनिना—'अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात्' (जै०-सू०-१०-८-१) इति। दशमाध्यायस्याष्टमपादाद्याधिकरणसिद्धान्तसूत्रमिदम्। 'यजतिषु येयजामहं करोति नानुयाजेषु' इत्यत्र विकल्पपरिहाराय पर्युदासकथनार्थमिदं सूत्रम्।

हानाविति सूत्रस्य वर्णकान्तरम्—उदाहृतवाक्ये किं विधूननं सुकृतदुष्कृत-योर्हानं, उत चालनमिति संशये, 'धूञ् कम्पने' इति धात्वर्थानुसाराच्चालनमेव विवक्षि-तम्। मुख्यचालनासंभवात्स्वकार्याच्चालनं स्वकार्याजनकत्वमिति यावत्। एवञ्च सुकृत-दुष्कृतयोः कार्याजनकत्वमात्रं विधूननं, नान्यत्र सञ्चारः। इति प्राप्ते,

ब्रूमः—तुर्नार्थे। हानौ, त्यागे विधूननशब्दो वर्तते, न कम्पने। कुतः? उपायनशब्दशेषत्वात् तदेकवाक्यत्वात्। अत्यक्तयोरुपायनासंभवात्, उपायनश्रुत्यैकवा-क्यतया त्यागार्थत्वनिश्चयः।

यत्रापि हानिमात्रं श्रुतं, तत्रापि कुशादिवदुपायनोपसंहारात् 'त्यागार्थत्वनिश्चयः। तदुक्तमित्युक्तार्थम्। धातूनामनेकार्थत्वात्त्यागार्थत्वमविरुद्धमिति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां हान्यधिकरणम् ॥

———

॥ श्रीः ॥

(१६) ॥ अथ साम्परायाधिकरणम् ॥

## ॥ सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥२७॥

पूर्वाधिकरणोक्तः सुकृतदुष्कृतत्यागः किं मरणानन्तरं देवयानेन ब्रह्मलोकं प्रस्थितस्य मध्येमार्गं भवति, उत मरणसमय एव जीवदवस्थायामिति संशये, मध्येमार्गमित्याह । कुतः ? एवं हि कौषीतकिनः समामनन्ति — 'स आगच्छति विरजां [ विजरां ] नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' ( कौ०-१-४ ) इति । एवं प्राप्ते, अभिधीयते—सांपराये मरणसमये एव विधूनुते । कुतः ? तर्तव्याभावात् , प्राप्तव्याभावात् । मध्येमार्गं कियद्दूरं सुकृतदुष्कृतानुवृत्त्या प्रयोजनाभावादित्यर्थः ।

कर्तव्याभावादिति पाठः स्पष्टः । विद्यासामर्थ्याद्विद्यानन्तरमेव सुकृतदुष्कृतक्षयावश्यकत्वात् । अक्षीणपापस्यार्चिरादिमार्गगमनासम्भवात् । पूर्वभावी त्यागः कौषीतकिभिः अग्निहोत्रयवागून्यायेन ( जै०-सू०-५-१-२ ) पश्चात्पठितः । तथा ह्यन्ये । यथा न्याय उक्तः, तथा ह्यन्ये शाखिनः ताण्डिनश्शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति—'अश्व इव रोमाणि विधूय पापम्' ( छा० ८-१३-१ ) इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ।

---

## ॥ छन्दत उभयाविरोधात् ॥२८॥

पदोत्तरमिदं सूत्रम् । ननु यथा विद्याफलं ब्रह्मप्राप्तिः, तदेतस्य देवयानेन पथा प्रस्थितस्य भवति, एवं पुण्यपापक्षयोऽप्यर्धपथे भवत्विति शङ्कापदानि । तेभ्य उत्तरमिदम् । छन्दतः स्वेच्छया यमनियमादिसहितविद्याया अनुष्ठानं जीवत एव संभवति, न परेतस्य । ततश्च उत्पन्नविद्यस्य तदानीमेव सुकृतदुष्कृतक्षयः । साधने सति साध्यावश्यम्भावात् । किमित्येवं वर्ण्यते, अत आह—'उभयाविरोधात्' इति । उभयोस्ताण्डिशाट्यायनिश्रुत्योरविरोधार्थमित्यर्थः ।

यद्वा, कारणानन्तरं कार्यमिति उत्सर्गस्य अविरोधः, श्रुतिद्वयस्य चाविरोध इति उभयाविरोधः । 'नाजनित्वा तत्र गच्छन्ति' इति श्रवणात् ब्रह्मप्राप्तिर्न जीवतो भवतीति भावः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां साम्परायाधिकरणम् ॥

---

॥ श्रीः ॥

(१७) ॥ अथ गतेरर्थवत्त्वाधिकरणम् ॥

## ॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९॥

उपास्तौ क्वचित्पुण्यपापहानिसन्निधौ देवयानः पन्थाः श्रूयते, क्वचिन्न निर्गुणब्रह्मविद्यायाम्। तत्र किं वचनादविशेषेण देवयानसम्बन्धः, उत व्यवस्थयेति संशये, उपायनवदविशेषेणेति प्राप्ते, ब्रूमः—गम्यते यत्र, येनेति वा गतिर्देवयानः। तस्योभयथा, व्यवस्थया अर्थवत्त्वम्। उपास्तावेव, न निर्गुणविद्यायामन्वय इत्यर्थः। कुतः ? हि, यस्मादन्यथा, अविशेषाङ्गीकारे विरोधः, 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु०-३-१-३) इति श्रुतिविरोधः। निरञ्जनः भाविजन्मकारणरहितः। साम्यं ब्रह्मस्वरूपमित्यर्थः। अत्र विद्यया अविद्यानिवृत्तौ तदैव ब्रह्मभावापत्तिरिति, न तत्र मार्गापेक्षेति प्रतीयते इति भावः।

---

## ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥

उपास्तावेव मार्गसम्बन्ध उपपन्नः। कुतः? तल्लक्षणार्थोपलब्धेः। स मार्गो लक्षणं उपलक्षणं साधनं यस्य अर्थस्य उपास्तिफलस्य तस्योपलब्धेः। पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनमित्यादि देशान्तरगमनसाध्यं फलं तत्र श्रूयते। न ब्रह्मविद्यायाम्। तत्र विद्यायां सर्वक्लेशनाशे सति प्रारब्धकर्मक्षपणव्यतिरेकेण अपेक्षणीयाभावात्। लोकवत्। यथा लोके ग्रामादिप्राप्तौ मार्गोऽपेक्ष्यते, नारोग्यप्राप्तौ, एवमिहापीति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां गतेरर्थवत्त्वाधिकरणम् ॥

---

॥ श्रीः ॥

(१८) ॥ अथ अनियमाधिकरणम् ॥

## ॥ अनियमः सर्वेषाम [सर्वासाम] विरोधश्शब्दानुमानाभ्याम् ॥३१॥

देवयानः पन्थास्सगुणविद्यासु क्वचिच्छ्रूयते, क्वचिन्न। तत्र किं यत्र श्रुतस्तत्रैव, किं वा अन्यत्रापीति संदेहे, प्रकरणान्नियमप्राप्तावुच्यते—सर्वेषां सगुणोपासनानां

देवयानस्यानियमः सर्वसम्बन्ध इत्यर्थः । अविरोधः, न प्रकरणविरोध इत्यर्थः । कुतः ? शब्दानुमानाभ्याम् । श्रुतिस्मृतिभ्याम् । श्रुत्या प्रकरणबाधादित्यर्थः । श्रुतिस्तावत्— 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति ' ( छा०-५-१०-१ ) इति । अस्यार्थः—ये उपासका इत्थं पञ्चाग्निमुपासते, ये चान्ये श्रद्धा तप इत्येवमादिधर्मयुक्ता उपासनान्तरे प्रवर्तन्ते, ते सर्वे अर्चिरादिमार्गं प्राप्नुवन्तीति । स्मृतिरपि—

' शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥' ( भ०-गी०-८-२६) इति ।

नन्वेवं छान्दोग्ये पञ्चाग्निविद्यायां उपकोसलविद्यायाञ्चार्चिरादिमार्गस्य द्विराम्नानवैयर्थ्यमिति चेन्न । उपास्यगुणतया चिन्तनार्थत्वोपपत्तेः । तस्मात्सर्वोपास्तिषु मार्गः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अनियमाधिकरणम् ॥

---

॥ श्रीः ॥

(१९) ॥ अथ यावदधिकाराधिकरणम् ॥

## ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥

निर्गुणविद्याफलं मुक्तिः पाक्षिकी, नियता वेति संशये, पाक्षिकी, ब्रह्मविदामप्यपान्तरतमःप्रभृतीनां देहान्तरस्वीकारदर्शनात् । तथाहि—अपान्तरतमा नाम वेदप्रवर्तकाचार्यः विष्णोराज्ञया कृष्णद्वैपायनरूपेण देहान्तरं जग्राहेति स्मर्यते । तथा सनत्कुमारः परमेश्वरात्स्कन्दरूपेणाजायतेत्यादि । तथा च ब्रह्मविदामप्येकेषां देहान्तरश्रवणान्न मुक्तिफलनैयत्यमिति प्राप्ते, ब्रूमः—आधिकारिकाणां, ईश्वराज्ञया तत्तत्संप्रदायप्रवर्तनाधिकृतानामेषां, यावदधिकारं, अधिकारसंपादककर्मक्षयपर्यन्तं अवस्थितिः, तदनन्तरं मुक्तिः, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छा०-६-१४-२ ) इति श्रुतेः ।

इयांस्तु विशेषः—आधिकारिकाणां अधिकारसंपादकं कर्म अनेकशरीरग्रहणानन्तरं नश्यति । इतरेषां तु, विद्योत्पादकशरीरनाशानन्तरमेवेति । तस्मात्प्रारब्धक्षये तत्वविदां मुक्तिः नियतैवेति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां यावदधिकाराधिकरणम् ॥

---

॥ श्रीः ॥

(२०) ॥ अथ अक्षरध्यधिकरणम् ॥

**॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥**

बृहदारण्यके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' ( बृ०-३-८-८ ) इत्यादि । तथा आथर्वणे—'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्' ( मु०-१-१-५ ) इत्यादि । तत्र विशेषनिषेधानां सर्वत्रोपसंहारो, न वेति संशये, आनन्दादिवन्निषेधानां ब्रह्मस्वरूपत्वाभावादनुपसंहारे प्राप्ते, ब्रूमः—तुर्नार्थे । अक्षरधियां, अक्षरविषयनिषेधबुद्धीनां, अवरोधः, सर्वत्रोपसंहारः । कुतः ? सामान्यतद्भावाभ्याम् । सामान्यं निषेधसामान्यं प्रतिषेधानां प्रतिषेध्यभ्रमनिवर्तकत्वसाम्यम् । तद्भावस्तत्ता अक्षरप्रत्यभिज्ञानम् । निषेधस्य स्वरूपानात्मकत्वेऽपि उपलक्षणतया ब्रह्मस्वरूपप्रतिपत्त्यर्थत्वात् , यथा एकस्यां शाखायामनेकनिषेधानां प्रतिपत्तिदार्ढ्यार्थं समुच्चयः, एवं भिन्नशाखास्वपीति तात्पर्यम् ।

अभावस्याधिकरणस्वरूपानतिरेकपक्षे 'आनन्दादयः प्रधानस्य' ( ब्र०-सू०-३-३-६ ) इत्यस्यैवायं प्रपञ्चः । औपसदवत् । उपसत्सम्बन्धिमन्त्रवत् । यथा जामदग्न्ये अहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणां 'अग्नेर्वेर्होत्रं वेरध्वरम्' इत्यादीनामुद्गातृवेदोत्पन्नानामपि अध्वर्युणैव प्रयोगो नोद्गात्रा, अध्वर्युकर्तृकत्वात् पुरोडाशप्रदानस्य, प्रधानानुवर्तित्वाच्चाङ्गानाम् ।

तदुक्तं पूर्वतन्त्रे—'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' ( जै०-सू०-३-३-८ ) इति ।

यद्यपि शाबरे आधानगतवारवन्तीयादिसामसु उपांशुप्रोच्चैस्त्वस्वरविचारे गुणमुख्यव्यतिक्रमन्यायेन उपांशुत्वमिति निश्चितं, तथापि समानन्यायत्वादौपसदमन्त्रोदाहरणं भाष्ये । एवं प्रधानाक्षरसंम्बन्धात्सर्वत्र सर्वप्रतिषेधोपसंहार इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अक्षरध्यधिकरणम् ॥

॥ श्रीः ॥

(२१) ॥ अथ इयदधिकरणम् ॥

## ॥ इयदामननात् ॥३४॥

'द्वा सुपर्णा' (मु०-३-१-१) इत्यत्र, 'ऋतं पिबन्तौ' (का०-३-१) इत्यत्र च विद्यानानात्वं, एकत्वं वेति संशये, नानात्वम्, 'द्वा सुपर्णा' इत्यत्र भोक्त्रभोक्त्रोः जीवेश्वरयोः उपादानात्, 'ऋतं पिबन्तौ' इत्यत्र भोक्तृमात्रोपादानादुपास्यभेदादिति प्राप्ते, ब्रूमः—विद्यैकत्वम्। कुतः? इयतः इयत्तापरिच्छिन्नस्य द्वित्वावच्छिन्नस्य वेद्यस्य मन्त्रद्वयेऽप्याम्नानाद्धलवत्प्रत्यभिज्ञानात्। 'ऋतं पिबन्तौ' इत्यत्रापि जीवपरमात्मपरत्वं गुहाधिकरणे (ब्र०-सू०-१-२-३) निर्णीतम्। न चैतदधिकरणस्य वैयर्थ्यम्, तत्प्रपञ्चत्वात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इयदधिकरणम् ॥

---

॥ श्रीः ॥

(२२) ॥ अथ अन्तरत्वाधिकरणम् ॥

## ॥ अन्तरा भूतग्रामवत्स्वात्मनः ॥३५॥

बृहदारण्यके 'अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व' (बृ०-३-४-१) इत्युषस्तब्राह्मणे, 'अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षात्' (बृ०-३-५-१) इत्यादिकहोलब्राह्मणे च, समानाकारमाम्नायते। अपरोक्षादपरोक्षमित्यर्थः। अत्र विद्यैक्यं, भेदो वेति संशये, पुनराम्नानादभ्यासन्यायेन (जै०-सू०-२-२-२) भेदे प्राप्ते, ब्रूमः—विद्यैक्यमिति। कुतः? स्वात्मन एव ब्राह्मणद्वयेऽपि अन्तरा सर्वान्तरत्वेन आम्नानाविशेषाद्विद्यैक्यं यत इत्यर्थः। भूतग्रामवत्। यथा—'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे०-६-११) इति श्रुत्यन्तरे समस्तेषु भूतग्रामेषु सर्वान्तर एक एव आत्मा प्रतिपाद्यते, एवमत्र ब्राह्मणद्वयेऽपि। वेद्यैक्याच्च विद्यैक्यम्।

॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥३६॥

अन्यथा विद्याभेदानङ्गीकारे, आम्नानभेदानुपपत्तिरिति चेन्न। उपदेशान्तरवदुपपत्तेः। यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि' (छा०-६-८-७) इति नवकृत्वोऽभ्यासेऽपि, न विद्याभेदः, एवमत्रापि। उभयत्रापि नोपासना विधीयते। किन्तु आत्मैव स्वरूपेण प्रतिपाद्यते। तथा चाभ्यासेऽपि, न विद्याभेदः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अन्तरत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(२३) अथ व्यतिहाराधिकरणम् ॥

॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥३७॥

'योऽहं सोऽसौ योऽसौ सोऽहम्' इति आदित्यपुरुषं प्रकृत्य ऐतरेयिण आमनन्ति। तत्र विद्यैक्यं, नानात्वं वेति सन्देहे, सूर्यमण्डलान्तर्वर्तिपरमेश्वरेण जीवैक्यस्यानुसन्धेयत्वाद्विद्यैक्यमिति प्राप्ते, ब्रूमः—

विद्यानानात्वमत्राभ्युपेयम्। तथा हि—व्यतिहारः, जीवपरमात्मनोः परस्परात्मत्वोपदेशः 'योऽहं सोऽसौ' इत्यादिरूपो ध्यानार्थो, न वस्तुस्वरूपमात्रनिष्ठः। इतरवत्। यथा इतरे गुणास्सर्वात्मत्वादयः आध्यानाय उपदिश्यन्ते, तद्वत्। नन्वैक्यमेवात्र ध्येयमित्यत उक्तं—विशिंषन्ति हीति। हि यस्मादाम्नातारः परस्परात्मत्वेन 'योऽहं' इत्यादिना विशिंषन्ति। यद्यैक्यमात्रमनुसन्धेयं, तदा 'योऽसौ सोऽह'मित्येव तत्सिद्धेः 'योऽहं सोऽसा'विति विशेषणवैयर्थ्यप्रसङ्गः।

'सत्यकाम' इत्याद्युपासनापरेणापि सन्दर्भेण ईश्वरस्य सत्यकामत्वादिसिद्धिवदत्रापि उपासनापरेणापि जीवपरमात्मैक्यसिद्धिर्न निवार्यते।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां व्यतिहाराधिकरणम् ॥

---

॥ श्रीः ॥

(२४) ॥ अथ सत्याद्यधिकरणम् ॥

## ॥ सैव हि सत्यादयः ॥३८॥

बृहदारण्यके ‘ स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् ’ ( बृ०-५-४-१ ) इति सत्यविद्यां विधाय, पुनश्श्रूयते—‘ तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः’ (बृ०-५-५-२) इत्यादि । यक्षं पूज्यं, प्रथमजं हिरण्यगर्भरूपेण प्रथममुत्पन्नं, तत् तत्र । अत्र द्वे सत्यविद्ये, एका वेति संशये, पूर्वत्र ‘ जयतीमाँल्लोका’निति, उत्तरत्र ‘ हन्ति पाप्मानम् ’ ( बृ०-५-५-३-४ ) इति च फलभेदाद्विद्याभेद इति प्राप्ते, ब्रूमः—सैव पूर्ववाक्येनोक्तैवोत्तरवाक्येनापि उक्ता विद्या, न भिन्ना । कुतः ? हि यस्मात् ‘ तद्यत्तत्सत्यम् ’ इति पूर्वप्रकृतसत्यादय एवाकृष्यन्ते ।

न चोपास्त्यैक्येऽपि फलभेदाद्भेदः । पापनाशस्य ‘ तस्योपनिषदहरह’मित्यङ्गफलत्वात् । यद्वा लोकजयपापनाशयोर्मिलितयोरेव विद्याफलत्वसंभव इति न भेदः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सत्याद्यधिकरणम् ॥

---

॥ श्रीः ॥

(२५) ॥ अथ कामाद्यधिकरणम् ॥

## ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥३९॥

छान्दोग्ये ‘ दहरोऽस्मिन्नन्तराकाशः’ ( छा०-८-१-१ ) इत्युपक्रम्य, ‘ एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः’ ( छा०-८-१-५ ) इत्यादि श्रुतम् । बृहदारण्यके ‘ स वा एष महानज आत्मा ’ इत्युपक्रम्य, ‘ य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी ’ ( बृ०-४-४-२२ ) इत्यादि । तत्र परस्परगुणोपसंहारो भवति, न वेति संशये, न भवति । विद्याभेदात् । छान्दोग्ये उपासनाया, वाजसनेये निर्गुणविद्यायाश्च प्रतिपादनादिति प्राप्ते, ब्रूमः—कामशब्देन सत्यकामत्वमुक्तम् । यथा देवदत्तो दत्तः सत्यभामा भामेति । छान्दोग्यस्थं

सत्यकामत्वादिकमितरत्र बृहदारण्यके, तत्रत्यं वशित्वादिकञ्च तत्र छान्दोग्ये, उपसंहर्तव्यम् । कुतः ? आयतनादिभ्यः । हृदयमायतनं, वेद्यः ईश्वरः, सेतुत्वादिकञ्चेति, बहुसामान्याद्विद्याभेदेऽप्युपसंहार इत्यर्थः ।

अत्र निर्गुणविद्यायां सत्यकामत्वाद्युपसंहारः प्रशंसार्थः । वशित्वादिवत् । वशित्वादीनां तु उपासनायां नान्वयः, विध्यभावात् । किन्तु, सत्यकामत्वादिविशिष्टस्योपास्येश्वरस्य वस्तुतो वशित्वादिकमस्तीत्येतावता तत्र चेत्युक्तमित्यनुसन्धेयम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कामाद्यधिकरणम् ॥

---

॥ श्रीः ॥

(२६) ॥ अथ आदराधिकरणम् ॥

## ॥ आदरादलोपः ॥४०॥

छान्दोग्ये वैश्वानरविद्यायां श्रूयते—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति' ( छा०-५-१९-१ ) इत्यादि प्राणाग्निहोत्रम् । तस्य किं भोजनलोपे लोपो, न वेति संशये, अलोपः । कुतः ? आदरात् । जाबालश्रुतौ वैश्वानरविद्यायां 'पूर्वोऽतिथिभ्योऽश्नीयात्' इत्यतिथ्यपेक्षया प्राथम्यप्रतिपादनेन आदरदर्शनात् । एवञ्च भोजनलोपेऽप्युदकादिना प्राणाग्निहोत्रमुपासकेन कर्तव्यमिति ।

---

एवं प्राप्ते, ब्रूमः —

## ॥ उपस्थितेऽतस्तद्वचनात् ॥४१॥

उपस्थिते भोजने, अतः भोजनद्रव्यादेव, प्राणाग्निहोत्रं स्यात् । कुतः ? तद्वचनात् । 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' ( छा०-५-१९-१ ) इति भोजनार्थभक्तमाश्रित्य अग्निहोत्रवचनात्पदकर्मन्यायेन ( जै०-सू०-४-१-१० ) अग्निहोत्रस्य द्रव्यान्तराप्रयोजकत्वात् । आदरस्य च भोजनपक्षे प्राथम्यार्थत्वोपपत्तेः । तस्माद्भोजनलोपे प्राणाग्निहोत्रलोपः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आदराधिकरणम् ॥

---

॥ श्रीः ॥

(२७) ॥ अथ तन्निर्धारणानियमाधिकरणम् ॥

## ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥४२॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा०-१-१-१) इत्येवमादिषु कर्माङ्गभूतोद्गीथाद्याश्रितोपासनेषु चिन्ता—किं नित्यानि, अनित्यानि वेति। अव्यभिचरितक्रतुसम्बन्ध्युद्गीथादिसम्बन्धित्वेन क्रत्वर्थत्वात्पर्णमयीत्वादिवत् नित्यत्वे प्राप्ते, ब्रूमः—

तन्निर्धारणस्य तत्तद्गुणविशिष्टोद्गीथाद्युपासनस्य अनियमः। न नियतमनुष्ठानम्। कुतः? तद्दृष्टेः। तस्यानियमस्य श्रुतौ दर्शनादित्यर्थः। 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा०-१-१-१०) इत्यनुपासकस्यापि कर्माभ्यनुज्ञानात्। किंच—हि यस्मात्कर्मणस्सकाशात्पृथगप्रतिबन्धः फलं श्रूयते। बलवत्कर्मान्तरप्रतिबन्धं विना कर्मणा शीघ्रं फलजननं अप्रतिबन्धशब्दार्थः। एवं हि श्रूयते—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा०-१-१-१०) इति। तस्योऽप्रतिबन्धेन फलजननमर्थः। 'कल्पन्ते हास्मै लोकाः' (छा०-२-२-३) इत्यादिनाङ्गोपासनानां पृथक्फलश्रवणाच्च गोदोहनादिवदनित्यत्वमिति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तन्निर्धारणानियमाधिकरणम् ॥

---

॥ श्रीः ॥

(२८) ॥ अथ प्रदानाधिकरणम् ॥

## ॥ प्रदानवदेव तदुक्तम् ॥४३॥

संवर्गविद्यायां अधिदैवतं वायुरुपास्यत्वेन श्रुतः, अध्यात्मञ्च प्राणः। तयोरेकीकृत्य अनुचिन्तनं कर्तव्यं, पृथग्वेति संशये, तत्वाभेदादेकीकृत्येति प्राप्ते ब्रूमः—तत्वाभेदेऽपि, कार्यकारणत्वेन भेदात्, अध्यात्माधिदैवभेदेन च भेदात्, भेदेनैवानुचिन्तनं, प्रदानवत्। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इत्यत्र इन्द्रस्य एकत्वेऽपि राजादिगुणभेदेन देवताभेदात्पुरोडाशप्रदानभेदः। तदुक्तं संकर्षे—'नाना वा देवता पृथग्ज्ञानात्' इति। तद्वदेकस्यापि वायुतत्वस्य भेदेन चिन्तनम्।

यद्यपि तत्र यागभेदोऽस्ति, नेह विद्याभेदः, उपक्रमोपसंहाराभ्यां एकविद्यात्व-निश्चयात्, तथापि सायंप्रातराहुतिव्यवस्थायामपि अग्निहोत्रैक्यवत्, व्यवस्थितानुचिन्तनेऽपि विद्यैक्यसंभवाद्व्यवस्थाभेदमात्रे प्रदानवदिति दृष्टान्तः ॥

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रदानाधिकरणम् ॥

---

॥ श्रीः ॥

(२९) ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥

**॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥४४॥**

वाजसनेयिनामग्निरहस्ये श्रूयते—'तत् षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इति ।

अस्यार्थः—शतसंवत्सरपरिमितपुरुषायुषस्य अहानि षट्त्रिंशत्सहस्राणि भवन्ति, मनोवृत्तयोऽप्येकैकदिवसावच्छिन्नत्वेनैकीकृतास्तत्संख्याकाः । ताश्चैतावत्संख्याकेष्टकाचिताग्नित्वेन ध्येया इति प्रतिपाद्यते । मनस एव आत्मनः सम्बन्धिभूतानग्नीन् ।

यद्वा, आत्मत्वेनापि चिन्तनीयान् । अर्कानग्नीन्वर्णव्यत्ययेनार्च्यान्, मनोमयान् मनोविकारान् । मनसा चीयन्ते संपाद्यन्ते इति मनश्चितः इति ।

किमेते मनश्चिदादयोऽग्नयः कर्माङ्गभूताः, किं वा स्वतन्त्रविद्यात्मकाः, इति संशये, सिद्धान्तेनोपक्रमः—स्वतन्त्रविद्यात्मकाः इति । कुतः ? लिङ्गभूयस्त्वात् । अस्मिन्प्रकरणे विद्यात्वद्योतकलिङ्गानां बहुलमुपलब्धेरित्यर्थः । 'तद्यत्किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति । तेषामेवाग्नीनामेव, सा कृतिस्तत्सङ्कल्पमात्रमित्यर्थः । अनेन सङ्कल्पप्राधान्यं गम्यते । तथा 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । उपासकस्य स्वपतोऽपि अग्नयो न विच्छिद्यन्ते । स्वकीयमनोवागादिवृत्त्युपरमेऽपि बद्धपुरुषवागादिवृत्तीनां सम्भवात् । अशेषपुरुषमनोवृत्तीनामग्नित्वेन वर्णनात् । तस्मादेवंविदे स्वपतेऽपि तानेतानग्नीन्सर्वदा सर्वाणि भूतानि चिन्वन्तीति । अत्र अग्नीनामविच्छेदेन नैरन्तर्यं प्रतीयते । तच्च विद्यास्वातन्त्र्येणैव अवकल्पते, न कर्माङ्गत्वेन । कर्मणो यावज्जीवं नैरन्तर्याभावात् ।

ननु प्रकरणात्कर्माङ्गत्वम् । न, हि यस्मात्तल्लिङ्गं प्रकरणाद्बलीयः, ततः । तदपि लिङ्गबलीयस्त्वमपि पूर्वतन्त्रे श्रुतिलिङ्गाधिकरणे ( जै०-सू०- ३-३-१३) उक्तमित्यर्थः ।

---

॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥४५॥

पूर्वपक्ष इदानीं उच्यते—प्रकरणात्क्रिया स्यात्, कर्माङ्गभूता विद्या स्यादित्यर्थः । ततश्च पूर्वेष्टकाचिताग्नीनां मनश्चिदाद्यग्नीनां च विकल्पः । यद्वा, क्रियोपासना पूर्वस्मिन्निष्टकाचिताग्नौ, विकल्पः, कल्पविशेषः प्रकारविशेषः स्यात्, प्रकरणात् । मनःकल्पितस्यापि कर्माङ्गत्वे दृष्टान्तः— मानसवत् । यथा द्वादशाहस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये मनसा गृह्यमाणस्य मानसग्रहस्य तदङ्गत्वं, तद्वत् ।

न च लिङ्गमत्र सम्भवति । अन्यार्थदर्शनलिङ्गस्य प्रापकप्रमाणान्तरसापेक्षस्य गुणवादेनाप्युपपद्यमानस्य प्रकरणबाधकत्वायोगात् इति ।

---

॥ अतिदेशाच्च ॥४६॥

सादृश्यश्रवणादपि कर्माङ्गत्वम् । 'षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः तेषामेकैक एव तावान् यावानसौ पूर्वः' इति । क्रियानुप्रवेशव्यतिरेकेणेष्टकाचितेन सांपादिकानां सादृश्याभावादित्यर्थः ।

---

॥ विद्यैव तु निर्धारणात् ॥४७॥

तुर्नार्थे । स्वतन्त्रविद्यैवेयं, न कर्माङ्गम् । कुतः ? निर्धारणात् । 'ते हैते विद्याचित एव' इति ।

---

॥ दर्शनाच्च ॥४८॥

पूर्वोक्तलिङ्गभूयस्त्वदर्शनादपीत्यर्थः

---

ननु लिङ्गमसाधकमित्युक्तमत आह—

॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥४९॥

चस्त्वर्थे । विद्यास्वातन्त्र्यपक्षस्य न बाधः । कुतः ? श्रुत्यादिबलीयस्त्वात् । श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वादित्यर्थः । 'तेहैते विद्याचित एव' इति सावधारणा श्रुतिः । लिङ्गमुक्तम् । न चान्यार्थदर्शनमात्रं तत् । यत्र प्रत्यक्षविधिसन्निधौ आर्थवादिकं लिङ्गं, । तत्प्रापकप्रमाणान्तरसापेक्षम् । प्रकृते तु न प्रत्यक्षो विधिः, किन्तु अर्थवादकल्प्यः । अर्थवादे च स्वातन्त्र्ये लिङ्गदर्शनात्, स्वान्तन्त्र्येणैव विद्याविधिः कल्प्यत इति लिङ्गत्वमेव । वाक्यमपि—'विद्यया हैवैत एवंविदश्चिता भवन्ति' इत्येवंविद इति पुरुषसम्बन्धमेव दर्शयति, न कर्मसम्बन्धम् ।

---

॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥५०॥

इतश्च न कर्माङ्गत्वं मनश्चिदादीनाम् । कुतः ? अनुबन्धादिभ्यः । अनुबध्यत इति अनुबन्धः, कर्माङ्गभूतपदार्थानां मनोव्यापारानुबन्धः 'ते मनसैवाधीयन्त मनसाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसास्तुवन्मनसाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' इत्यादिः कर्माङ्गानां मनस्संपाद्यत्वं वदन् अनुचिन्तनप्राधान्यं दर्शयति । कर्माङ्गत्वपक्षे स्वतस्सिद्धत्वान्मनसा संपादनमनर्थकं स्यात् ।

आदिशब्दादतिदेशादिसंग्रहः । 'तेषामेकैक एव तावान्यावानसौ पूर्वः' इति, इष्टकाचिताग्निमाहात्म्यं ज्ञानमयाग्नीनामेकैकस्य दर्शयन् इष्टकामयाग्न्यनादरं दर्शयति ।

न च क्रियाग्निना विकल्पः ज्ञानाग्नेः, तद्वदाहवनीयाधारत्वाभावेन एकार्थत्वाभावात् ।

न च क्रियानुप्रवेशव्यतिरेकेण सादृश्यान्तरमसंभवि । अग्नित्वसामान्येनापि अतिदेशसम्भवात् । श्रुत्यादीनि चोक्तानि । प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तराणां शाण्डिल्यविद्याप्रभृतीनां स्वस्वानुबन्धेन अनुबध्यमानानां कर्मभ्यः प्रज्ञान्तरेभ्यश्च पृथक्त्वं तद्वत् ।

ननु प्रकरणादुत्कर्षो न दृष्टचरः, अत उक्तं—दृष्टश्च । ब्राह्मणादिकर्तृकावेष्टेः राजसूयप्रकरणादुत्कर्षो दृष्टः । तदुक्तं पूर्वतन्त्रे—'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' (जै०-सू०-११-४-११) इति ।

॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥५१॥

मानसग्रहसामान्यादपि मनश्चिदादीनां न क्रियाशेषत्वम् । उदाहृतश्रुतिलिङ्गादिभिः केवलपुरुषार्थत्वोपलब्धेः । सामान्यतोदृष्टस्य वैदिकार्थे अनुपयोगात् । मृत्युवत् । यथा 'अग्निर्वै मृत्युः' (बृ०-३-२-१०) इत्यग्नौ मृत्युशब्दप्रयोगेऽपि नाग्नेः सर्वथा मृत्युसाम्यम् , यथा च 'असौ वै लोकोऽग्निः गौतम' (बृ०-६-२-९) इत्यादौ लोकस्य नाग्निभावापत्तिः, एवमिहापि मनःकल्पनासामान्यान्नाङ्गत्वसिद्धिः ।

॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥

किञ्च—परेण सन्दर्भेण, चकारात्पूर्वेणापि सन्दर्भेण, ताद्विध्यं, केवलविद्याविधित्वं शब्दस्य प्रयोजनं गम्यते, न कर्माङ्गविधित्वम् । तत्र हि—'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥' इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसन्निदं गमयति । तथा पुरस्तादपि विद्याप्रधानत्वमेव लक्ष्यते, 'सोऽमृतो भवति' इति विद्याफलस्यैवोपसंहारात् , न कर्मप्रधानता । तत्सामान्यादिहापि तथात्वम् । अग्निप्रकरणे मनश्चिदादीनां अनुबन्धः आम्नानन्तु, अस्यां विद्यायां संपादनीयानां अग्न्यवयवानां भूयस्त्वात् , न त्वङ्गत्वात् । 'तदनुबन्ध' इति पाठे अग्निप्रकरणं तदोक्तम् । तस्मान्मनश्चिदादीनां केवलविद्यात्मकत्वमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां लिङ्गभूयस्त्वाधिकरणम् ॥

॥ श्रीः ॥

(३०) ॥ अथ शरीरव्यतिरेकाधिकरणम् ॥

॥ एक आत्मनः शरीरे भावात् ॥५३॥

पूर्वत्र विद्यायाः पुरुषार्थत्वे उक्ते, कः पुरुष इति प्रसङ्गाद्देहातिरिक्त आत्मा पूर्वोत्तरसर्वविचारोपयोगित्वेन इह प्रतिपाद्यते । तत्र पूर्वः पक्षः—एके लोकायतिकाः

आत्मनश्शरीराद्व्यतिरेकमिच्छन्ति । कुतः ? शरीरे भावात् । यथा अग्न्यन्वयव्यतिरेकानुविधाय्यौष्ण्यप्रकाशादिकमग्निधर्मः, एवं शरीरे सति भावात्, उपलक्षणमेतत्, शरीराभावे चाभावात्, ज्ञानादिकं शरीरधर्म एवेति, न देहव्यतिरिक्त आत्मेति ।

---

एवं प्राप्ते, ब्रूमः—

॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥५४॥

न त्विति पक्षव्यावृत्तिः । आत्मनः शरीराद्व्यतिरेकः । कुतः ? तद्भावाभावित्वात् । शरीरधर्माणां रूपादीनां यावच्छरीरभावित्वदर्शनात्, बुद्ध्यादीनां च शरीरभावेऽप्यभावात्, न शरीरधर्मत्वम् । उपलब्धिवत् । यथा विषयिण्या उपलब्धेः घटादिविषयाया [न विषयाश्रयत्वं] विषयादन्यत्वं, एवं शरीरविषयिण्या अपि वाच्यम् । उपलब्धिस्वरूप एव स आत्मेति देहव्यतिरिक्तात्मसिद्धिः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां शरीरव्यतिरेकाधिकरणम् ॥

---

॥ श्रीः ॥

(३१) ॥ अथ अङ्गावबद्धाधिकरणम् ॥

॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५५॥

शाखाभेदे गुणोपसंहारसिद्धावपि, आश्रयव्यवस्थाशङ्कानिरासार्थमिदम् । ' ओमित्येतदक्षरमुद्गीथमुपासीत ' ( छा०-१-१-१ ) इत्याद्याः कर्माङ्गाश्रयविद्याः प्रतिवेदं प्रतिशाखमाम्नायन्ते । ताः किं तत्तच्छाखागतोद्गीथादिष्वेव भवेयुः, किं वा शाखान्तरगतेष्वपीति संशये, सन्निधानाद्व्यवस्थाप्राप्तावाह----अङ्गेति । तुशब्देन पक्षव्यावृत्तिः । अङ्गावबद्धाः शाखासु प्रतिवेदञ्च न व्यवतिष्ठेरन्, सर्वत्र भवेयुरित्यर्थः । हिना हेतुप्रसिद्धिर्द्योत्यते । उद्गीथादेस्सामान्यश्रुतेस्सन्निधिमात्रेण सङ्कोचानुपपत्तिः प्रसिद्धहेतुः ।

---

॥ मन्त्रादिवद्वाऽविरोधः ॥५६॥

अथ वा, नात्र विरोधः शाखान्तरोद्गीथादिषु कथं शाखान्तरोपासना भविष्यन्तीति । मन्त्रादिवत् । यथा शाखान्तरोक्तमन्त्राणां अङ्गान्तराणां च शाखान्तरविहितकर्माङ्गत्वं न

विरुद्धम् , तद्वदप्यविरोधोपपत्तेः, आश्रयव्यवस्था अनुपपन्नेति तात्पर्यम् । शाखादिभेदेन उद्गीथादीनां स्वरादिभेदाद्विचारः सप्रयोजनः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अङ्गावबद्धाधिकरणम् ॥

---

॥ श्रीः ॥

(३२) ॥ अथ भूमज्यायस्त्वाधिकरणम् ॥

**॥भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५७॥**

वैश्वानरविद्यायां विराड्रूपस्य वैश्वानरस्य व्यस्तसमस्तोपासनमाम्नातम् । द्युलोकादीनां वैश्वानरस्य मूर्धादित्वेन उपासनं समस्तोपासनम् । तेषां प्रत्येकोपासनं व्यस्तोपासनम् । तत्र ' औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरः' ( छा०-५-१२-१ ) इत्यादि व्यस्तोपासनम् । ' तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः ' ( छा०-५-१८-२ ) इत्यादि समस्तोपासनम् । तत्र व्यस्तसमस्तोपासनद्वयं विधेयं, किं वा समस्तोपासनमेवेति संशये, उभयश्रवणादुभयमिति प्राप्ते, अभिधीयते---भूम्नः पदार्थोपचयात्मकस्य समस्तवैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्यं अस्मिन्वाक्ये विवक्षितं, न प्रत्येकोपासनानाम् । क्रतुवत् । यथा दर्शपूर्णमासादेस्साङ्गस्य एक एव प्रयोगविधिस्तद्वत् । कुतः ? तथा हि दर्शयति । श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति ।

प्राचीनशालप्रभृतयो वैश्वानरविद्याज्ञानाय केकयं राजानमाजग्मुरित्युपक्रम्य, तेषां द्युप्रभृतीनामेकैकमुपास्यं प्रदर्श्य, ' मूर्धा त्वेष आत्मन इति होवाच ' (छा०-५-१२-२) इत्यादिना मूर्धादित्वं द्युलोकादीनां प्रतिपादयतः सन्दर्भस्यैकवाक्यत्वावगमात् समस्तोपासनमेकमेवात्र विधेयम् । न वाक्यभेदापादकं व्यस्तोपासनम

एवं च व्यस्तोपासने यत्फलश्रवणं ' तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ' (छा०-५-१२-१ ) इत्यादि, सुतादयः सोमयागविशेषाः, तत्प्रधानस्तुत्यर्थत्वेनापि उपपन्नम् । 'मूर्धा ते व्यपतिष्यत् ' (छा०-५-१२-२) इति व्यस्तोपासननिन्दाश्रवणादपि न व्यस्तोपासनमत्र विधित्सितमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां भूमज्यायस्त्वाधिकरणम् ॥

---

॥ श्रीः ॥

(३३) ॥ अथ शब्दादिभेदाधिकरणम् ॥

## ॥ नाना शब्दादिभेदात् ॥५८॥

छान्दोग्यादौ शाण्डिल्यविद्या दहरविद्या नामविद्येत्यादयश्श्रूयन्ते । तासां किमैक्यं, भेदो वेति संशये, समस्तोपासनस्य ज्यायस्त्वादुपास्यब्रह्मैक्याच्च ऐक्यप्राप्तावाह—नाना, भेदः । शब्दादिभेदात् । 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' इति शब्दभेदः । आदिशब्दाद्गुणादयो भेदहेतवो यथासंभवं ग्राह्याः ।

यद्यपि वेदेत्यादिशब्दानां स्वरूपभेदेऽपि न यजत्यादिवदर्थभेदः, तथापि, एकस्यापि ब्रह्मणः तत्र तत्र विशेषणभेदेन भेदादुपास्यभेदादेव उपासनभेदः । सर्वोपासनैक्ये अशक्यानुष्ठानतया अप्रामाण्यप्रसङ्गादुपासनाभेदावश्यकतायां गुणादिना भेदः । न च एकत्र उत्पत्तिविधिरपरत्र गुणविधिस्संभवति, सर्वत्र सगुणश्रवणात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां शब्दादिभेदाधिकरणम् ॥

---

॥ श्रीः ॥

(३४) ॥ अथ विकल्पाधिकरणम् ॥

## ॥ विकल्पोऽविशिष्टफलत्वात् ॥५९॥

एवं सिद्धे विद्याभेदे, अहंग्रहोपासनेषु किमिच्छया समुच्चयो विकल्पो वेति अनियमः, उत विकल्प एवेति नियमः, इति संशये, नियामकाभावात् अनियमप्राप्तावुच्यते—अहंग्रहेषु शाण्डिल्याद्युपासनेषु विकल्प एव । कुतः ? अविशिष्टफलत्वात् । अहंग्रहेषु ईश्वरसाक्षात्कारद्वारा फलावाप्तिरङ्गीक्रियते । साक्षात्कारश्च एकेन सिद्ध इति इतरवैयर्थ्यम् । तस्मादैच्छिको विकल्पः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां विकल्पाधिकरणम् ॥

---

॥ श्रीः ॥

(३५) ॥ अथ काम्याधिकरणम् ॥

## ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥

प्रत्युदाहरणार्थमिदम् । 'नाम ब्रह्मेत्युपास्ते' (छा०-७-१-५) इत्यादिप्रतीकोपासनेष्वपि पूर्वन्यायेन विकल्पप्राप्तावुच्यते—तुशब्दः पक्षव्यावृत्त्यर्थः । काम्याः प्रतीकोपासनाः, यथाकामं समुच्चीयेरन्वा, न वा समुच्चीयेरन् । कुतः ? पूर्वहेत्वभावात् : अहंग्रहेषु 'देवो भूत्वा देवानप्येति' (बृ०-४-१-२) इति जीवत एव भावनाप्रकर्षवशात् देवतासाक्षात्कारे जाते देवो भूत्वा मृतो देवत्वमुपैतीति साक्षात्कारफलत्वं श्रुतम् । नैवं प्रतीकोपासनेषु साक्षात्कारद्वारत्वं श्रुतम् । तत्र अग्निहोत्रादिवददृष्टद्वारा तत्तत्फलसाधनत्वं, नित्यत्वसाधकप्रमाणाभावाच्च याथाकाम्यमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां काम्याधिकरणम् ॥

---

॥ श्रीः ॥

(३६) ॥ अथ यथाश्रयभावाधिकरणम् ॥

## ॥ अङ्गेषु यथाश्रयभावः ॥६१॥

प्रतीकानि द्विविधानि, लौकिकानि वैदिकानि च । लौकिकेषु न्याय उक्तः । वैदिकाङ्गावबद्धेषु समुच्चयो, याथाकाम्यं वेति संशये, यथाश्रयभाव इत्याह । यथा आश्रयाणामङ्गानां समुच्चयः, एवमङ्गेषु चाश्रितानां उपासनानामपि समुच्चयेनैवानुष्ठानं न्याय्यम् । आश्रयतन्त्रत्वादाश्रितप्रत्ययानाम् ।

---

## ॥ शिष्टेश्च ॥६२॥

यथा अङ्गानां प्रतिवेदमुपदेशः, एवं तदाश्रितोपासनानामपीति, नोपदेशकृतो विशेष इत्यर्थः ।

---

## ॥ समाहारात् ॥६३॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' (छा०-१-५-५) इति । दुरुद्गीथमपि, स्वरादिदुष्टमपि उद्गीथं, होतृषदनाद्धोतृकृतसम्यक्शंसनादनुसमाहरति समादधाति उद्गातेति श्रुत्यर्थः । सूत्रस्याप्युदाहृतश्रुत्युक्तसमाहार एवार्थः ।

अयं भावः —'य उद्गीथः स प्रणवः यः प्रणवः स उद्गीथः' (छा०-१-५-५) इति विहितोपासनसामर्थ्यादुद्गाता शस्त्रगतप्रणवस्य उद्गीथगतस्य चाविशेषेणाभेदानुचिन्तनादुद्गीथस्य प्रमादेन स्वरादिदोषेऽपि होतृकृतसम्यक्शंसनं हेतुं कृत्वा दोषसमाधानं करोतीति प्रतीतेरनुचिन्तनावश्यकत्वं द्योत्यत इति। दुरुद्गीथत्वमनुचिन्तनहीनत्वं, तत एवानुचिन्तनावश्यकत्वमुच्यते, इत्यपि केचित्।

---

## ॥ गुणसाधारण्यश्रुतेश्च ॥६४॥

गुणस्याश्रयस्योङ्कारस्य वेदत्रयसाधारण्यश्रुतेरपि तदाश्रयोपासनसाधारण्यं, 'ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' (छा०-१-१-९) इति।

यद्वा—गुणा अङ्गानि। साधारण्यं समुच्चयः। प्रयोगवचनेन सर्वाङ्गसमुच्चयप्रतिपादनात्तदाश्रयोपासनासमुच्चयः, इति।

---

एवं प्राप्ते ब्रूमः—

## ॥ न वा तत्सहभावाश्रुतेः ॥६५॥

न वा यथाश्रयभावः। कुतः? तत्सहभावाश्रुतेः। उपासनानां समुच्चये प्रत्यक्षश्रुतेरभावात्। गोदोहनादिवदनङ्गत्वेन प्रयोगवचनाविषयत्वात्।

---

## ॥ दर्शनाच्च ॥६६॥

असमुच्चयं च दर्शयति श्रुतिः—'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा०-४-१७-१०) इति। यदि सर्वप्रत्ययोपसंहारः, तदा सर्वे सर्वविद इति, न ज्ञानवता ब्रह्मणा इतरेषां पाल्यत्वमुपपन्नं स्यात्। तस्मात् याथाकाम्यमङ्गावबद्धानाम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां यथाश्रयभावाधिकरणम् ॥

॥ इति श्री(महा)महोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंस-श्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तृतीयाध्यायस्य तृतीयः पादः ॥

सर्ववेदान्तप्रत्ययं षट्त्रिंशत् षट्षष्टिः ॥

अधिकरणसंख्या—(३६)

सूत्रसंख्या—(६६)

---

॥ श्रीः ॥

॥ अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

(१) ॥ अथ पुरुषार्थाधिकरणम् ॥

**॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥१॥**

सगुणनिर्गुणब्रह्मविद्ययोः स्वतन्त्रपुरुषार्थसाधनत्वमङ्गीकृत्य भेदाभेदगुणोपसंहाराः निरूपिताः। इदानीं स्वतन्त्रपुरुषार्थसाधनत्वं, यज्ञादि, शमादि, श्रवणादि, च विद्योत्पत्ति-साधनं अस्मिन्पादे निरूप्यते। तत्राद्याधिकरणे किं औपनिषदात्मज्ञानं कर्मसहकृतं सत् पुरुषार्थं साधयति, उत तन्निरपेक्षं स्वतन्त्रमेवेति संशये, सिद्धान्तेनोपक्रमते—अतो वेदान्तजन्यौपनिषदात्मज्ञानात्स्वतन्त्रादेव पुरुषार्थः सिद्ध्यतीति बादरायण आचार्यो मन्यते। कुतः? शब्दात्। 'तरति शोकमात्मवित्' (छा०-७-१-३) इत्यादि-शब्दात्केवलाया एव विद्याया मोक्षसाधनत्वबोधनादित्यर्थः।

---

पूर्वपक्षमारभते—

**॥ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥२॥**

पुरुषेऽर्थवादः पुरुषार्थवादः, उदाहृतफलश्रुतिरात्मन्यर्थवाद इति जैमिनिर्मन्यते। कुतः? शेषत्वादात्मनः। कर्तुः कर्मशेषत्वात्तज्ज्ञानस्यापि तद्द्वारा कर्मफलेनैव फलवत्त्वा-त्पृथक्फलानाकाङ्क्षणात्। यथान्येषु पर्णतादिषु फलश्रुतिरर्थवादः, तद्वत्। तदुक्तं जैमिनिना—'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' (जै०-सू०-४-३-१) इति।

---

॥ आचारदर्शनात् ॥३॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ०-३-१-१) इत्यादिषु ब्रह्मविदां जनकादीनामपि कर्मानुष्ठानदर्शनान्न केवलविद्यायाः पुरुषार्थसाधनत्वमित्यर्थः ।

---

॥ तच्छ्रुतेः ॥४॥

तस्य, विद्यायाः कर्मशेषत्वस्य 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा०-१-१-१० ) इत्यादिश्रुतेः, श्रवणादपि न विद्यास्वातन्त्र्यम् ।

---

॥ समन्वारम्भणात् ॥५॥

'तं विद्याकर्मणी समन्वारभेते' ( बृ०-४-४-२ ) इति च विद्याकर्मणोः फलारम्भे साहित्यदर्शनादपि न स्वातन्त्र्यं विद्यायाः ।

---

॥ तद्वतो विधानात् ॥६॥

तद्वतः समस्तवेदार्थज्ञानवतः 'वेदमधीत्य अभिसमावृत्य कुटुम्बे' ( छा०-८-१५-१ ) इत्यादिना कर्मविधानादपि न विद्यास्वातन्त्र्यम् ।

---

॥ नियमाच्च ॥७॥

अत्रत्यश्चः पूर्वसूत्रचतुष्टयेऽप्याकृष्य योज्यः । 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः' ( ई०-उ०-२ ) इत्यादिना यावज्जीवं कर्मानुष्ठाननियमादपि न विद्यास्वातन्त्र्यमिति ।

---

एवं प्राप्ते, अभिधीयते—

॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

तुर्नार्थे । बादरायणस्य मतं स्वतन्त्रपुरुषार्थ[साधन]त्वमेव युक्तम् । कुतः ? अधिकोपदेशात् । यदि कर्मोपयुक्तदेहादिव्यतिरिक्तकर्तृभोक्त्रात्मप्रतिपादनमात्रं वेदान्तेषु स्यात्-

तदैवं त्वदुक्तरीत्या फलश्रुतिरर्थवादस्स्यात्। न त्वेतदस्ति, अधिकोपदेशात्, शारीरादात्मनोऽधिकस्येश्वरस्य उपदेशात्। तदेव कुतः? तद्दर्शनात्। तस्य ईश्वरस्य सर्ववेदान्तेषु 'यस्सर्वज्ञः सर्ववित्' (मु०-१-१-९) इत्यादिना प्रतिपाद्यत्वेन दर्शनात्। तस्मान्नित्यशुद्धबुद्धमुक्तात्मज्ञानं न कर्मोपयोगीति, न फलश्रुतिरर्थवादः।

---

॥ तुल्यं तु दर्शनम् ॥९॥

यदुक्त'माचारदर्शनात्' कर्मशेषत्वमिति, तत्रोत्तरमिदम्। अकर्मशेषत्वेऽपि दर्शनं तुल्यम्। 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ०-३-५-१) इत्यादिदर्शनात्। तुशब्दोऽकर्मशेषत्वस्य लिङ्गस्य अनन्यथासिद्धिविशेषद्योतनार्थः। पूर्वपक्षलिङ्गानामन्यथासिद्धिर्वक्ष्यते।

---

॥ असार्वत्रिकी ॥१०॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा' (छा०-१-१-१०) इत्येषा श्रुतिर्न सर्वविद्याविषया, उद्गीथविद्याप्रकरणात्। अनेन 'तच्छ्रुते'रित्यस्य अन्यथासिद्धिरुक्ता।

---

॥ विभागः शतवत् ॥११॥

'समन्वारम्भणा'दित्यस्योत्तरम्। विद्यान्यं पुरुषमन्वारभते कर्मान्यम्। शतवत्। यथा शतमाभ्यां दातव्यमित्युक्ते, विभज्य पञ्चाशतो दानं, तद्वत्। संसारिविषयत्वादस्य वाक्यस्य संसारिविद्याकर्मसमुच्चयेऽपि नानुपपत्तिरित्युक्तं भाष्ये।

---

॥ अध्ययनमात्रवतः ॥१२॥

---

'तद्वतो विधाना'दित्यस्योत्तरम्। 'वेदमधीत्य' (छा०-८-१५-१) इत्यध्ययनमात्रवतः कर्मविधिः। औपनिषदात्मज्ञानं मात्रपदव्यावर्त्यम्। तेन नाविदुषोऽधिकारापत्तिः।

---

॥ नाविशेषात् ॥१३॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः' ( ई०-उ०-२ ) इत्यत्र न विद्वान् इति विशेषोऽस्ति। कुतः? अविशेषात्, विशेषाश्रवणात्। अविशेषेण नियमविधानात्।

---

प्रकरणाद्विद्वत्सम्बन्धमाशङ्कयाह—

॥ स्तुतयेऽनुमतिर्वा ॥१४॥

विद्यास्तुत्यर्थं कर्मानुमतिरियमित्यर्थः। वाकारः शङ्कानिरासार्थः। विद्यासामर्थ्याद्विदुषः कर्मणि कृतेऽपि तस्य श्लेषो न भवतीति विद्या स्तूयते।

---

॥ कामकारेण चैके ॥१५॥

कामकार इच्छा। अपि चैके वाजसनेयिनः इच्छया गार्हस्थ्यत्यागमधीयते— 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' ( बृ०-४-४-२२ ) इति। अतो विद्याप्राधान्यं गम्यते।

---

॥ उपमर्दश्च ॥१६॥

एक इत्यनुवर्तते। उपमर्दं सर्वव्यवहारोपरमं चैके विदुषोऽधीयते—'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' ( बृ०-४-५-१५ ) इत्यादिना। तस्मादपि न विद्यायाः कर्मशेषत्वाशङ्केत्यर्थः।

---

॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥१७॥

अपि च—ऊर्ध्वरेतस्स्वाश्रमेष्वपि विद्या श्रूयते। न तत्र कर्मशेषत्वाशङ्का। न च ऊर्ध्वरेतस एव न सन्ति। हि यतश्शब्दे वेदे तेऽपि श्रूयन्ते— 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ०-४-४-२२ ) इत्यादिना। तत्सिद्धं ब्रह्मविद्यायास्स्वातन्त्र्येण फलसाधनत्वम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पुरुषार्थाधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ परामर्शाधिकरणम् ॥

## ॥ परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

ऊर्ध्वरेतस्स्वाश्रमेषु विद्यायाः कर्मशेषत्वासम्भवात् स्वातन्त्र्यमित्युक्तम् । अत्र स तुर्याश्रमोऽस्ति, नास्तीति चिन्त्यते । 'त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' (छा०-२-२३-१) इति श्रूयते । अस्मिन्वाक्ये यज्ञादिना गृहस्थस्य उपलक्षणात्, तपसा वानप्रस्थस्य, ब्रह्मसंस्थ इति भिक्षोरित्याश्रमचतुष्टयप्रतीतिः ।

अत्र किमाश्रमविधिरस्ति, उत नास्तीति संशये, जैमिनिः परामर्शमनुवादमात्रमत्र वाक्ये मन्यते । कुतः ? अचोदना हि, यतो विधिरत्र न श्रूयते, विधिप्रत्ययाभावात् ।

ननु विध्यश्रवणेऽपि निवीतादिवदन्यपरादपि विधिकल्पनं युक्तमित्याशङ्क्य, गार्हस्थ्यादौ विरोधाभावेन विधिकल्पनेऽपि, संन्यासे विधिः कल्पयितुं न शक्यते, प्रत्यक्षश्रुतिविरोधादित्याह—अपवदति चेति । 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्यादिना कर्मत्यागनिन्दादर्शनात् न संन्यासविधिः कल्पयितुं शक्यते । संन्यासविधायकस्मृतिरपि श्रुतिविरोधादप्रमाणम् । 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा०-उ०-४) इत्यादिप्रत्यक्षविधिर्नास्तीति कृत्वा चिन्तेयम् ।

---

## ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥१९॥

आश्रमान्तरमप्यनुष्ठेयं बादरायणो मन्यते । कुतः ? साम्यश्रुतेः । 'त्रयो धर्मस्कन्धाः' (छा०-१-२३-१) इत्यादौ गार्हस्थ्येन सममाश्रमान्तरस्यापि श्रुतेस्तद्वदेव विधिकल्पनया अनुष्ठेयत्वं संन्यासस्यापि । न च निन्दाविरोधः । उत्सन्नाग्निकगृहिविषयत्वान्निन्दायाः ।

---

एवं तावदनुवादत्वमङ्गीकृत्य अनुवादान्यथानुपपत्त्या विधिकल्पनमित्युक्तम् । इदानीं अप्राप्तत्वादत्रैव विधिरित्याशयेनाह—

## ॥ विधिर्वा धारणवत् ॥२०॥

अत्रैव वाक्ये आश्रमविधिः कल्प्यः । वाकारस्समाधानान्तरद्योतकः । कुतः ? अप्राप्तत्वात् ।

नन्वेवं 'त्रयो धर्मस्कन्धाः' इत्यादेः 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यनेन प्रतीता एकवाक्यता भज्येतेत्यत उक्तं धारणवदिति । यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र अधोधारणविध्येकवाक्यताप्रतीतावप्युपरिधारणस्याप्राप्तत्वाद्वाक्यभेदेन विधिरङ्गीक्रियते, तद्वदत्रापीति । तदुक्तं शेषलक्षणे—'विधिस्तु धारणेऽपूर्वत्वात्' (जै०-सू०-३-४-१५) इति ।

अत्र विचारान्तरं भाष्ये कृतम्—'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यत्र ब्रह्मसंस्थः किं यः कश्चिदाश्रमी, किं वा परिव्राडेव, इति संशये, 'त्रयो धर्मस्कन्धाः' इत्युपक्रम्य, 'सर्व एते पुण्यलोका भवन्ति' इति आश्रमानुष्ठायिनां पुण्यलोकं फलं श्रावयित्वा, 'ब्रह्मसंस्थोऽमृतत्वमेति' इति ब्रह्मसंस्थायाः मोक्षः फलं श्राव्यते । तत्र यस्य कस्यचिदाश्रमिणो ब्रह्मसंस्था संभवतीति प्राप्ते, अभिधीयते—परिव्राडेव ब्रह्मसंस्थो, नान्यः । संपूर्वस्य तिष्ठतेः समाप्तिवाचितया ब्रह्मसंस्थाशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापारतारूपतया आश्रमान्तरेष्वसम्भवादिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां परामर्शाधिकरणम् ॥

---

॥ श्रीः ॥

### (३) ॥ अथ स्तुतिमात्राधिकरणम् ॥

## ॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥२१॥

'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा०-१-१-३) इत्यादिषु रसतमत्वादिकीर्तनमुद्गीथादिस्तुत्यर्थं, उपासनार्थं वेति संशये, स्तुतिमात्रम् । कुतः ? उपादानात् । उद्गीथादीनां कर्माङ्गानां स्तुत्यानामुपादानादिति चेन्न । अपूर्वत्वादप्राप्तत्वाद्विधिरेष्टव्य इत्यर्थः । अङ्गविधिसन्निधानाभावाच्च नार्थवादत्वम् ।

---

॥ भावशब्दाच्च ॥२२॥

'उद्गीथमुपासीत' ( छा०-१-१-१ ) इत्यादिविधिश्रवणादपि उपासनाविधित्वमेवञ्जातीयकानामिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां स्तुतिमात्राधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ पारिप्लवार्थाधिकरणम् ॥

॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥२३॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च' ( बृ०-४-५-१ ) इत्याद्या वेदान्तेषु बहुश आख्यायिकाः श्रूयन्ते । ताः किं पारिप्लवार्थाः, उत तत्तद्विद्याशेषभूताः, इति संशये, 'सर्वाख्यानानि पारिप्लवे' इति श्रुत्या पारिप्लवे सर्वाख्यायिकाविनियोगात् पारिप्लवार्था एवेति चेन्न । कुतः ? विशेषितत्वात् । 'पारिप्लवमाचक्षीत' इति प्रकृत्य, 'मनुर्वैवस्वतो राजा' इत्यादीनि कानिचिदेव विशेष्यन्ते । अतो न पारिप्लवार्थाः ।

---

॥ तथा चैकवाक्यतोपबन्धात् ॥२४॥

तथा च पारिप्लवार्थत्वाभावे सति, सन्निहितविद्याशेषत्वमेव युक्तम् । कुतः ? एकवाक्यतोपबन्धात् । सन्निहितविद्यैकवाक्यताप्रतीतेरित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां पारिप्लवार्थाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ अग्नीन्धनाद्यधिकरणम् ॥

॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥२५॥

ब्रह्मविद्या मोक्षे जनयितव्ये कर्माणीतिकर्तव्यतात्वेनापेक्षते, न वेति संशये, पादाद्याधिकरणेन कर्मणोऽङ्गित्वनिरासेऽपि अङ्गत्वानिरासात्तदङ्गत्वेन कर्मापेक्षाशङ्कायां, सिद्धान्तः—

अत एवं । 'पुरुषार्थोऽतश्शब्दात्' (ब्र०-सू०-३-४-१) इत्येतद्व्यवहितमपि सम्भवादतश्शब्देन परामृश्यते । अत एव च, विद्यायाः स्वातन्त्र्येण पुरुषार्थहेतुत्वादग्नीन्धनाद्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति, आद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अग्नीन्धनाद्यधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ सर्वापेक्षाधिकरणम् ॥

## ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥२६॥

विद्योत्पत्तौ कर्मणामुपयोगोऽस्ति, न वेति संशये, फल इव स्वरूपेऽप्यनुपयोगमाशङ्कमानस्य उत्तरम्—चस्त्वर्थः । विद्यायाः स्वोत्पत्तौ सर्वकर्मापेक्षा । कुतः? यज्ञादिश्रुतेः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यजेन दानेन तपसानाशकेन' (बृ०-४-४-२२) इति श्रुत्या चित्तशुद्धिद्वारा विविदिषायां कर्मणां विनियोगप्रतीतेः । अश्ववत् । यथा अश्वस्य हलवहनायोग्यस्यापि रथवहनयोग्यत्वं तद्वत्कर्मणामपि विद्याफले अनुपकारकाणामपि विद्यास्वरूपोपकारकत्वमिति ।

---

एवं प्रवृत्तिरूपाणि कर्माणि बहिरङ्गसाधनान्युक्त्वा, निवृत्तिरूपाणि शमदमादीन्यन्तरङ्गसाधनान्याह—

## ॥ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥२७॥

यद्यपि यज्ञादिकमनुष्ठितं, तथापि शमदमाद्युपेतो विद्यासाधकस्स्यात् । कुतः ? तदङ्गतया, विद्याङ्गतया, तद्विधेः, शमदमादिविधेः, तेषां शमादीनां, अवश्यानुष्ठेयत्वात् । 'तस्मादेवंविच्छान्तो दान्त उपरतः तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत्' (बृ०-४-४-२३)इति विद्यासाधनत्वेन शमादीनां विधानादन्तरङ्गत्वम् । यज्ञादिवाक्ये कल्प्यो विधिः, अत्र तु पश्येदिति स्पष्टो विधिः, इति विशेषद्योतनार्थस्तुशब्दः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वापेक्षाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ सर्वान्नानुमत्यधिकरणम् ॥

## ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

छान्दोग्ये प्राणविद्यायां श्रूयते—'न ह वा एवंविदि किञ्चनानन्नं भवति' (छा०-५-२-१) इति। प्राणोपासकस्याभक्ष्यं किमपि नास्तीत्यर्थः। अत्र सर्वान्नानुज्ञानं शमादिवदङ्गत्वेन विधीयते, नवेति संशये, अप्राप्तत्वात्प्राणविद्याङ्गत्वेन विधिरिति प्राप्ते, अभिधीयते—नात्र प्रत्यक्षो विधिश्श्रूयते। नापि कल्पयितुं शक्यते। 'यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नम्' (बृ०-६-१-१४) इति श्वादिमर्यादान्नस्य मानुषशरीराशक्यभक्षणस्य तत्र श्रवणेन विधिकल्पनायोगात्।

नन्वेवं क्वचिदप्यभक्ष्यभक्षणं न स्यात्। नेत्याह—प्राणात्यये सर्वान्नानुमतिः। निषिद्धभक्षणव्यतिरेकेण यदि प्राणात्ययस्तदेत्यर्थः। कुतः? तद्दर्शनात्। चाक्रायणो नाम ऋषिः हस्तिपकेन अर्धभक्षितान्कुल्माषान् प्राणात्यये भक्षयामास, इति 'मटचीहतेषु' (छा०-१-१०-१) इत्यादिछान्दोग्याख्यायिकात्रानुसन्धेया।

---

## ॥ अबाधाच्च ॥२९॥

भक्ष्याभक्ष्यशास्त्रमेवं सति अबाधितं भवतीत्यर्थः।

---

## ॥ अपि च स्मर्यते ॥३०॥

'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥'

इति स्मृतिरपि प्राणात्यये सर्वान्नानुमतिं दर्शयति।

---

## ॥ शब्दश्चातोऽकामकारे ॥३१॥

निमित्तसप्तमी चेयम्। अकामकारनिमित्तं, कामकारनिवृत्त्यर्थमित्यर्थः। योपि

'तस्मात् ब्राह्मणस्सुरां न पिबेत्' इति काठकानां संहितायां कामकारनिवृत्तिप्रयोजनः शब्दः श्रूयते, सोप्यत एव । सर्वान्नानुमतेरर्थवादत्वादेव असङ्कुचितो भवतीत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सर्वान्नानुमत्यधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ आश्रमकर्माधिकरणम् ॥

## ॥ विहितत्वाच्चाश्रमकर्मापि ॥३२॥

## ॥ सहकारित्वेन च ॥३३॥

अग्निहोत्रादीनां विविदिषार्थं नित्याधिकारसिद्ध्यर्थं च द्विः प्रयोगः, उत सकृदिति संशये, प्रयोजनभेदात् द्विरिति प्राप्ते, उच्यते—विविदिषार्थेनैव नित्यसिद्धेः सकृदेव प्रयोगः ।

नचैकस्य नित्यकाम्योभयत्वविरोधः, संयोगपृथक्त्वेनाविरोधात् । तदेतदाह सूत्रद्वयेन । 'यावज्जीव' मित्यादिना विहितत्वादग्निहोत्रादिकमाश्रमकर्मापि, नित्यमित्यर्थः । सहकारित्वेन च यज्ञादिवाक्येन विधानाद्विविदिषर्थमपि कर्मेत्यर्थः ।

---

ननु विविदिषावाक्ये मासाग्निहोत्रन्यायेन (जै०-सू०-२-३-११) कर्मान्तरविधिः कुतो न स्यादत आह—

## ॥ सर्वथापि त एवोभयलिङ्गात् ॥३४॥

सर्वथापि, आश्रमकर्मत्वे विद्यासहकारित्वे च, त एवाग्निहोत्रादयो, न भिन्ना इत्यर्थः । कुतः ? उभयलिङ्गात् । श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत्—'यज्ञेन दानेन' इत्यादिवाक्यं प्रसिद्धयज्ञादिकं तृतीयया निर्दिश्य, विविदिषायां विनियुङ्क्ते । प्रकरणान्तरत्वेऽपि षडहादिवन्न कर्मान्तरत्वम् । स्मृतिलिङ्गमपि—'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' (गी०-६-१) इति विज्ञातकर्तव्यताकमेव कर्म विद्यार्थं दर्शयति ।

---

॥ अनभिभवं च दर्शयति ॥३५॥

सहकारित्वे लिङ्गदर्शनमिदम् । ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिक्लेशैरनभिभवं दर्शयति—'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' (छा०-८-५-३) इत्यादि।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आश्रमकर्माधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ विधुराधिकरणम् ॥

॥ अन्तरा चापि तु तद्दृष्टेः ॥३६॥

अनाश्रमिणां विद्यायामधिकारोऽस्ति, न वेति संशये, विद्यासहकारिकर्माभावान्नास्तीति प्राप्ते, ब्रूमः—तुर्नार्थे । विधुरादीनामस्ति विद्याधिकारः । कुतः ? अन्तरा चापि, अनाश्रमित्वावस्थायामपि, रैक्वादेर्गुरुकुलात्समावृत्तस्य विवाहात्पूर्वं संवर्गविद्यादावधिकारदर्शनादित्यर्थः ।

---

॥ अपि च स्मर्यते ॥३७॥

संवर्तादीनामनाश्रमिणामपि महायोगित्वं स्मर्यते ।

---

ननु श्रुतिलिङ्गं स्मृतिलिङ्गञ्च उपन्यस्तं, न प्रापकमुक्तम् । अत आह—

॥ विशेषानुग्रहश्च ॥३८॥

विधुरादीनामपि जपोपवासदेवताराधनरूपकर्मविशेषैर्विद्यायामनुग्रहसम्भवादित्यर्थः। तथा च स्मृतिः—'जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः' इति ।

---

नचैवमाश्रमवैयर्थ्यमित्याह—

॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥

अतः, अनाश्रमित्वादितरत् आश्रमवर्तित्वं, ज्यायः, प्रशस्ततरम् । कुतः ? श्रुति-

स्मृतिलिङ्गात् । 'तेनैति ब्रह्मवित्पुण्यकृत्' (बृ०-४-४-९) इति, 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः' इति च ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां विधुराधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ तद्भूताधिकरणम् ॥

## ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥४०॥

यतेर्गार्हस्थ्यस्वीकारो भवति, न वेति संशये, ब्रह्मचारिवद्यतेरपि इच्छया भवत्विति शङ्कायामुच्यते—तद्भूतस्योर्ध्वरेतस्त्वं प्राप्तस्य नातद्भावः, न आश्रमान्तरस्वीकारः । जैमिनेरपि । अपिना बादरायणस्यापि संमत इति शेषः । कुतः ? नियमातद्रूपाभावेभ्यः, अतद्रूपमारोहसमानरूपत्वाभावः । अभावश्शिष्टाचाराभावः । 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (छा०-२-२३-१) इति, 'अरण्यमियादिति पदं ततो न पुनरेयात्' इति च नियमः । यथा 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्' 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा०-उ०-४) इत्यारोहक्रमः आम्नायते, नैवमवरोहः क्वचिदाम्नायत इति (तद्रूपत्वाभावः) अतद्रूपम् । शिष्टाचाराभावस्तु स्पष्ट एव ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तद्भूतधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ आधिकारिकाधिकरणम् ॥

## ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥

नैष्ठिकब्रह्मचारिणोऽवकीर्णित्वे, प्रायश्चित्तं वर्तते, न वेति संशये, आधिकारिकं, अधिकारिलक्षणे निर्णीतं 'अवकीर्णिपशुश्च तद्वत्' (जै०-सू०-६-८-२१)' इत्यत्र यत्प्रायश्चित्तं तदपि, न नैष्ठिके सम्भवितुमर्हति । अपिः सामान्यप्रायश्चित्तं समुच्चिनोति । कुतः ? पतनानुमानात् । अनुमानं स्मरणम् ।

‘ आरूढो नौष्ठिकं धर्मं यस्तु प्रच्यवते नरः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥ ’

इति अप्रतिसमाधेयपतनस्मरणात् , तद्योगात् प्रायश्चित्तायोगात् । उपकुर्वाणस्य तु तादृशस्मरणाभावादाधिकारिकं प्रायश्चित्तं भविष्यति ।

---

एवं प्राप्ते, ब्रूमः—

॥ **उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्** ॥४२॥

तुर्नार्थे । अपिरेवार्थे । उपपूर्वमुपपातकमेव नैष्ठिकस्य अवकीर्णित्वं, न महापातकम् । अत एव एके आचार्याः प्रायश्चित्तस्य भावमिच्छन्ति । ‘ ब्रह्मचार्यवकीर्णी ’ इति प्रायश्चित्तविधावविशेषेण ब्रह्मचारिमात्रश्रवणात् । उदाहृतस्मरणमपि यत्नगौरवपरम् । न प्रायश्चित्ताभावपरम् । अत एव ‘ न पश्यामी’त्युक्तं न तु ‘ नास्ती’ति । अशनवत् । यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः तत्प्रायश्चित्तं च समानं, तद्वत् । एवं ‘ वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत् ’ ‘ भिक्षुर्वानप्रस्थवत्सोमवल्लिवर्जम्’ इति भिक्षुवानप्रस्थयोरपि प्रायश्चित्तं द्रष्टव्यम् । अप्रायश्चित्तताव्यवहारात् प्रायश्चित्तानुमतिव्यवहार एव प्रबलः, श्रुतिमूलत्वादित्याह—तदुक्तं प्रमाणलक्षणे—‘ शास्त्रस्था वा तन्निमित्तत्वात् ’ ( जै०-सू०-१-३-९ ) इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आधिकारिकाधिकरणम् ॥

---

॥ श्रीः ॥

(१२) ॥ अथ बहिरधिकरणम् ॥

॥ **बहिस्तूभयथापि स्मृतेराचाराच्च** ॥४३॥

नैष्ठिकस्य प्रायश्चित्तानन्तरं संव्यवहार्यत्वमस्ति, न वेति सन्देहे, प्रायश्चित्तेन शुद्धत्वात्संव्यवहार्यत्वमिति प्राप्तावुच्यते—उभयथापि, अवकीर्णित्वस्य उपपातकत्वे महापातकत्वेऽपि च, प्रायश्चित्तानन्तरमपि बहिष्कर्तव्यः । कुतः ? स्मृतेः । ‘ आरूढो नैष्ठिकं धर्मम् ’ इत्यादिस्मृतेः । ‘ आरूढपतितं विप्रं मण्डलाच्च विनिस्सृतम् । उद्बद्धं कृमिदष्टञ्च

स्पृष्ट्वा चान्द्रायणं चरेत् ॥' इत्यादेश्च । आचाराच्च । एतादृशान् शिष्टा बहिष्कुर्वन्ति, न संव्यवहरन्ति । प्रायश्चित्तन्तु परलोकविरोधं परिहरिष्यतीति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां बहिरधिकरणम् ॥

---

॥ श्रीः ॥

(१३) ॥ अथ स्वाम्यधिकरणम् ॥

**॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥**

अङ्गावबद्धोपासनेषु स्वामिनः कर्तृत्वं, ऋत्विजां वेति संशये, स्वामिनः इत्याहात्रेयः । कुतः ? फलश्रुतेः, ध्यातुः फलश्रवणात् । फलञ्च स्वामिनो न्याय्यं कर्माधिकृतत्वात् । कर्तृगामि च फलं न्याय्यमिति ।

---

एवं स्वामिकर्तृकत्वे प्राप्ते, अभिधीयते—

**॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥४५॥**

आर्त्विज्यमृत्विक्कर्म अङ्गावबद्धोपासनमिति औडुलोमिर्मन्यते । कुतः ? तस्मै हि परिक्रीयते । हि यस्मात्तस्मै साङ्गाय कर्मणे, सर्वं कर्म कर्तुं, ऋत्विक् परिक्रीयते । न च ध्यातुरेव फलमिति नियमः । साङ्गस्य कर्मणः ऋत्विग्द्वारा यजमानस्य प्रयोजककर्तृत्वाद्गोदोहनादिफलवदुपपत्तिः ।

---

**॥ श्रुतेश्च ॥४६॥**

'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासते' इति श्रुतिः ऋत्विक्कर्मजन्यं फलं यजमानगामि दर्शयति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां स्वाम्यधिकरणम् ॥

---

॥ श्रीः ॥

(१४) ॥ अथ सहकार्यन्तरविध्यधिकरणम् ॥

॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

बृहदारण्यके श्रूयते—'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनं च मौनञ्च निर्विद्याथ ब्राह्मणः' (बृ०-३-५-१) इति। यस्मात्पूर्वे ब्राह्मणा आत्मानं विदित्वा एषणाभ्यो व्युत्थाय भिक्षाचर्यमाचरन्, तस्मादधुनातनोऽपि ब्राह्मणः, पण्डा अध्ययनजा ब्रह्मधीः साऽस्य संजाता पण्डितः तस्य कर्म पाण्डित्यं श्रवणं, निर्विद्य संपाद्य, बाल्येन ज्ञानबलभावेन युक्तितोऽसम्भावनानिरासरूपमननेन, स्थातुमिच्छेत्। बाल्यञ्च पाण्डित्यञ्च निर्विद्येत्यनुवाद उक्तदार्ढ्यार्थः। अथ मुनिर्मननशीलो निदिध्यासकस्स्यात्। अमौनं मौनादन्यद्बाल्यं पाण्डित्यं च, मौनं निदिध्यासनं च, निर्विद्याथ ब्राह्मणः, ब्रह्माहमित्यवगन्ता ब्राह्मणः साक्षात्कृतब्रह्मा भवतीत्यर्थः।

अत्र किं मौनं विधीयते, न वेति संशये, न विधेयं विध्यश्रवणादिति प्राप्ते, ब्रूमः — ॥सहकार्यन्तरविधिः॥ सहकार्यन्तरस्य विद्यासहकारिणो मौनस्य विधिरभ्युपेयः। अप्राप्तत्वात्। तद्वतो विद्यावतस्संन्यासिनः, तस्यैव प्रकृतत्वात्। तस्य बाल्यपाण्डित्यापेक्षया तृतीयं मौनं विधेयम्। अपूर्वविधित्वासम्भवेऽपि, नियमविधित्वोपपादनाय पक्षेणेत्युक्तम्। यस्मिन् पक्षे भेददर्शनप्राबल्याद्बाल्यपाण्डित्यमात्रेण कृतकृत्यतां मन्वानस्य साक्षात्कारानावश्यकत्वाभिमानात् निदिध्यासनमकुर्वतः एतन्न प्राप्नोति, तस्मिन् पक्षे विधिसम्भव इत्यर्थः। विध्यादिवत्। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विध्यादौ सहकारित्वेन अग्न्यन्वाधानाद्यङ्गजातं विधीयते, तद्वदत्र विद्याप्रधाने वाक्ये मौनविधिरित्यर्थः।

---

एवं बाल्यादिविशिष्टे संन्यासाश्रमे श्रुते सति, कथं छान्दोग्ये गृहिणोपसंहारः—'अभिसमावृत्य कुटुम्बे' (छा०-८-१५-१) इत्यत्र। तेनाश्रमान्तराभावशङ्का जायते। अत आह—

॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥४८॥

बहूनामग्निहोत्रादिकर्मणां आश्रमान्तरकर्मणाञ्चाहिंसादीनां बाहुल्याद्गृहिणोपसंहारो, नाश्रमान्तराभावादित्यर्थः।

---

॥ मौनवदितरेषामप्युपदेशात् ॥४९॥

आश्रमद्वयोपन्यासे इतरयोरभावशङ्कायां इदमुच्यते—मौनं यत्याश्रमः । उपलक्षणमेतत् । यथा गृहस्थयत्याश्रमयोरुपदेशादङ्गीकारः, एवं 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' (छा०-२-२३-१) इत्युपदेशादितरेषामपि वानप्रस्थब्रह्मचर्याश्रमयोरप्यङ्गीकार इत्यर्थः । द्वयोराश्रमयोः इतरेषामिति बहुवचनं वृत्तिभेदापेक्षया अनुष्ठातृभेदापेक्षया वा गमयितव्यम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सहकार्यन्तरविध्यधिकरणम् ॥

॥ श्रीः ॥

(१५) ॥ अथ अनाविष्काराधिकरणम् ॥

॥ अनाविष्कुर्वन्नन्वयात् ॥५०॥

'बाल्येन तिष्ठासेत्' (बृ०-३-५-१) इत्यत्र बालकर्म कामचारादिकं वा विधीयते, भावशुद्धिर्वा दम्भादिराहित्यं मननानुकूलतयेति संशये, बालस्य कर्म बाल्यमिति व्युत्पत्त्या कामचारादिविधिरिति प्राप्ते, अभिधीयते—न । यथा बालोऽप्ररूढेन्द्रियतया दम्भदर्पादिकं नाविष्कर्तुमीहते, एवं संन्यास्यपि दम्भदर्पादिकमनाविष्कुर्वन् बालवत्तिष्ठेदिति विधीयते । कुतः? अन्वयात् । पूर्वापरवाक्यस्य तत्रैवार्थे सम्यगन्वयात् । श्रवणनिदिध्यासनयोर्मध्ये मननस्य अनुष्ठेयत्वात्, तत्र च रागद्वेषादिराहित्यस्यैवापेक्षितत्वादिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अनाविष्काराधिकरणम् ॥

॥ श्रीः ॥

(१६) ॥ अथ ऐहिकाधिकरणम् ॥

॥ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥५१॥

'सर्वापेक्षा च' (ब्र०-सू०-३-४-२६) इत्यारभ्य अन्तरङ्गबहिरङ्गसाधनानि ज्ञानस्य निरूपितानि । इदानीं फलभूतं ज्ञानं इहैव जन्मनि भवति, जन्मान्तरेपि वेति विचार्यते । साधनानुष्ठाने दृष्टार्थतया साध्यावश्यम्भावादिहैव ज्ञानमुत्पद्यते इति प्राप्ते,

अभिधीयते—अप्रस्तुतप्रतिबन्धे, प्रस्तुतस्य श्रवणादिसाधनस्य कर्मविशेषेण प्रतिबन्धाभावे, ऐहिकमिहैव जन्मनि ज्ञानमुत्पद्यते। विचित्रविपाकत्वात्कर्मणाम्। बलवता केनचित्कर्मणा प्रतिबन्धे सति, जन्मान्तरेऽपि ज्ञानमुत्पद्यते। कुतः? तद्दर्शनात्। 'गर्भस्थ एव वामदेवः प्रतिबुबुधे' इति गर्भस्थस्य जन्मान्तरश्रवणादिना ज्ञानदर्शनात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ऐहिकाधिकरणम् ॥

---

॥ श्रीः ॥

[१७) ॥ अथ मुक्तिफलानियमाधिकरणम् ॥

**॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः ॥५२॥**

विद्याफले मुक्तौ किं तारतम्यमस्ति, न वेति संशये, फलत्वाविशेषात्स्वर्गादिवत्तारतम्यप्राप्तावुच्यते—एवं, यथा विद्यायामैहिकामुष्मिकत्वकृतो विशेषः, एवं मुक्तिरूपफले अनियमः, तारतम्यनियमो नास्तीत्यर्थः। कुतः? तदवस्थावधृतेः। 'ब्रह्म वेद ब्रह्मैव भवति' (मु०-३-२-९) इति मुक्तेः ब्रह्मभावरूपतावधारणात्। ब्रह्मणि च नित्यनिरतिशयसुखात्मके तारतम्याभावात्। अभ्यासोऽध्यायसमाप्तिद्योतकः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां मुक्तिफलानियमाधिकरणम् ॥

॥ इति श्रीमहोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंसश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तृतीयाध्यायस्य चतुर्थः पादः ॥

॥ पुरुषार्थोऽतस्सप्तदश द्विपञ्चाशत् ॥

अधिकरणसंख्या—(१७)

सूत्रसंख्या—(५२)

---

|| श्रीः ||

# || अथ चतुर्थोऽध्यायः ||

## || अथ चतुर्थाध्यायस्य प्रथमः पादः ||

### (१) || अथ आवृत्त्यधिकरणम् ||

### || आवृत्तिरसकृदुपदेशात् ||१||

तृतीये साधनाश्रयो विचारो वृत्तः। अत्र फलाश्रयो वर्तिष्यते। प्रासङ्गिकं च किञ्चित्। प्रथमं कतिपयाधिकरणैः साधनाश्रय एव विचारः। तत्र श्रवणादिकं सकृदनुष्ठेयं, असकृद्वेति संशये, 'सकृत्कृते कृतः शास्त्रार्थः' इति सकृदिति प्राप्ते, ब्रूमः— श्रवणादीनामावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ०-४-५-६) इति असकृदात्मविषयकश्रवणाद्युपदेशात्। निदिध्यासनस्य च आवृत्तिगुणकत्वात्। आत्मसाक्षात्कारफलकतया दृष्टार्थत्वेन, अवघातवत्तण्डुलनिर्वृत्तिपर्यन्तं, फलपर्यन्तावृत्तेः न्यायसिद्धत्वाच्च।

---

### || लिङ्गाच्च ||२||

उद्गीथविद्यायां 'आदित्य उद्गीथः' (छा०-१-५-१) इत्येतदेकपुत्रतादोषेण निन्दित्वा, 'रश्मींस्त्वं पर्यावर्तयात्' (छा०-१-५-२) इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत्सिद्धवत्प्रत्ययावृत्तिं सूचयति। तत्सामान्यादितरप्रत्ययेष्वपि आवृत्तिसिद्धिः। हे पुत्र त्वं रश्मीनादित्यं च भेदेन पर्यावर्तयात् पर्यावर्तयतात्। तकारलोपश्छान्दसः। पर्यावर्तयतादिति मध्यमैकवचनमेतत्, त्वंयोगात्, पर्यावर्तय उपास्वेत्यर्थः। एवं सति बहुपुत्रास्ते भविष्यन्ति, न केवलादित्योपास्ताविवैकपुत्रतेति श्रुत्यर्थः।

|| इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आवृत्त्यधिकरणम् ||

॥ श्रीः ॥

(२) ॥ अथ आत्मत्वोपासनाधिकरणम् ॥

## ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३॥

किं परमात्मा अहमिति गृहीतव्यः, किं वा मदन्यः इतीति संशये, अपहतपाप्मत्वादिस्वरूपस्य परमात्मनो जीवाभेदासम्भवादन्यत्वेन उपासने प्राप्ते, ब्रूमः— तुर्नार्थे । आत्मेत्येव, अहमित्येव परमात्मा प्रत्येतव्य इत्यर्थः । यतः 'अहं ब्रह्मास्मि' (बृ०-१-४-१०) इत्यात्मत्वेनैव परमात्मानं तत्वविद उपगच्छन्ति । 'तत्त्वमसि' ( छा०-६-८-७ ) इत्यादीनि च वाक्यानि तथैव ग्राहयन्ति च । न च विरोधः, जीवस्य सुखदुःखादिविरुद्धधर्माध्यासस्याविद्याकल्पितत्वेन वस्तुतोऽपहतपाप्मत्वादेरविरोधात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आत्मत्वोपासनाधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ प्रतीकाधिकरणम् ॥

## ॥ न प्रतीके न हि सः ॥४॥

'मनो ब्रह्म' ( छा०-३-१८-१ ) 'आदित्यो ब्रह्म' ( छा०-३-१९-१ ) इत्यादिप्रतीकोपासनेषु आत्मत्वेनैवोपासनं कर्तव्यं, न वेति संशये, ब्रह्मण आत्मत्वात् मनआदेश्च ब्रह्मविकारत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेः, आत्मत्वेनोपासने प्राप्ते, अभिधीयते—प्रतीके आत्मबुद्धिं न कुर्यात् । कुतः ? हि यस्मात्स उपासकः न प्रतीकात्मकः । जीवप्रतीकयोः ब्रह्मात्मना ऐक्येऽपि, प्रातिस्विकरूपेणैक्याभावात् , कटकमुकुटयोरिव सुवर्णात्मना ऐक्येऽपि स्वरूपेणैक्याभावः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रतीकाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ ब्रह्मदृष्ट्यधिकरणम् ॥

## ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥५॥

उक्तोदाहरण एवादित्यादिदृष्टिर्ब्रह्मणि ब्रह्मदृष्टिरादित्ये वेत्यनियमः, किं वा आदित्यादिषु ब्रह्मदृष्टिरेवेति नियमः, इति संशये, नियमहेत्वभावादनियमप्राप्तौ, उच्यते—

आदित्यादिषु ब्रह्मदृष्टिर्विधीयते । कुतः ? उत्कर्षात् । आदित्ये ब्रह्मदृष्टिरुत्कृष्टदृष्टिर्भवति, ब्रह्मण्यादित्यदृष्टिर्निकृष्टदृष्टिस्स्यात् । उत्कृष्टदृष्ट्या चामात्यादौ राजबुद्ध्या लोके फलं दृष्टमित्यत्रापि तथैव न्याय्यम् । आदित्यादिशब्दानां मुख्यत्वादपि न बुद्धिलक्षकत्वम् । ब्रह्मशब्दस्य तु जघन्यत्वादितिशब्दपरत्वाच्च बुद्धिलक्षकत्वम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रतीकाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ आदित्यादिमत्यधिकरणम् ॥

### ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥६॥

'य एवासौ तपति तमुद्गीथमुपासीत' ( छा०-१-३-१ ) इत्याद्यङ्गावबद्धोपासनेषु आदित्योद्गीथादीनां विकारत्वेन समत्वात् ब्रह्मवदुत्कृष्टत्वाभावान्मुख्यत्वादादित्य एव उद्गीथादिदृष्टिः कर्तव्येति प्राप्ते, ब्रूमः । चस्त्वर्थः । अङ्गे अङ्गेषु, आदित्यादिमतयः कर्तव्याः । कुतः ? उपपत्तेः । आदित्यादिदृष्ट्या संस्कृतं कर्म वीर्यवत्तरं भवति, फलान्तरसाधनत्वेऽपि गोदोहनादिवत्प्रकृतकर्माश्रितमेव फलसाधनं, इत्युपपत्तेः मुख्यस्यापि बुद्धिलक्षकत्वम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आदित्यादिमत्यधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ आसीनाधिकरणम् ॥

### ॥ आसीनस्संभवात् ॥७॥

अङ्गावबद्धेषु कर्मतन्त्रत्वान्नासनादिचिन्ता । इतरोपासनेषु चिन्ता, किं तिष्ठन्नासीनो वोपासीत, अथ आसीन एवेति । नियमकारणाभावादनियमप्राप्तावुच्यते—आसीन एवेति । कुतः ? सम्भवात् । शयानस्य निद्राप्रसङ्गात् । गच्छतश्चित्तविक्षेपात् । तिष्ठतोऽपि शरीरधारणव्यग्रत्वात् । परिशेषादासीनस्यैवाव्यग्रत्वसम्भवादासीन एवोपासीत ।

॥ ध्यानाच्च ॥८॥

किञ्च—उपासनं ध्यानम्। तच्च एकाग्रचित्ते 'बको ध्यायती'त्यादौ लोके दृष्टम्। आसीनस्य चाविक्षेपः सुलभ इत्यासीन एव।

---

॥ अचलत्वञ्चापेक्ष्य ॥९॥

किञ्च—'ध्यायतीव पृथिवी' (छा०-७-६-१) इत्यादौ अचलत्वमपेक्ष्य ध्यायतिवादो भवति। तदपि लिङ्गमासीनत्वे।

---

॥ स्मरन्ति च ॥१०॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' (गी०-६-११) इत्यादिना उपासनाङ्गत्वेन आसनं स्मरन्ति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आसीनाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ एकाग्रताधिकरणम् ॥

॥ यत्रैकाग्रता तत्राविशेषात् ॥११॥

देशकालयोर्नियमाशङ्कायामाह—यत्र देशे काले वा एकाग्रता चित्तस्य भवति, तत्रासीन उपासीत। कुतः? अविशेषात्। 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिवद्देशकालविशेषाश्रवणात्। ननु 'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः' (श्वे०-२-१०) इति विशेषाम्नानात्कथमविशेषादित्युक्तम्? सत्यम्, तस्मिन् विशेषे सत्यपि तदवान्तरविशेषाभावाभिप्रायेणेदमुक्तम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां एकाग्रताधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ आप्रायणाधिकरणम् ॥

॥ आ प्रायणात्तत्रापि हि दृष्टम् ॥१२॥

अभ्युदयफलेष्वहंग्रहोपासनेषु उपासनाशब्दार्थनिर्वाहाय कियन्तञ्चित्कालमावृत्तिः कर्तव्या, उतामरणादिति संशये, यत्किञ्चिदावृत्तावपि शास्त्रार्थानुष्ठानसिद्धेः न कालनियम

इति प्राप्ते, ब्रूमः—आप्रायणात् । मरणपर्यन्तमावृत्तिः कर्तव्या । कुतः ? तत्रापि हि दृष्टम् । हि यस्मात्तत्रापि, ज्योतिष्टोमादिष्वपि, अपिना प्रकृतोपासनेषु, उपासनाप्तव्यफलज्ञानं मरणकाले श्रुतौ दृष्टं—'यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' (प्र०-उ०-३-१०) इति। यस्मिन्विषये चित्तमस्य स यच्चित्तः, तेन विषयेण हृद्यभिव्यक्तेन सह, तेजसा उदानेन, उदानस्य तेजोदेवताकत्वात्, आत्मना भोक्त्रा ।

न च यागादिवददृष्टद्वारैव उपासनानामपि मरणकाले प्राप्तव्यफलसाक्षात्काराक्षेपकत्वमिति युक्तम् । दृष्टे सम्भवति अदृष्टकल्पनायोगात् ।

'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥' (गी०-८-६)

इत्यादिस्मृतेश्च । तस्मात् आमरणमुपासनानुवृत्तिरेव युक्तेति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आप्रायणाधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ तदधिगमाधिकरणम् ॥

## ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

अतिक्रान्तः तृतीयशेषः । इदानीं फलविषया चिन्ता प्रस्तूयते । ब्रह्मसाक्षात्कारेण पापं नश्यति, किं वा न नश्यतीति संशये, अकृतप्रायश्चित्तकर्मणां भोगादेव क्षय इति, अनाशशङ्कायामुच्यते—तदधिगमे, ब्रह्माधिगमे सति, उत्तराघस्याश्लेषः अनुत्पत्तिः, कर्माननुष्ठानाभावात् । पूर्वाघस्य विनाशः । कुतः ? तद्व्यपदेशात् । 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छा०-४-१४-३) इति, 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा०-५-२४-३) इति चाश्लेषविनाशयोर्व्यपदेशात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तदधिगमाधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ इतरासंश्लेषाधिकरणम् ॥

**॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥**

पुण्यस्य शास्त्रीयत्वात्तदधिगमेनानाशशङ्कायां, आतिदेशः क्रियते। इतरस्य, पुण्यस्याप्येवं पापवदसंश्लषो नाशश्च। 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु०-२-२-८) इति कर्ममात्रक्षयावगमात्। तुरवधारणे। पाते, शरीरपाते विदुषो मोक्ष एव। न तु पुण्यफलोपभोगाय शरीरान्तरम्। सकलकर्मक्षयादित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इतरासंश्लेषाधिकरणम् ॥

---

॥ श्रीः ॥

(११) अथ अनारब्धकार्याधिकरणम् ॥

**॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥**

पुण्यपापयोः ज्ञानेन नाशः किमविशेषेण, उत प्रारब्धकर्मव्यतिरिक्तयोरिति संशये, विशेषाश्रवणादखिलनाशप्राप्तावुच्यते—तुर्नार्थे। अनारब्धं विद्वच्छरीरलक्षणं कार्यं याभ्यां पुण्यपापाभ्यां ते अनारब्धकार्ये, पूर्वे पुण्यपापे प्रारब्धव्यतिरिक्ते एव नश्यतः। कुतः? तदवधेः। शरीरपातपर्यन्तं विदुषो मोक्षे विलम्बश्रवणादित्यर्थः। 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा०-६-१४-२) इति। (यावत्प्रारब्धफलं कर्म न क्षीयते तावत्पर्यन्तं) यावत्पर्यन्तं प्राणैर्न विमोक्ष्यते देहः तावत्पर्यन्तं विदुषो मुक्तौ विलम्बः तदनन्तरं च ब्रह्म संपत्स्यत इति।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अनारब्धकार्याधिकरणम् ॥

---

॥ श्रीः ॥

(१२) ॥ अथ अग्निहोत्राद्यधिकरणम् ॥

**॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥१६॥**

नित्यमग्निहोत्रादिकं कर्म विद्यया नश्यति, न वेति संशये, प्रारब्धव्यतिरिक्तत्वाविशेषान्नाशप्रसक्तावुच्यते—तुर्नार्थे। नित्याग्निहोत्रादिकं तत्कार्यायैव, विद्याद्वारा विद्या-

कार्यमोक्षायैव । अतो न नाशः । कुतः ? तद्दर्शनात् । 'तमेतं वेदानुवचनेन' (बृ०-४-४-२२) इत्यादिना विद्याद्वारा मोक्षहेतुत्वदर्शनात् । यद्यपि विद्यामुत्पाद्य कर्माणि नश्यन्ति, फलापवर्गित्वात्कर्मणां, तथापि फलमदत्वा नाश एव नाशः । फलेन नाशः न नाशतया व्यवह्रियते, इति विशेषाभिधानार्थमिदम् ।

---

ननु अश्लेषविनाशयोः 'सुहृदः साधुकृत्याम्' इत्यस्य च को विषयोऽत आह—

**॥ अतोऽन्यापि ह्येकेषामुभयोः ॥१७॥**

हि यस्मात्कारणादतो नित्याग्निहोत्रादेः अन्यापि साधुकृत्या स्वर्गादिफलाभिसन्धिना कृताऽस्ति । तस्या एकेषां शाखिनां उपायनविनाशाम्नानमित्यर्थः । तस्या एव चेदमघवदश्लेषविनाशनिरूपणम् । उभयोः जैमिनिबादरायणयोः काम्यकर्मणो विद्यानुपकारकत्वे संप्रतिपत्तिरित्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अग्निहोत्राद्यधिकरणम् ॥

---

॥ श्रीः ॥

(१३) ॥ अथ विद्यासंयुक्तकर्मवीर्यवत्त्वाधिकरणम् ॥

**॥ यदेव विद्ययेति हि ॥१८॥**

नित्यं कर्म द्विविधं अङ्गावबद्धोपासनायुक्तं तद्रहितं चेति । तत्र किमविशेषेण विद्यायां विनियोगः, उत विद्यासहितस्यैवेति संशये, उपासनासहितस्य तद्रहितात्प्रशस्तत्वात्तदेव ज्ञानसाधनमिति प्राप्ते, उच्यते—अविशेषेण विनियोगः । कुतः ? ॥ यदेव विद्ययेति हि ॥ हि यस्मात् 'यदेव विद्यया' (छा०-१-१-१०) इति वाक्ये तरप्श्रवणाद्विद्यारहितस्यापि सामर्थ्यं गम्यते । 'तमेतम्' (बृ०-४-४-२२) इति वाक्येन चाविशेषेण कर्म विनियुज्यत इति, उपासनासहितं तद्रहितं च अग्निहोत्रादि ज्ञानसाधनमिति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां विद्यासंयुक्तकर्मवीर्यवत्त्वाधिकरणम् ॥

---

॥ श्रीः ॥

(१४) ॥ अथ इतरक्षपणाधिकरणम् ॥

**॥ भोगेन त्वितरे क्षपयित्वा संपद्यते ॥१९॥**

आधिकारिकाणां मुक्तिरस्ति, नास्ति वेति संशये, प्रारब्धकर्मोपभोगाय बहुदेहस्वीकारे पूर्वविद्यानाशान्न मुक्तिरिति प्राप्ते, ब्रूमः—इतरे, आरब्धकार्ये पुण्यपापे, भोगेन उपभोगेन, क्षपयित्वा, ब्रह्म संपद्यते आधिकारिकोऽपि। न च बहुजन्मान्तरितत्वेन विद्यानाशः शङ्क्यः। 'तस्य तावदेव' (छा०-६-१४-२) इति वाक्येन प्रारब्धक्षयपर्यन्तं विद्याग्नी[स्थि]त्यवगमात्। सुपुप्त्यादिव्यवधानवद्देहान्तरव्यवधानस्यापि विद्यानाशाप्रयोजकत्वात्। यद्यपि गुणोपसंहारे चिन्तेयं वृत्ता, तथापि आशङ्कान्तरसमाधानायेदमित्यनवद्यम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां इतरक्षपणाधिकरणम् ॥

॥ इति श्रीमहोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंसश्रीमतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चतुर्थाध्यायस्य प्रथमः पादः ॥

॥ आवृत्तिश्चतुर्दशैकोनविंशतिः ॥

अधिकरणसंख्या—(१४)

सूत्रसंख्या—(१९)

---

॥ श्रीः ॥

॥ अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

(१) ॥ अथ वागधिकरणम् ॥

**॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥**

विद्वदविदुषोः साधारण्येन उत्क्रान्तिर्विचार्यते। अनुत्क्रान्तस्य अपरविद्याफलप्राप्तेरसम्भवात् फलाध्यायसङ्गतिः। 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा०-६-८-६) इति श्रूयते। तत्र मनसि वाचः किं स्वरूपेणैव लयः, उत वाग्वृत्तेरिति संशये, वागिति श्रवणात्स्वरूप-

लय इति प्राप्ते, ब्रूमः—वाग्वृत्तिरेव मनसि लीयते। कुतः? दर्शनात्। मनोवृत्तौ स्थितायां वाग्वृत्तिलयो दृश्यते, न तु वागिन्द्रियस्य, अतीन्द्रियत्वात्।

न च श्रुतिबलात्तदवगमः। मनसः तत्प्रकृतित्वाभावेन तत्र वाग्लयासम्भवात्। वृत्तिलयस्त्वनुपादानेऽपि सम्भवति। वह्नेः प्रकाशदहनादिवृत्तेः जले लयदर्शनात्। कथं तर्हि 'वाङ्मनसि सम्पद्यते' इति श्रुतिरत आह—शब्दाच्चेति। वाक्शब्दोऽपि वृत्तिवृत्तिमतोरभेदविवक्षया वृत्तिलयमेव प्रतिपादयतीत्यर्थः।

---

## ॥ अत एव च सर्वाण्यनु ॥२॥

यत एव प्रकृतिविकारभावाभावाद्वाचो मनसि वृत्तिलयः, न स्वरूपलयः, अत एव च सर्वाणि चक्षुरादीनि मनसि अनु अनुगतानि लीनानि वृत्तिरूपेणैव। 'तस्मादुपशान्त-तेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः' (प्र०-३-९) इत्यत्र अविशेषेणेन्द्रियाणां वृत्तिरूपेणैव मनसि संपत्तिः श्राव्यते। न स्वरूपलयः। मनसि सर्वेन्द्रियलये सति 'वाङ्मनसि' इत्यत्र वाग्ग्रहणं 'वाङ्मनसि' इति श्रुत्यनुसारेणेति द्रष्टव्यम्। उपशा-न्ततेजाः उपशान्तौष्ण्यः। पुनर्भवं पुनर्जन्मोद्दिश्य, मनसि संपद्यमानैरिन्द्रियैः प्राणमायाति इति शेषः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वागधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ मनोऽधिकरणम् ॥

## ॥ तन्मनः प्राण उत्तरात् ॥३॥

'मनः प्राणे' (छा०-६-८-६) इत्यत्र मनसः प्राणे स्वरूपलयः, वृत्तिलयो वेति संशये, स्वरूपलय एव। कुतः? 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' (छा०-६-५-४) इत्यत्र अन्नयोनित्वं मनसः अब्योनित्वं च प्राणस्य आम्नायते। 'आपश्चान्नमसृजन्त' इति अपामन्नप्रकृतित्वस्य श्रुतत्वादन्नात्मकस्य मनसोऽबात्मकप्राणे स्वरूपलय एव युक्तः, इत्यधिकाशङ्कायामतिदिश्यते—तन्मनः, वाग्वृत्तिलयाश्रयभूतं मनः, प्राणे वृत्तिद्वारेणैव लीयते इत्युत्तराद्वाक्यादवगन्तव्यम्। उदाहृतवाक्यैः प्राणरूपेण

परिणताभ्योऽद्भ्यो मनो जायत इत्यप्रतीतेः, मनसः प्राणप्रकृतिकत्वाभावाद्वृत्तिलय एव 'मनः प्राणे' इत्युत्तरवाक्यादवगन्तव्यः इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां मनोऽधिकरणम् ॥

---

॥ श्रीः ॥

(३) ॥ अथ अध्यक्षाधिकरणम् ॥

## ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥४॥

प्राणस्य किं तेजसि वृत्तिलयः, किं वा देहेन्द्रियादिपञ्जराध्यक्षे जीवे, इति संशये, 'प्राणस्तेजसि' (छा०-६-८-६) इति श्रुत्या तेजसि इति प्राप्ते, ब्रूमः—सः प्रकृतः प्राणोऽध्यक्षे जीवे लीयते । कुतः ? तदुपगमादिभ्यः । 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' (बृ०-४-३-३८) इति श्रुत्यन्तरे प्राणानां जीवोपगमश्रवणात् । सूत्रे उपगमो लयः । यथा राजानं प्रयियासन्तं सर्वे भृत्यास्समायन्ति तद्वदिति श्रुतेरर्थः । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ०-४-४-२) इति प्राणस्य जीवानुवृत्त्यादिकं आदिशब्दग्राह्यम् ।

---

नन्वेवं 'प्राणस्तेजसि' (छा०-६-८-६) इति श्रुतिविरोधोऽत आह—

## ॥ भूतेषु तच्छ्रुतेः ॥५॥

'प्राणस्तेजसि' इति श्रुतेः तेजस्सहचरितेषु भूतसूक्ष्मेषु प्राणसहितो जीवोऽन्तकालेऽवतिष्ठतीत्यर्थो व्याख्येयः इत्यर्थः ।

---

ननु 'तेजसि' इति तेजोमात्रश्रवणे कथं भूतेष्वित्युक्तमत आह—

## ॥ नैकस्मिन्दर्शयतो हि ॥६॥

अन्तकाले एकस्मिन् तेजसि जीवो नावतिष्ठते । कुतः ? हि यस्मात् 'पञ्च-

म्यामाहुतावापः पुरुषवचसः' (छा०-५-३-३) (५-९-१) इत्यत्र प्रश्नप्रतिवचने सर्वभूत-सूक्ष्मावस्थानं दर्शयतः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अध्यक्षाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ आसृत्युपक्रमाधिकरणम् ॥

## ॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

'वाङ्मनसि' (छा०-६-८-६) इत्यादिना उक्ता उत्क्रान्तिः किं सगुण-विद्यावतोऽनुपासकस्य च समाना, किं वा अनुपासकस्यैवेति संशये, दहरविद्यायां 'अमृत-त्वमेति' (छा०-८-६-६) इति श्रुत्या सगुणविद्याया अपि मोक्षफलत्वश्रवणान्निर्गुण-विद्यायामिव उत्क्रान्त्यनुपयोगादज्ञानिन एवेयमुत्क्रान्तिरिति प्राप्ते, अभिधीयते—विद्वद-विदुषोस्समानेयमुत्क्रान्तिः, आसृत्युपक्रमोऽपगमनक्रमः प्राणाश्रयत्वमिति यावत्। पञ्चमी न विवक्षिता। तदपि समानम्। अविशेषश्रवणादिति हेत्वध्याहारः कार्यः। सगुणोपासकस्य देवयानेन गमनव्यतिरेकेण ब्रह्मलोकप्राप्तेरसम्भवेन उत्क्रान्त्यावश्यकत्वात्। कथं तर्ह्य-मृतत्वश्रुतिरत आह—अमृतत्वं चानुपोष्य, इति। अदग्ध्वाऽविद्याक्लेशादिकं इदमृतत्वमापे-क्षिकम्। न तु निर्गुणविद्यावदविद्यानाशपूर्वकं इदममृतत्वमित्यर्थः। उपपूर्वात् 'उष दाहे' इत्यस्मात् धातोर्निष्पन्नं ल्यबन्तमुपोष्येति। भामत्यान्तु पञ्चमी हेतावेव योजिता—समानेति प्रतिज्ञा। कुतः? आसृत्युपक्रमात्। स्रियते गम्यते प्राप्यते देवयानेन इति सृतिः कार्यब्रह्मलोकप्राप्तिः। आसृति उपासकस्य उपक्रमः प्रयत्नः, तस्मादित्यर्थः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आसृत्युपक्रमाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ संसारव्यपदेशाधिकरणम् ॥

## ॥ तदापीतेः संसारव्यपदेशात् ॥८॥

'तेजः परस्यां देवतायाम्' (छा०-६-८-६) इत्यत्र तेजःप्रभृतीनां स्वरूप-लयो, वृत्तिलयो वेति संशये, ब्रह्मप्रकृतिकत्वात्तस्मिन्स्वरूपलय एव युक्त, इति प्राप्ते, ब्रूमः—

तत् तेजःप्रभृति भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतं आ अपीतेः आसंसारमोक्षात्तत्वज्ञान-निमित्तादवतिष्ठते । कुतः ? संसारव्यपदेशात् ।

'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' (का०-५-७)

इति मरणानन्तरमपि संसारव्यपदेशात् । अन्यथा सर्वेषां मरणानन्तरमेव मोक्ष इति विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गः । तस्मात् अज्ञानलक्षणसूक्ष्मावस्थावशेषैवेयं परस्यां संपत्तिस्सुषुप्तिवदिति ।

---

**॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥**

तच्चेतरभूतसहितं तेजः उत्क्रान्तिकाले स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति । नाडीनिष्क्रमणादिश्रुतिभ्यः तथा सूक्ष्मत्वेन उपलब्धेः । अस्यैव सत्त्वेन संसारोपपत्तिः, नान्यथा ।

---

**॥ नोपमर्देनातः ॥१०॥**

अतः सूक्ष्मत्वादेव, स्थूलशरीरस्योपमर्देन दाहादिनिमित्तेन सूक्ष्मस्य नोपमर्दः ।

---

**॥ अस्यैव चोपपत्तेरेष ऊष्मा ॥११॥**

अस्यैव सूक्ष्मस्य शरीरस्यैव अयमूष्मा यश्शरीरे उपलभ्यते । कुतः ? उपपत्तेः । मृतावस्थायां असति सूक्ष्मशरीरे अवस्थितेऽपि स्थूलदेहे ऊष्मा नोपलभ्यते, सति तस्मिन् एतच्छरीरे उपलभ्यते, इत्युपपत्तिः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां संसारव्यपदेशाधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ प्रतिषेधाधिकरणम् ॥

**॥ प्रतिषेधादिति चेन्न शारीरात् ॥१२॥**

निर्गुणब्रह्मज्ञानिनोऽप्युत्क्रान्तिरस्ति, न वेति संशये, अविशेषादस्तीत्याह । ननु 'न तस्य प्राणा उत्क्रामन्ति' (बृ०-४-४-६) इति प्रतिषेधात् ब्रह्मविदोऽनुत्क्रान्ति-

रिति चेन्न । यतः शारीरात् आत्मनस्सकाशादयमुत्क्रान्तिप्रतिषेधः प्राणानां, न शरीरात् । कथमवगम्यते ? ' न तस्मात् प्राणा उत्क्रामन्ति ' इति शाखान्तरे पञ्चमीप्रयोगात् । तस्मात्प्राणादिविशिष्टस्य जीवस्य ज्ञानिनोऽपि शरीरादुत्क्रान्तिरस्तीति ।

एवं प्राप्ते, अभिधीयते—

॥ स्पष्टो ह्येकेषाम् ॥१३॥

न परब्रह्मविदो देहादुत्क्रान्तिः । कुतः ? हि यस्मात् एकेषां शाखिनां देहापादानक एवोत्क्रान्तिप्रतिषेधः स्पष्ट उपलभ्यते । तथा हि आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति ' ( बृ०-३-२-११ ) इत्यत्र ' नेति होवाच याज्ञवल्क्यः' ( बृ०-३-२-११ ) इत्यनुत्क्रान्तिपक्षं परिगृह्य, न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु म्रियत इत्यस्यामाशङ्कायां ' अत्रैव समवनीयन्ते ' इति प्रविलयं प्राणानां प्रतिज्ञाय, तत्सिद्धये ' स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेते ' ( बृ०-३-२-११ ) इति तच्छब्देन परामृष्टस्य प्रकृतस्य उत्क्रान्तिप्रतिषेधावधेरुच्छ्वयनादिसमाम्नानाच्छरीरापादानक एव सर्वत्र उत्क्रान्तिप्रतिषेध इत्यर्थः ।

॥ स्मर्यते च ॥१४॥

गत्युत्क्रान्त्यभावः भारते स्मर्यते—

' सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा अपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥' इति ।

पद्यत इति पदं गन्तव्यमन्यद्यस्य नास्ति, स ब्रह्मविदपदः । तस्य मार्गे ब्रह्मप्राप्तिसाधने ज्ञाने, ये पदैषिणो निष्ठेच्छवः, तेऽपि देवाः उत्कृष्टाः, किमु तन्निष्ठाः । परन्तु मुह्यन्त्यत्र मन्दभाग्याः । इति स्मृत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रतिषेधाधिकरणम् ॥

॥ श्रीः ॥

(७) ॥ अथ कलाप्रलयाधिकरणम् ॥

## ॥ तानि परे तथा ह्याह ॥१५॥

इन्द्रियाणि भूतानि च ब्रह्मविदो ब्रह्मणि लीयन्ते, स्वप्रकृतौ वेति संशये, 'गताः कलाः पञ्चदश प्रतिष्ठाः' (मु०-३-२-७) इति श्रुत्या कलाशब्दवाच्यानां प्राणादीनां प्रतिष्ठाशब्दवाच्यस्वस्वकारणलयप्रतिपादनात् स्वस्वप्रकृताविति प्राप्ते, ब्रूमः—तानि प्राणशब्दोदितानीन्द्रियाणि भूतानि च ब्रह्मविदः परब्रह्मणि लीयन्ते । कुतः ? तथा ह्याह श्रुतिः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्रश्न०-६-५) इति । न च 'गताः कलाः' इत्यादिश्रुतिविरोधः । पार्श्वस्थपुरुषापेक्षया तस्याः प्रवृत्तिः । म्रियमाणे च तत्वविदि समीपवर्तिनः अनग्रदृष्टान्तेन वागादीनां अग्न्यादिषु लयं मन्यन्ते । तत्त्ववित्त्वात्मन्येवेति श्रुतिद्वयाविरोधः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कलाप्रलयाधिकरणम् ॥

---

॥ श्रीः ॥

(८) ॥ अथ कलाऽविभागाधिकरणम् ॥

## ॥ अविभागो वचनात् ॥१६॥

विदुषः कलाप्रलयस्सावशेषो निरवशेषो वेति संशये, प्रलयत्वसामान्यात्सावशेषत्वे प्राप्ते, आह—अविभागः, निरवशेषः लयः । कुतः ? वचनात् । 'यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्त गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते' (प्रश्न०-६-५) इति निरवशेषलयप्रतिपादनात् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कलाऽविभागाधिकरणम् ॥

---

॥ श्रीः ॥

(९) ॥ अथ तदोकोऽधिकरणम् ॥

## ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥

परविद्याश्रया प्रासङ्गिकी कथा वृत्ता । इदानीमपरविद्याश्रयैव वर्तिष्यते । विद्वदविदुषोरुत्क्रान्तिस्समानेत्युक्तम् । तत्र किमनियमः, किं वा मूर्धद्वारा विद्वान्निष्क्रामति अविद्वानन्यद्वारेति नियमः, इति संशये, विशेषाभावादनियमप्राप्तावुच्यते—तस्योपसंहृतवागादिकलापस्य उत्चिक्रमिषोर्जीवस्य । ओकः आयतनं हृदयम् । 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' (बृ०-४-४-१) इति श्रुतेः । तस्य हृदयस्य अग्रज्वलनं द्योतनं भविष्यत्फलप्रकाशनम् । तत्प्रकाशितद्वारा सर्वोऽपि गच्छति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' (बृ०-४-४-२) इति श्रुतेः । एतावद्विद्वदविदुषोस्साधारणम् । एतावन्मात्रसाम्येऽपि विद्वान्मूर्धस्थानादेव निष्क्रामति, इतरे स्थानान्तरेभ्यः । कुतः ? विद्यासामर्थ्यात् । यदि विद्वानपि अविद्वद्वत् यतः कुतश्चिन्निष्क्रामेत्, नैवोत्कृष्टं लोकं लभेत । ततश्च विद्यावैयर्थ्यं स्यात् । तच्छेषगत्यनुस्मृतियोगाच्च । तस्य विद्याविशेषस्य शेषभूता गतिस्तस्याः अनुस्मृतिरनुशीलनम् । तद्योगात् । विद्याविशेषे मूर्धन्यनाडीगत्यभ्यासोऽपि विहितः । तामभ्यस्य स्थितः तयैव प्रतिष्ठते इति युक्तम् । तस्मात् हृदयालयेन ब्रह्मणा सूपासितेन अनुगृहीतस्तद्भावमापन्नो विद्वान्, शताधिकया शतादतिरिक्तयैकशततम्या मूर्धन्यनाड्या निष्क्रामति, इतरे तु स्थानान्तरेभ्यः । तथा च श्रूयते—

'शतञ्चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' (छा०-८-६-६) इति । विष्वङ् नानागतयोऽन्या नाड्यः उत्क्रमणायोपयुज्यन्ते, न त्वमृतत्वप्राप्तये, इत्यर्थः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां तदोकोऽधिकरणम् ॥

---

॥ श्रीः ॥

(१०) ॥ अथ रश्म्यनुसार्यधिकरणम् ॥

## ॥ रश्म्यनुसारी ॥१८॥

'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा०-८-६-५) इति मूर्धन्यनाडीनिर्गतस्य रश्मिसम्बन्धः श्रूयते। तत्किं रात्रावहनि वा म्रियमाणस्य अविशेषेण भवति, उत अहन्येवेति संशये रात्रावहनि चाविशेषेण रश्म्यनुसारी सन्नादित्यमण्डलं प्राप्नोतीति, सिद्धान्तिनः प्रतिज्ञा।

---

## ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥१९॥

निशि रश्म्यभावाद्रश्मिसम्बन्धो नास्तीति चेन्न। नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात्। तच्च दर्शयति श्रुतिः—'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' (छा०-८-६-२) इति। निदाघसमये च रात्रावपि सूर्यरश्मयस्तापेनानुमीयन्ते, ऋत्वन्तरेष्वभिभवान्न प्रतीयन्त इति सर्वरात्रिरश्मिसम्बन्धाविरोधः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां रश्म्यनुसार्यधिकरणम् ॥

---

॥ श्रीः ॥

(११) ॥ अथ दक्षिणायनाधिकरणम् ॥

## ॥ अतश्चायनेऽपि दक्षिणे ॥२०॥

दक्षिणायने मृतस्य उपासकस्य ब्रह्मलोकप्राप्तिरस्ति, न वेति संशये, उत्तरायणस्य ब्रह्मलोकमार्गत्वश्रुतेः, भीष्मस्य उत्तरायणप्रतीक्षादर्शनाच्च, नास्तीति प्राप्तावुच्यते—अत एव विद्याफलस्य नियतत्वादेव, दक्षिणायनेऽपि मृतस्य ब्रह्मलोकप्राप्तिर्भवत्येव, उत्तरायणशब्दस्यातिवाहिकदेवतापरतया वक्ष्यमाणत्वाद्भीष्मस्य स्वच्छन्दमृत्युताप्रकटनार्थं कालप्रतीक्षोपपत्तेरिति।

---

ननु—' यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ '—( गी०-८-२३ )

इति कालप्राधान्येनोपक्रम्याहरादिकालविशेषस्मरणात्कथं दक्षिणायने रात्रौ वा मृतानां ब्रह्मलोकप्राप्तिरत आह—

**॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥**

योगसाङ्ख्ये न श्रौते । अतः श्रौतविद्यास्वनियम एवेत्यर्थः । यदि च प्रत्यभिज्ञाबलाच्छ्रुत्यनुरोधेन स्मृतावप्यातिवाहिकपरतयैव व्याख्यानं क्रियते, तदा न विरोधलेश इत्यर्थः ॥

॥ इतिश्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां दक्षिणायनाधिकरणम् ॥

॥ इति श्रीमत्कौशिकगोत्रजलधिचन्द्रश्रीमद्राघवसोमयाजिकुलावतंस श्री(महा)महोपाध्यायश्रीमत्तिरुमलार्थवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

॥ वागेकादशैकविंशतिः ॥

अधिकरणसंख्या—११

सूत्रसंख्या—२१

---

॥ श्रीः ॥

॥ अथ चतुर्थाध्याये तृतीयः पादः ॥

(१) ॥ अथ अर्चिराद्यधिकरणम् ॥

**॥ अर्चिरादिना तत्प्रथितेः ॥१॥**

ब्रह्मलोकप्राप्तिमार्गा अनेके श्रूयन्ते—' तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहः ' ( छा०-५-१०-१ ) इत्यर्चिरादिरेकः । ' स एतं देवयानं पन्थानमासाद्य अग्निलोकमागच्छति (कौ०-१-३) इत्यादिरन्यः । ' यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति ' (बृ०-५-१०-१) इत्यपरः । ' सूर्यद्वारेण ते विरजाः प्रयान्ति'(मु०-१-२-११)इत्यन्यः । 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा०-८-६-५) इति चान्यः । तत्र किं सर्वेऽपि परस्पर-

निरपेक्षा मार्गाः किं वा सर्वविशेषणविशिष्ट एक एव मार्गः, इति संशये, भिन्नप्रकरणस्थत्वात्तद्विद्यफलप्राप्तौ अनेके मार्गा इति प्राप्ते, ब्रूमः—सर्वोऽप्युपासकः अर्चिरादिना एकेनैव मार्गेण ब्रह्मलोकं गच्छति । कुतः ? तत्प्रथितेः । तस्यैव सर्वविद्यासु मार्गत्वेन प्रसिद्धेः । पञ्चाग्निविद्याप्रकरणे 'ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्ति' (बृ०-६-२-१५) इति विद्यान्तरशीलिनामपि अर्चिरादिमार्गश्रवणात् । वाय्वादीनामप्यत्रैव मार्गे उपसंहारसंभवात् । तस्मात्सर्वविशेषणविशिष्ट एक एवार्चिरादिमार्गो, न मार्गभेद इति सिद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अर्चिराद्यधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ वाय्वधिकरणम् ॥

॥ वायुमब्दादविशेषविशेषाभ्याम् ॥२॥

सर्वस्यैकमार्गत्वे स्थिते, मार्गविशेषणानां सन्निवेशक्रमश्चिन्त्यते । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौ०-१-३) इति कौषीतकिनां देवयानः पन्थाः पठ्यते । अर्चिरादिस्तु 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' (छा०-५-१०-१-२) इत्यादिः । तत्र अर्चिरादिमार्गे कौषीतकिसमाम्नातो वायुः निवेश्यो, न वेति संशये, न निवेश्योऽस्योपरि वायुरिति नियामकाभावादिति प्राप्ते, अभिधीयते—

वायुमब्दात् संवत्सरादभिगच्छन्ति गन्तारः । संवत्सरानन्तरं वायुमित्यर्थः । कुतः ? अविशेषविशेषाभ्याम् । 'स वायुलोकं' (कौ०-१-३) इत्यविशेषः । आदित्यपूर्वत्वविशेषविरोधिक्रमान्तराश्रवणमविशेषः । तावन्मात्रमनियामकमिति विशेषश्रवणं—'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ०-५-१०-१) इति । वायुमण्डलं रथचक्रखपरिमाणेन छिद्रितं भवति, तेन छिद्रेण वायुमुल्लङ्घ्य आदित्यं गच्छतीत्यर्थः ।

एवं वाक्यान्तरे वायोरादित्यपूर्वभावविशेषश्रवणात् अर्चिरादौ संवत्सरानन्तरमादित्यादर्वाग्वायुनिवेशो युक्त इत्यर्थः ।

बृहदारण्यके तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' (बृ०-६-२-१५) इति संवत्सरं अपठित्वा तत्स्थाने देवलोकः पठितः । तत्र परस्परोपसंहारे कर्तव्ये, माससंवत्सरयोः बद्धक्रमत्वात्संवत्सरानन्तरं देवलोकः, तदनन्तरमादित्यलोक, इति क्रमो ज्ञेयः । एवं च, देवलोकाद्वायुमिति सूत्रन्तु उचितम् । छान्दोग्यपाठापेक्षया तु 'वायुमब्दात्' इत्युक्तम् । आदित्यपूर्वत्वमात्रे तात्पर्यमिति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वाय्वधिकरणम् ॥

---

॥ श्री : ॥

(३) ॥ अथ वरुणाधिकरणम् ॥

## ॥ तडितोऽधि वरुणः सम्बन्धात् ॥३॥

कौषीतकिसमाम्नातवरुणलोकस्य वायुवद्विशेषप्रमाणाभावात् न तु मार्गे निवेश इति प्राप्ते, प्राह—तडितोऽधि, विद्युदनन्तरं, वरुणो निवेष्टुमर्हति । कुतः ? सम्बन्धात् । तडिदनन्तरं सजलजलदप्रतीतेः, वरुणस्य च अप्पतित्वप्रतीतेः, तडित्सम्बन्धो वरुणस्य । पाठक्रमाच्चेन्द्रप्रजापत्योर्वरुणात्परभावः । 'अन्ते तु बादरायणः' (जै०-सू०-५-२-१९) इति न्यायादपि तडिदन्ते वरुणादीनां निवेशः, अचिरादौ तडितोऽन्त्यत्वात् । इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां वरुणाधिकरणम् ॥

---

॥ श्रीः ॥

(४) ॥ अथ आतिवाहिकाधिकरणम् ॥

## ॥ आतिवाहिकास्तल्लिङ्गात् ॥४॥

अर्चिरादयः किं मार्गचिह्नानि, भोगभूमयो वा, गन्तॄणां नेतारो वेति संशये, चिह्नानि, 'गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो नगरम्' इत्यादिलौकिकवाक्यतुल्यत्वात् । लोकशब्दश्रवणाद्वा, तत्र तत्र लोके कञ्चित्कालं सुखं विश्रम्य गच्छन्तीति प्राप्ते, ब्रूमः—आतिवाहिका मार्गनेतारोऽर्चिरादयः । कुतः ? तल्लिङ्गात् । 'चन्द्रमसो

विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' (छा०-४-१५-५) इत्यमानवविशेषणात् वैद्युतस्येतरेषां मानवपुरुषत्वं गम्यत इति ।

---

ननु लिङ्गमिदं, का प्राप्तिरत आह—

॥ उभयव्यामोहात्तत्सिद्धेः ॥५॥

उभयेषां गन्तॄणामर्चिरादीनां च व्यामोहान्मार्गज्ञानाभावात्, तत्सिद्धेः अर्चिरादीनामातिवाहिकत्वसिद्धेः । अर्चिरादीनामचेतनत्वाद्गन्तॄणां च देहाभावेन संपिण्डितकरणानामस्वातन्त्र्यादर्चिराद्यभिमानिन्यो देवता अतिवाहयन्तीति युक्तम् ।

---

ननु विद्युदनन्तरं अमानवस्यैव आतिवाहिकत्वश्रुतेः वरुणादेरातिवाहिकत्वं न स्यादत आह—

॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥६॥

ततो विद्युदनन्तरं वैद्युतेनैव पुरुषेण ब्रह्मलोकं नेतव्या गन्तारः । तच्छ्रुतेः । 'स एनान्ब्रह्म गमयति' (छा०-५-१०-२) इति तत्पर्यन्तं अमानवपुरुषस्य नेतृत्वश्रवणात् । वरुणादेरपि तदनुकूलाचरणेन आतिवाहिकत्वमविरुद्धम् ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां आतिवाहिकाधिकरणम् ॥

---

॥ श्रीः ॥

(५) ॥ अथ कार्याधिकरणम् ॥

॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥७॥

'स एनान्ब्रह्म गमयति' (छा०-४-१५-६) इत्यर्चिरादिमार्गेण गन्तव्यं ब्रह्म किं परं, उत कार्यमिति संशये, सिद्धान्त एव प्रथममुच्यते—कार्यमेव गतिप्राप्यमिति बादरिराह । कुतः ? अस्य गत्युपपत्तेः । कार्यब्रह्मणो गतेरुपपत्तेः । प्रदेशवत्त्वाद्गन्तव्यत्वं तद्विषयञ्च गमनं उपपद्यते । न तु परब्रह्मणि सर्वगते प्रत्यगात्माभिन्ने गन्तव्यत्वगती सम्भवतः ।

---

॥ विशेषितत्वाच्च ॥८॥

'ब्रह्मलोकान् गमयति' ( बृ०-६-२-१५ ) इत्यादि कार्ये ब्रह्मणि अवस्था-भेदेन बहुवचनेन विशेषणमुपपन्नं, न निर्गुणे अवस्थारहिते ।

---

ननु कथं कार्ये ब्रह्मशब्दो मुख्योऽत आह—

॥ सामीप्यात्तु तद्व्यपदेशः ॥९॥

तुराशङ्कानिवृत्तये । परब्रह्मसामीप्यादपरस्यापि ब्रह्मशब्दव्यपदेशः । परमेव सत्यकामत्वादिविशुद्धोपाधिविशिष्टमुपास्यमपरमित्युच्यते ।

---

ननु 'तयोर्ध्वमायन्नमृतत्वमेति' ( छा०-८-६-६ ) इति, 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' छा०-४-१५-६ ) इति च, मुक्त्यनावृत्त्योः श्रवणं कार्य-ब्रह्मणि न संभवतीत्यत आह—

॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥१०॥

कार्यब्रह्मप्रलये सति तत्रैवोत्पन्नतत्वज्ञानास्सन्तः तदध्यक्षेण हिरण्यगर्भेण सह अतः सगुणात्परं विशुद्धब्रह्म प्रतिपद्यन्ते, इत्येवं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधाना-दङ्गीक्रियते ।

---

॥ स्मृतेश्च ॥११॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥'

इति स्मृतिरप्युक्तमेवानुसरति । प्रतिसञ्चरः प्रलयः ।

---

इदानीं पूर्वपक्ष उच्यते—

॥ परं जैमिनिर्मुख्यत्वात् ॥१२॥

परमेव गतिप्राप्यं जैमिनिराह । कुतः ? मुख्यत्वात् । तत्रैव ब्रह्मशब्दस्य मुख्य-त्वात् । मुख्यग्रहणे संभवति गौणाग्रहणात् ।

---

॥ दर्शनाच्च ॥१३॥

'तयोर्ध्वमायन्नमृतत्वमेति' ( छा०-८-८-६) इति गतिपूर्वकममृतत्वं दर्शयति। अमृतत्वं च परस्मिन् ब्रह्मण्युपपद्यते न कार्ये। विनाशित्वात् कार्यस्य।

---

ननु 'प्रजापतेः सभाम्' ( छा०-८-१४-१ ) इत्यत्र सभादिश्रवणात् कार्यविषयो गतिनिश्चयोऽस्त आह—

॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥१४॥

'प्रजापतेः सभां वेश्म प्रपद्ये' ( छा०८-१४-१ ) इति श्रुतेः कार्यविषयः प्रतिपत्त्यभिप्रायः वक्तुं न शक्यते। 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा०-८-१४-१ ) इति परस्यैव ब्रह्मणः प्रकृतत्वात्। शिष्यबुद्धिपरीक्षार्थं सूत्रकारस्य पूर्वोत्तरपक्षव्यत्यासः। अर्थक्रमेण तु पौर्वापर्यं ज्ञेयम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां कार्याधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ अप्रतीकालम्बनाधिकरणम् ॥

॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥१५॥

गतिगन्तव्ये निरूप्य, गन्तृविशेषो निरूप्यते। 'स एनान्ब्रह्म गमयति' ( छा०-५-१०-२ ) इत्यत्र किममानवः सर्वानुपासकान्गमयति, किं वा प्रतीकोपासकव्यतिरिक्तानिति संशये, अविशेषात्सर्वग्रहणप्राप्तावुच्यते—अप्रतीकालम्बनान्दहराद्युपासकान्नयतीति बादरायणो मन्यते। एवमुभयथा द्वैविध्ये सति दोषाभावात्। कुतो द्वैविध्यं? तत्क्रतुश्च। चो हेतौ। यतः 'तं यथा यथोपासते तदेव भवति' इति श्रुतौ ब्रह्मभावनारूपः क्रतुः ब्रह्मप्राप्तिहेतुः व्यपदिश्यते। न हि प्रतीकोपासकानां ब्रह्मक्रतुरस्ति। अतो द्वैविध्योपपत्तिः।

---

## ॥ विशेषश्च दर्शयति ॥२६॥

नामादिप्रतीकोपासनेषु फलविशेषञ्च दर्शयति—'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा०-७-१-५) इति शब्दशास्त्रादि-लक्षणे नामधेये स्वातन्त्र्यं भवतीत्यर्थः। एवं फलान्तरश्रवणादपि न ब्रह्मलोकावाप्तिः प्रतीकोपासकानाम्।

ननु पञ्चाग्निविद्यायां प्रतीकोपासकानामपि 'स एनान्ब्रह्म गमयति' (छा०-५-१०-२) इति ब्रह्मप्राप्तिः श्रूयत इति चेत्। न। यत्राहत्यवचनं नास्ति, तत्र तत्क्रतुन्या-येन अप्रतीकालम्बनान्नयतीति प्रतिपत्तव्यमित्यभिप्रायात्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अप्रतीकालम्बनाधिकरणम् ॥

॥ इति श्री(महा)महोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंसश्रीम-त्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चतुर्थाध्यायस्य तृतीयः पादः ॥

॥ अर्चिरादिना षट् षोडश ॥

अधिकरणसंख्या—(६)

सूत्रसंख्या—(१६)

---

॥ श्रीः ॥

॥ अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥

(१) ॥ अथ सम्पद्याविर्भावाधिकरणम् ॥

## ॥ सम्पद्याविर्भावः स्वेनशब्दात् ॥१॥

आद्यपादे, निर्गुणविद्याफलस्य एकदेशो बन्धनिवृत्तिर्निरूपिता। द्वितीये, सगुण-निर्गुणविद्याफलप्राप्तिशेषत्वेन तद्विदोः उत्क्रान्त्यनुत्क्रान्ती दर्शिते। तृतीये च, सगुण-विद्योपयोगिनो गतिगन्तव्यगन्तृविवेषाः निरूपिताः। इह चतुर्थे, निर्गुणविद्याफलैकदेशान्तरं ब्रह्मभावाविर्भावः सगुणविद्याफलञ्चेश्वरतुल्यभोगभाक्त्वं अवधार्यते।

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनि-ष्पद्यते' (छा०-८-१२-३) इति श्रूयते। सम्यक्प्रसीदति उपाधिशान्ताविति संप्रसादः जीवः। स शरीराभिमानं परित्यज्य, परं ब्रह्म प्राप्य, मुक्तरूपेणावतिष्ठते इति श्रुत्यर्थः।

तत्र किं मुक्तिः स्वर्गादिवत् जन्या, न वेति संशये, फलत्वाविशेषाज्जन्यत्वे प्राप्ते, प्राह—संपद्य, संपद्यत इति श्रुतौ । अथवा, संपदि ज्ञानेन अज्ञाननिवृत्तौ, सच्चिदानन्दस्वरूपाविर्भाव एव विवक्षितो, न तु कस्यचिद्धर्मस्योत्पत्तिः । कुतः ? स्वेनशब्दात् - स्वेनेति शब्दात् । स्वेनेति पूर्वसिद्धमेव रूपमनुवदति । न तु स्वकीयपरत्वम् । यदेवागन्तुकं तत् सर्वं स्वकीयमेवेति विशेषणवैयर्थ्यात् । आगन्तुकधर्मनिरासेन तु स्वेनेति विशेषणं सार्थम् । अविद्यया पूर्वं तिरोहितं स्वस्वरूपम् । इदानीं तन्निवृत्त्या आविर्भूतं स्वरूपमिति ।

---

ननु पूर्वसिद्धा चेन्मुक्तिः संसारावस्थातः को विशेषोऽत आह——

**॥ मुक्तः प्रतिज्ञानात् ॥२॥**

संसारदशायां अविद्यया बद्धः, ज्ञानेन तु तन्निवृत्तौ शुद्धो मुक्त इत्ययं विशेषः । कुतः ? प्रतिज्ञानात् । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा०-८-९-३,८-१०-४, ८-११-३ ) इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छा०-८-१२-१ ) इति चोपन्यस्य, 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा०-८-१२-३) इत्युपसंहारान्मुक्तत्वनिश्चयइत्यर्थः ।

---

ननु ज्योतिश्शब्दस्य भौतिके रूढत्वात्, कथं तत्सम्पत्त्या मुक्तिरत आह—

**॥ आत्मा प्रकरणात् ॥३॥**

'य आत्माऽपहतपाप्मा' ( छा०-८-७-१ ) इत्यात्मप्रकरणात् ज्योतिश्शब्देन अत्र आत्मैवोच्यते, न भौतिकं ज्योतिः । 'तद्देवा ज्योतिषां ज्योतिः' ( बृ०-४-४-१६) इति आत्मन्यपि ज्योतिश्शब्दप्रयोगात् । तस्मान्मुक्तिः पूर्वसिद्धा, नोत्पत्तिमती ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सम्पद्याविर्भावाधिकरणम् ॥

---

॥ श्रीः ॥

(२) ॥ अथ अविभागेन दृष्टत्वाधिकरणम् ॥

**॥ अविभागेन दृष्टत्वात् ॥४॥**

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पन्नः किं परस्मादन्यः, पर एव वेति संशये, 'ज्योतिरुपसंपद्य' (छा०-८-१२-३ ) इति एकस्यैव कर्मकर्तृत्वविरोधाद्भेदे

प्राप्ते, आह—अविभागेन, परमात्मना सहाभिन्न एवावतिष्ठते । कुतः ? 'तत्त्वमसि' (छा०-६-८-७) 'अहं ब्रह्मास्मि' (बृ०-१-४-१०) 'न तु तद्द्वितीयमस्ति' (बृ०-४-३-२३) इत्यादिश्रुतिष्वभेदस्यैव दृष्टत्वात्, न च कर्मकर्तृत्वविरोधः । ज्योतिरुपसम्पद्य' इति वाक्यस्य त्वंपदार्थशुद्धिविषयत्वात्, तत्समये च कल्पितभेदसत्त्वेन कर्मकर्तृत्वाविरोधात् । 'स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यं वाक्यार्थदशापन्नं मुक्तस्वरूपं प्रतिपादयति, न च तस्य ब्रह्मणा सह भेदः । 'स उत्तमः पुरुषः' (छा०-८-१२-३) इति तच्छब्देन मुक्तस्वरूपं परामृश्य उत्तमपुरुषब्रह्मत्वाभिधानात् । तस्मान्न मुक्तो ब्रह्मभिन्नः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अविभागेन दृष्टत्वाधिकरणम् ॥

---

॥ श्रीः ॥

(३) अथ ब्राह्माधिकरणम् ॥

## ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥

मुक्तस्वरूपं सविशेषं, निर्विशेषं वेति संशये, जैमिनिः ब्राह्मेण ब्रह्मसम्बन्धिना ऐश्वर्यरूपेण मुक्तस्तिष्ठतीत्याह । कुतः ? उपन्यासादिभ्यः । उपन्यास उद्देशः । आदिशब्देन अज्ञातज्ञापनव्यपदेशौ विवक्षितौ । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः' (छा०-८-७-१) इत्युद्देशः । यच्छब्दोपबन्धात् अन्यतः प्राप्तमात्मानं इहोद्दिश्य 'सोऽन्वेष्टव्यः' इत्यादिर्विधीयते । 'स तत्र पर्येति जक्षत्क्रीडन्नममाणः' (छा०-८-१२-३) इति फलरूपस्य ऐश्वर्यस्याज्ञातस्य ज्ञापनम् । यच्छब्दाभावान्नायमुद्देशः । 'सर्वज्ञः' 'सर्वेश्वरः' इत्यादिर्व्यपदेशः । यद्यप्ययमप्युद्देश एव 'यस्सर्वज्ञः' (मु०-१-१-९) इत्याद्युद्दिश्य 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति विधेयान्तरसद्भावात्, तथापि उदाहरणबहुत्वाभिप्रायं बहुवचनं द्रष्टव्यम् । एवं मुक्तप्राप्यस्य सगुणत्वात् मुक्तस्यापि सविशेषत्वमिति ।

---

## ॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥

चितितन्मात्रेण चैतन्यमात्रस्वरूपेण मुक्तोऽवतिष्ठते, इत्यौडुलोमिराह । कुतः ? तदात्मकत्वात् । ब्रह्मणश्चैतन्यमात्रात्मकत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०-२-१) 'एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ०-४-५-१३) इत्यादिश्रुतिभ्यः । सत्यकामत्वादीनामौपाधिकत्वेन चैतन्यस्वरूपत्वाभावात् । अतो

जक्षणादिकीर्तनं दुःखाभावाभिप्रायम् । अद्वितीये द्वितीयसाध्यक्रीडादीनामसम्भवात् । तस्मान्निरस्ताशेषप्रपञ्चेन बोधात्मनाभिनिष्पद्यत इति ।

## ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥७॥

एवमपि निर्विशेषस्वरूपत्वेऽपि, उपन्यासादिभ्योऽवगतस्य पूर्वस्य पूर्वोक्तस्य सत्यसङ्कल्पत्वादिलक्षणस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानात् बद्धपुरुषान्तरदृष्ट्या मुक्तेऽपि सम्भवात्सगुणनिर्गुणश्रुत्योरविरोधं बादरायणो मन्यते । औडुलोमिस्सत्यकामत्वादीनां तुच्छत्वं अङ्गीकरोति । बादरायणस्तु व्यावहारिकत्वमिति विवेकः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां ब्राह्माधिकरणम् ॥

॥ श्रीः ॥

(४) ॥ अथ सङ्कल्पाधिकरणम् ॥

## ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥८॥

एवमधिकरणत्रयेण विद्याफलं विचार्य, अधुना आपादपरिसमाप्तेः सगुणविद्याफलप्रपञ्चः क्रियते । तत्र अर्चिरादिमार्गेण ब्रह्मलोकं गतस्य उपासकस्य भोग्यवस्तुसृष्टौ प्रयत्नान्तरसहितः सङ्कल्पो हेतुः, उत सङ्कल्पमात्रमिति संशये, लोकदृष्टान्तेन प्रयत्नान्तरसहितस्यैव सङ्कल्पस्य हेतुत्वप्राप्तावुच्यते—सङ्कल्पादेव भोग्यवस्तूनामुत्पत्तिः । न तु साधनान्तरापेक्षा । कुतः ? तच्छ्रुतेः । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा०-८-२-१) इत्यादिना सङ्कल्पमात्रादेव भोग्यवस्तूत्पत्तिश्रुतेः । एवकारेण साधनान्तरनिरासात् ।

न च साङ्कल्पिकत्वे मनोरथसृष्टिवद्भोगसाधनत्वं, अमोघसङ्कल्पत्वेन सृष्टिसमर्थत्वात् । वाचनिकेऽर्थे सामान्यतोदृष्टासम्भवात् ।

## ॥ अत एव चानन्याधिपतिः ॥९॥

अत एव च अवन्ध्यसङ्कल्पत्वादेव, विद्वान् अनन्याधिपतिः । न विद्यते अधिपतिर्नियन्ता अन्योऽस्येति स्वतन्त्र इत्यर्थः । अत एव श्रुतिः 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा०-८-१-६) इति ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां सङ्कल्पाधिकरणम् ॥

॥ श्रीः ॥

(५) ॥ अथ अभावाधिकरणम् ॥

## ॥ अभावं बादरिराह ह्येवम् ॥१०॥

मुक्तस्य सङ्कल्पसाधनत्वेन मनस्सत्वेऽपि अन्यानि इन्द्रियाणि शरीरं च सन्ति, न वेति संशये, तेषामभावं बादरिर्मन्यते । हि यस्मादेवमाह श्रुतिः—'मनसैतान्कामान्पश्यन्रमते । य एते ब्रह्मलोके' (छा०-८-१२-५-६) इति । मनसेति विशेषणात् शरीरेन्द्रिययोरभावः प्रतीयते ।

---

## ॥ भावं जैमिनिर्विकल्पामननात् ॥११॥

शरीरेन्द्रियाणां भावं जैमिनिराह । कुतः ? विकल्पामननात् । 'स एकधा भवति त्रिधा भवति' (छा०-७-२६-२) इत्यादिना अनेकधाभावाम्नानात् । स च एकस्मिन्नात्मनि शरीरभेदेनैव समंजसः । विकल्पः अनेकधाभावः । यद्वा, त्रित्वपञ्चत्वादिनानेकधाभावो विकल्पः ।

---

## ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥

अतः, उभयश्रुतिदर्शनादुभयविधत्वं बादरायणो मन्यते । यदा सशरीरतां संकल्पयति, तदा सशरीरता, यदा अशरीरतां, तदा अशरीरतेति । यथा द्वादशाहस्य यजतिचोदनया अहीनत्वं, उपायिचोदनया सत्रत्वमेवमत्राप्युभयविधत्वमिति ।

---

## ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥

यदा शरीरं नेच्छति, तदा तन्वभावे सति, सन्ध्यवत्स्वप्नवत् मनसैव भोगानुभवः । तथैव उपपत्तेः ।

---

## ॥ भावे जाग्रद्वत् ॥१४॥

शरीरसद्भावे जाग्रद्वद्भोगः ।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां अभावाधिकरणम् ॥

---

॥ श्रीः ॥

(६) ॥ अथ प्रदीपाधिकरणम् ॥

**॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥**

'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा ' (छा०-७-२६-२) इत्यनेकदेहधारणपक्षे, देहान्तराणि दारुयन्त्रवत् निरात्मकानि, उत अस्मदादिवत्सात्मकानीति संशये, आत्ममनसोरेकत्वान्निरात्मकानीति प्राप्ते, ब्रूमः— यथा एकस्मात्प्रदीपादुत्पन्नानां प्रदीपानां अनेकापवरकादिनिवेशात्तत्प्रकाशकत्वं, तथा एकस्यापि विदुषः सङ्कल्पवशान्निर्मितानां अनेकेषां मनसां देहान्तरेषु आवेशः निवेशः, मनोभेदात्तदवच्छिन्नात्मनामपि तत्र प्रवेशः। यद्यप्यात्मा एकः, तथाऽपि मनोभेदाद्भेदः। अतस्सर्वाणि शरीराणि सात्मकानि समनस्कानि भोगसाधनानि। तथा हि दर्शयति—' एकधा भवति त्रिधा ' ( छा०-७-२६-२ ) इत्यादि।

---

ननु मुक्तस्य अनेकधाभावाङ्गीकारे, ' तत्केन कं विजानीयात् ' ( बृ० ४-५-१५ ) इति श्रुतिविरोधोऽत आह—

**॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥१६॥**

स्वाप्ययः सुषुप्तिः। संपत्तिः विदेहकैवल्यम्। तयोरन्यतरापेक्षया विशेषज्ञानाभावः आम्नायते। हि यस्मात्तदधिकारेणैव इदं आविष्कृतं प्रकटीकृतम्। ' भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति ' ( बृ०-२-४-१४ ) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ' ( बृ०-४-५-१५ ) इत्यादि सम्पत्तौ। ' यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ' ( बृ०-४-३-१९ ) ( माण्डू०-५ ) इत्यादि सुषुप्तौ। सगुणविद्याफलं तु स्वर्गादिवदवस्थान्तरम्। तत्रैतदैश्वर्यमुपवर्णितमिति न कश्चिद्विरोधः।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां प्रदीपाधिकरणम् ॥

---

॥ श्रीः ॥

(७) ॥ अथ जगद्व्यापारवर्जाधिकरणम् ॥

**॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१७॥**

ब्रह्मलोकगतानां जगत्सृष्ट्यादिकर्तृत्वमस्ति, न वेति संशये, अप्रतिहतसङ्कल्पत्वादस्तीति प्राप्ते, उच्यते—जगद्व्यापारवर्जमीश्वरसमानैश्वर्यं उपासकानाम्। कुतः?

सृष्ट्यादिनिरूपणे ईश्वरस्यैव प्रकरणादितरेषामसन्निहितत्वाच्च । अनेकेश्वरत्वे परस्परविरुद्धसङ्कल्पतया एकमपि कार्यं न सिद्ध्येत् ।

---

॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

'आप्नोति स्वाराज्यम्' (तै०-१-६-२) 'सर्वेऽस्मै देवा बलिमावहन्ति.' (तै०-१-५-३) 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा०-८-१-६) इति प्रत्यक्षोपदेशादीश्वरसमानैश्वर्ये सति, जगद्व्यापारो भविष्यतीति चेन्न । आधिकारिकमण्डलस्थोक्तेः । आधिकारिकस्य ब्रह्मणः मण्डले लोके उपासकानां स्थित्युक्तेः तदधीनमेव स्वाराज्यादिकं, न स्वतन्त्रमित्युक्तन्यायात् जगद्व्यापारवर्जमैश्वर्यं ईश्वराधीनं तेषामिति कल्प्यते, इति । सवितृमण्डलं वा विशेषाभिव्यक्तिस्थानमीश्वरस्याधिकारिकमण्डलम् । तत्राप्युपासकानां ईश्वरायत्तमेव स्वाराज्यमिति तात्पर्यम् ।

---

॥ विकारावर्ति च तथा हि स्थितिमाह ॥१९॥

विकारावर्त्यपि नित्यमुक्तं पारमेश्वरं रूपं, न तु केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा हि अस्य द्विरूपां स्थितिमाह श्रुतिः—'एतावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥' (छा०-३-१२-६) इति । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं पारमेश्वरं रूपं अनवाप्य सगुण एवावतिष्ठन्ते सगुणोपासकास्तद्वत्सगुणेऽपि नित्यसिद्धेश्वरवन्निरवग्रहमैश्वर्यं अनवाप्य सावग्रहे एवावतिष्ठन्ते, इत्यभिप्रायः ।

---

॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥

विकारावर्तित्वं परमेश्वरस्य श्रुतिस्मृती दर्शयतः । श्रुत्यन्तराभिप्रायेणेदं सूत्रम् । 'न तत्र सूर्यो भाति' (का०-५-१५) (श्वे०-६-१४) (मु०-२-२-१०) इति श्रुतिः । 'न तद्भासयते सूर्यः' (गी०-१५-६) इति स्मृतिः ।

---

॥ भोगमात्रसाम्यलिङ्गाच्च ॥२१॥

नित्यसिद्धेश्वरेण सह भोगमात्रमेव समानमुपासकानां इति श्रूयते—'यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' इति । यथा हिरण्यगर्भस्य तल्लोकस्थानि भूतानि भोगसाधनानि, एवमुपासकस्यापीत्यर्थः । अतोऽपि जगद्व्यापारवर्जननिश्चयः ।

---

नन्वेवमैश्वर्यस्य सातिशयत्वे अन्तवत्त्वात्पुनरावृत्तिः स्यादत आह—

॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥२२॥

'तयोर्ध्वमायन्नमृतत्वमेति' (छा०-८-६-६) इत्यादिशब्दादनावृत्तिश्रुतेः। 'कार्यात्यये तदध्यक्षेण' (ब्र०-सू०-४-३-१०) इत्यस्मिन्सूत्रे तदुपपादनाच्च नावृत्तिशङ्केत्यर्थः। सम्पूर्णसूत्राभ्यासश्शास्त्रपरिसमाप्तिद्योतकः इति सर्वमतिमङ्गलम्।

॥ इति श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां जगद्व्यापारवर्जाधिकरणम् ॥

अन्नंभट्टेन वेदान्तसूत्रवृत्तिर्मिताक्षरा।
कृता तया साम्बमूर्तिः प्रीयतां परमेश्वरः ॥

॥ इति श्री(महा)महोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीमद्राघवसोमयाजिकुलावतंसश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ श्रीब्रह्मसूत्रवृत्तौ मिताक्षरायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

॥ संपद्य. सप्त द्वाविंशतिः ॥

अधिकरणसंख्या----(७)

सूत्रसंख्या—(२२)

॥ अथात एकनवत्युत्तरशतं पञ्चपञ्चाशदधिकपञ्चशतम् ॥

समुदिताधिकरणसंख्या—(१९१)

समुदितसूत्रसंख्या—(५५५)

॥ शुभं भूयात् ॥

॥ शान्तिः। शान्तिः। शान्तिः ॥

